सुदरं काश्यप कर्पासानां पटपिलोतिकसंघाटी मृदुकादयं काश्यप कर्पासानां पट-
पिलोतिकसंघाटी मक्षिनादयं काश्यप कर्पासानां पटपिलोतिकसंघाटी सुखमादयं
काश्यप कर्पासानां पटपिलोतिकसंघाटी तनुकादयं काश्यप कर्पासानां पटपिलोति-
कसंघाटी सक्ष्णादयं काश्यप कर्पासानां पटपिलोतिकसंघाटी सुकुतिकादयं का-
5 श्यप कर्पासानां पटपिलोतिकसंघाटी प्रवरादयं काश्यप कर्पासानां पटपिलोतिकसं-
घाटी शोभनादयं काश्यप कर्पासानां पटपिलोतिकसंघाटी सर्वांगनादयं काश्यप
कर्पासानां पटपिलोतिकसंघाटी ॥ स खल्वहमायुष्मन् आनन्द भगवन्तमेतदुवाच ॥
लाभा मे भगवन्सुलब्धा भवेत् यन्मे भगवान्कर्पासानां पटपिलोतिकसंघाटी प्रति-
गृह्णीय ॥ एवमुक्ते आयुष्मन् आनन्द भगवान्मम एतदुवाच ॥ इच्छसि पुनः त्वं
10 काश्यप तथागतस्य सन्तिके शाणानां पांशुकूलानां संघाटीं धारयितुं ॥ एवमुक्ते-
हं आयुष्मन् आनन्द भगवन्तमेतदुवाच ॥ लाभा मे भगवन्सुलब्धा भवेत् यन्मे
भगवां शाणानां पांशुकूलानां संघाटीं ददेय ॥ अदासि खलु मे आयुष्मन्नानन्द
भगवां शाणानां पांशुकूलानां संघाटीं प्रतिगृह्णे अहमायुष्मन्नानन्द भगवतो शा-
णानां पांशुकूलानां संघाटीं ॥ यदि खल्वायुष्मन्नानन्द सम्यग्वदमाना वदेन्सुः
15 भगवतो श्रावको शास्तु संमुखं शाणं पांशुकूलं प्रतिगृहे एवमेव ते सम्यग्वदमाना
वदेन्सुः । तत्कस्य हेतोः । अहमायुष्मन्नानन्द शास्तु संमुखं शाणपांशुकूलानां प्र-
तिगृहीता[276b]रो श्रावको ॥ यत्तदानन्द सम्यग्वदमाना वदेन्सुः भगवतो पुत्रो

kâçyapa karpâsânâṁ(M °çânâṁ) paṭa° M °karpâçânâṁ pa° çlakshṇada° karpâçânâṁ ço° BM °bhanâdayaṁ(M °daṁ) kâçyapa karpâsâ(M °çâ)nâṁ paṭapilotikasaṁ(B °nâṁ saṁ)ghâ°.

7. M °haham ânandam âyushmâṁ bhagavaṁtam e° B °yushmân â°. — 8. M °bhagavat sulabdhâ° bhavetuḥ yaṁ me bhagavâ° B °bhavetuḥ | yan te bhagavan ka° M °rpâçânâṁ° BM °gṛihneya ‖. — 9[1]. BM °yushmân â°. — 9[2]. BM °çyapas tathâ° M °ntike keçaçyânâṁ pâṁsukûlânâṁ saṁ° B °kûlaṁ saṁ° M °ghâṭṭ dhâ°. — 10. M °kte â° BM °yushmân â°.

11. M °vat sulabdhâ bhavetuḥ yaṁ me bhagavan keçânâ° B °vetuḥ | yan me bhagavâṁ keçânâ° BM °deya | (M °yâ) adâsi(M °si |) khalvaham â(B °m âyushmân âyunde karpâsâ(M °çâ)nâṁ paṭapiloti(M °tî)kasaṁghâṭiṁ pratigṛihna(M °hne |) âyushmân ânanda bhagavâṁ karpâsâ(M °vân kârpâçâ)nâṁ paṭapilotikasaṁghâṭiṁ adâ°. — 12. BM °si | kha° M °me ânanda âyushmâṁ bhagavân kaçmaçânâṁ pâṁ° gṛihnate | a° B °gṛihne | aham ânandam âyushmaṁ bha° M °yushmân â° vato kaçmaçânâṁ pâṁ° B °to çânâṁ pâṁ° BM °çukulâ° ṭiṁ samo | (M °samo ‖) kha°. — 14. M °yushmân â° B °gvadamânâ° BM °detuḥ bha° çrâvaka çâ° M °khaṁ keçânaṁ° BM °kûlânâṁ pra° M °tigṛihe | ayam evaṁ te° B °he | ayam e° M °damâna va° BM °detuḥ ‖.

16[1]. M °hetor aha°. — 16[2]. M °yushmân âna° khaṁ keçânâṁ pâṁçukulânâṁ° B °çâṇam pâṁ° M °tigṛihe° vakâṁ |. — 17. BM °detuḥ ‖ bha° M °tra osaro mu° jâto dharmayo dharmanirmito dharmadâyadâ sa â° BM °da mama evaṁ(B °sa) te sa° B °detuḥ ‖.

औरस्यो मुखतो जातो धर्मजो धर्मनिर्मितो धर्मदायादो न आमिषदायादो एव-
मेव ते सम्यग्वदमाना वदेन्सुः । तत्कस्य हेतोः । अहमायुष्मन् आनन्द भगवतो
पुत्रो औरस्यो मुखतो जातो धर्मजो धर्मनिर्मितो धर्मदायादो न आमिषदाया-
दो ॥ कुंजरं पि सो आयुष्मन् आनन्द षष्टिहायनं तालपत्रिकाये छादितव्यं मन्येय
यो मे तिस्रो विद्या षडभिज्ञा बलवशीभावं छादयितव्यं मन्येया । नदीयो पि 5
सो आयुष्मन् गंगाये स्रोतं रजमुष्टिना आवारितव्यं मन्ये यो मे तिस्रो विद्या षडा-
भिज्ञां बलवशीभावं छादयितव्यं मन्ये । वातं पि सो आयुष्मन्नानन्द जालेन
बन्धितव्यं मन्ये यो मे तिस्रो विद्यां षडाभिज्ञां बलवशीभावं छादयितव्यं मन्ये ।
आकाशं पि सो आयुष्मन् आनन्द पांसुना कर्तव्यं मन्ये यो मे तिस्रो विद्या षडा-
भिज्ञा बलवशीभावं छादयितव्यं मन्ये ॥ यस्य पुनः खलु आयुष्मन्नानन्द एतेषां 10
पंचानां भिक्षुशतानां स्यादपि कांक्षा विचिकित्सा वा सो प्रश्नं पृच्छतु अहं प्रश्नस्य
व्याकरणेन एवमेतं सम्यक्सिंहनादं नदामि ॥ एवमुक्ते ते भिक्षू आयुष्मन्तं महाका-
श्यपमेतदुवाच ॥ यस्य खलु पुनरायुष्मन्महाकाश्यप स्यात्कांक्षा वा विचिकित्सा
वा सो आयुष्मन्महाकाश्यप प्रश्नं पृच्छेया संमोदेम च वयमायुष्मन्महाकाश्यप एवं
च अनुवृत्ता इतो च उत्तरि भूयो इतो च श्रेयो ॥ अथ खलु आयुष्मां महा- 15
काश्यपस्तां भिक्षू धर्म्या कथया संदर्शयित्वा समादापयित्वा समुत्तेजयित्वा संप्र-
हर्षयित्वा उत्थायासनातो प्रक्रमे ॥

अचिरप्रक्रान्तो च आयुष्मान्महाकाश्यपो सर्वावन्तेन कालेन नानाप्रलोकितेन
स्थूलनन्दां भिक्षुणीं अवलोकेति अपि नाम चित्तं प्रसादेय तस्य चेदं शकटचक्र-

2¹. M °hetor a° B °toḥ a°. — 2². BM °yushmān â° M °tro maro mukhato dharmajo dha° B °jâto dharmajño dha° M °rmadâyâdo nâ â° BM °do kuñ°. — 4. BM °yushmān â° M °sha-shṭihâ ° vyaṁ anyeya | yo° B °vyaṁ anye ca yo ° shaṭvâbhi° BM °balaṁ va° B °çibhâvaḥ cchâ° M °bhâvaḥ cchâ ° vyaṁ anye | âkâ° (l. 9) B °vyaṁ anyeyâ na°. — 5. B °yushmān gaṁgâye çrotaṁ ° nâ âcaritavyam anye yo ° shaṭvâbhi ° vaṁ ca cchâ ° tavya manye vâ°.

7. B °tavya manye yo ° shaṭvâbhijñânaṁ balaṁ vaç ° tavya manye | . — 9. BM âkâçe pi ° kartavya manye° B °shaṭvâbhi° BM °balaṁ va° M °çibhâvaḥ cchâ ° tavya manyate | B °tavya manye | . — 10. BM °yushmānn â° B °vicikitsâ° M °pricchati | a° B °na etam etaṁ saṁmya° M °evaṁm e° BM °nadâti | .

12. M evaṁm a°. — 13. M °çyapa syâṁ kâṁkshâ vicikitsâyâ sa vâ so â° B °kitsayâ vâ so° BM °yushmān ma ° bhâvema sa va ° M °vayaspa âyu° B °shmān kâçya° BM °pa mâ e° M °vṛitta | ato ca uttari ato ca çreyo | B °vṛito ato ca uttari bhûyo ano ca uttari ato ca çreyo | . — 15. M °bhikshunâṁ karmapathayâ°.

18. BM °çyapo(M °po) sarvantaṁ tena kâle(B °kâye)na nâ° B °bhikshuṇîṁ° M °kshuṇîṁ avalokiteti | a° B °ti | a° M °praçâdeya ° mâtraṁ prithivîm anuvartitu ca taṁ° B °mâtrâṁ prithivîm anuvartitena ca taṁ sthûlânandâṁ bhikshuṇîṁ ci° M °nandâṁ bhikshuṇî cittâṁ praçâdesi | B °si pra°.

माता पृथिवी अनुपरिवर्त्तें न च सा स्थूलनन्दा भिक्षुणी चित्तं प्रसादेति । प्रदु-
ष्टचित्ता स्थूलनन्दा भिक्षुणी आयुष्मतो महाकाश्यपस्य सन्तिके विवरमदासि
समनन्तरं कालगता च पुनरायुष्मन्ते महाकाश्यपे चित्तमाघातेत्वा अन्यतरस्मिं
महानरके उपपन्ना एवमेतं श्रुयति ॥

5 [२७७] समाप्तं महाकाश्यपस्य वस्तुप्रव्रज्यासूत्रं ॥

राजगृहस्य अर्धयोजने नालन्दग्रामकं नाम ग्रामं ऋद्धो च स्फीतो च समृद्धो
च । तत्र ब्राह्मणो महाशालो आढ्यो महाधनो महाभोगो प्रभूतवित्तस्वापतेयो
प्रभूतधनधान्यकोशकोष्ठागारो प्रभूतजातरूपरजतवित्तोपकरणो प्रभूतहस्त्यश्वगज-
गवेडको प्रभूतदासीदासकर्मकरपौरुषेयो ॥ तस्य दानि ब्राह्मणमहाशालस्य शारी
10 नाम ब्राह्मणी भार्या प्रासादिका दर्शनीया । तस्य दानि शारीये ब्राह्मणीये पुत्रा
धर्मो उपधर्मो शतधर्मो सहस्रधर्मो तिष्यो उपतिष्यो एते सप्त पुत्राः षट् निविष्टाः
सप्तमो उपतिष्यो कनीयसो अनिविष्टको गुरुकुले वेदमन्त्रामधीयति ॥ राजगृ-
हस्य अर्धयोजनेन कोलितग्रामकं नाम ग्रामं ऋद्धो च स्फीतो च समृद्धो च बहुज-
नाकीर्णो च । तत्रापि ब्राह्मणमहाशालो आढ्यो महाधनो महाभोगो प्रभूतध-
15 नधान्यकोशकोष्ठागारो प्रभूतजातरूपरजतवित्तोपकरणो प्रभूतहस्त्यश्वगजगवेडको
प्रभूतदासीदासकर्मकरपौरुषेयो मौद्गल्यायनगोत्रेण ॥ तस्य कोलितो नाम पुत्रो
प्रासादिको दर्शनीयो पण्डितो निपुणो मेधावी । तत्रैव गुरुकुले वेदमन्त्रानधी-
यति । तत्रैव उपतिष्यो अन्यानि च पंचमात्राणि माणवकशतानि ॥ सर्वप्रथमं

1. B °ndâye bhikshûṇiye â° M °ndâye bhikshûṇiya â° BM °si(M °si [) samanantaraṁ kâ° dûmate mahâ° M °çyape cittam âghâtetvâ ° upapannâḥ etthaṁ e° B °nnâ etthaṁ e°. — 5. M °traṁ samâptaṁ ‖.

6. M atha râ° landaṁ nâmam eka grâmaṁ asti ṛi° B °mriddho ca ta°. — 7. B °çâlâ âḍhyo° M °lo âdyo mahâ ° bhoge prabhûtacittasvâ° B °cittasyâpate° BM °çakoshṭâgâ° M °styaçvâgaja° BM °sheyo ta°. — 9. M °sya çâli nâ° BM °nîyâ ta°. — 10. BM tasya dâ° M °çâlîye bra ° ye putro dha ° rmo çatadharmo sa ° shaṭ vinishṭâḥ ° shyo anya anidhishṭako gu° B °anivishṭhako gu° M °mantro dhîyati ‖.

12. B °nnaṁ riddho ca sphî° M °sphîta ca sa° BM °rṇṇo ca ta°. — 14. B °çâlâ âḍhyo° M °lo âdyo mahâdhano° BM °çakoshṭâgâ° M °ro prabhûtarûparaja ° ealakâ pra° BM °sheyâ maudgalyâyana(M °yato)gotreṇa ta°.

16. M °dîyo paṇḍito ni putro me°. — 17. M °le medamantrân dhiya°. — 18ᵃ. M °traivaṁ upa° B °trâni mâṇa° BM °ni sa°. — 18ᵇ. BM sarve pra ° fikoṁ a° B °mantra a° M °ntrân adhi ° yogena ca dinnaḥ âryyasya ca âcâryyasya çuçrushâ° B °çuçrushâ° M °çyadhanasya niryyâ° BM °chatraṁ a° M °pânahaṁ yashṭi° B °yashṭiṁ ka° M °ṇḍaluṁ çikaçânâṁ ‖ B °ṇḍaṁ ‖.

दृष्ट्वा अरतिसंज्ञा उत्पन्ना । सो दानि मौद्गल्यायनो शारिपुत्रं परिदीनमुखवर्णं दृष्ट्वा आह ॥

मनोज्ञ वल्लीस्वरगीतघोषा
विपञ्चिकास्फोटितसार्थनादाः ।
5 शृण्वन्ति शब्दा मधुरा मनोज्ञा
रङ्गे भवां किं परिदीनवक्त्रो ॥
हृष्टस्य कालो न हि शोचितस्य
रमितस्य कालो अरतिं जहाहि ।
शृणोहि संगीतिमिवाप्सराणां
10 हृष्टाननो भोहि मनुष्यनन्दने ॥

अथ खलु शारिपुत्रो माणवो मौद्गल्यायनं माणवमेतदुवाच ॥

एते विषयसंरक्ता विषयाश्च चलाचला ।
भवेषु च द्रव्येषु च का रतिर्बालबुद्धिनां ॥
अचिरं मुनिस्मा सर्वे अतृप्ता कामलोलुपाः ।
15 अस्तगता गमिष्यन्ति मृता अक्षपरायणाः ॥
तस्ये संज्ञा न रमेति मौद्गल्यायन न मे रती ।
विपुला प्रतिभा चैव भाविता मतिया रतिः ॥
समयो खु धर्मं चरितुं नरकिन्नरा सुरासुरमनुचरा पि ।
कामरतीभिर्मोचिता अतृप्तमनसा गता विलयं ॥
20 यो वने कायविवेकरतो अधिगच्छे मद्कालोपगतो ।

1. M atha man° B °maudgalyāyano çāliputraṁ paridī° M °lyāyana çāliputra āha ‖. — 3. M °jñatatrasu ° ṭika āryyanā° B °ṭika āryanānā |. — 5. M çrūyanti ça° BM °jñā raṅge bhavāṁ kiṁ(M °vā ki) pa°.

7. B hṛishṭasya kā° M hṛishṭasya kā° jahohi ‖. — 9. M °m iva apsa° BM °hṛishṭā narā(M °rāuyā)sya ma° B °nushena nandano ‖ M °ndano ‖.

11. BM °çāliputro ° maudgalyāyanamāṇava°. — 12. M °çca calācalāḥ |. — 13. M calesha dra° B °veshu dravyeshu kā° M °rati bā° BM °nāṁ a°. — 14. BM °cirā munisa (M °sa ?) sarve° M °lupā |. — 15. M vyasanagyā gami°.

16. B etam me° M etaṁ me° BM °maudgalyāyana(B °ṇa) me rati(M °ti |) vi°. — 17. B °pratibhārikā ramati | yo sa ° M ° bhāvitā matiyo ra °. — 18. M samayeshu ça dharmaçaraṇaṁ cari° B °rmaṁ caraṇaṁ cari° M °nnaraḥ ‖ surāsurānarāḥ pa B °rāsuramanucari pi kā°. — 19. B °ratibhi lili° M °ratibhirlilitāḥ | a° M °gatāçca vi° BM °yaṁ samayo kha (M °yeshu) dharmaṁ caraṇaṁ(M °ṇa) caritaṁ yo°. — 20. BM yaṁ(M °jan)vane ° yo kāmavivekarato adhi(M °toḥ dhi)gacchati (B ° ti ‖) madakāla(M °ro)pagatā spṛ°.

स्पृहयन्ति तस्य देवा पि मरुचीर्णं हि दुष्करं चरितं ॥
समानं सुखदुःखेषु रतीषु अरतीषु च ।
यं नैमित्ता प्रशंसन्ति सो हं शारिसुतो भवे ॥

सो दानि शारिपुत्रमाणवको तं मौद्गल्यायनमाणवकमामन्त्रयति ॥ प्रव्रज्या मे अभिप्रेता प्रव्रजिष्यामि ॥ मौद्गल्यायनो आह ॥ यं भवतो इष्टं तमस्मा[278a]-पि इष्टं अहमपि प्रव्रजिष्यामि ॥ मौद्गल्यायनो आह ॥

या गती भवतो इष्टा अस्माकमपि रोचति ।
त्वया सार्धं मृतं श्रेयं न च जीवितं त्वया विना ॥

तेन खलु पुन समयेन राजगृहे नगरे संजयी नाम वैरटीपुत्रो परिव्राजको पंचाशपरिवारो परिव्राजकारामे प्रतिवसति ॥ ते दानि शारिपुत्रमौद्गल्यायन-माणवका परिव्राजकारामं गत्वा संजयिस्य वेरटिकापुत्रस्य परिव्राजकस्य सकाशे परिव्राजकप्रव्रज्यां प्रव्रजिता ॥ शारिपुत्रेण सप्ताहप्रव्रजितेन सर्वाणि परिव्राजक-शास्त्राणि अधीतानि मौद्गल्यायनेनाप्यर्धमासेन सर्वाणि परिव्राजकशास्त्राणि अ-धीतानि ॥ ते दानि आहन्सुः ॥ नायं धर्मो नैर्याणिको तत्करस्य दुःखक्षयाय संवर्तति गच्छाम पृथक्पृथक्स्वाख्यातं धर्मविनयं पर्येषामः यत्र दुःखस्य अन्तक्रिया प्रवर्तति । यो मे प्रथमतरं स्वाख्यातं धर्मविनयं ..... तेन अपरस्य आख्या-तव्यं । ततः सहिता आर्यधर्मविनये प्रव्रजिष्यामः ॥ ते दानि तानि परिव्राज-कशास्त्राणि संगीतीकृत्वा राजगृहं प्रविष्टा अन्येन शारिपुत्रो परिव्राजको अन्येन मौद्गल्यायनो ॥

1. M spṛihanti | ta° BM °sya daçā pi maruji(M °ki)rṇṇehi dushkaram çcaritum sa°. — 2. BM °māna(M °nā |) sukha° M °duḥkheshu aratīshu cāham nai° B °ca ham nai°. — 3. B °mittam praçasanti | so ham çālisuto bhavā so dā° M °mittikam praçamsanti | so ham çāliputro bhavān so dā°. — 4[1]. B °çāliputra māṇavakā tam° M °çālipu māṇavako° BM °maudgalyāyaṇamā° M °kam āramayati | . — 4[2]. M °shyāmīti || . — 5[1]. BM maudgalyā-yana(B °ṇa) āha || . — 5[2]. B °bhagavato° M °bhavata ishṭam ta°.
6. BM maudgalyāyaṇo(M °ṇa) ā°. — 7. B °bhagavato ishṭā 'smākam a° M °ishṭo asmākam abhiro°. — 8. B °rddham amṛitam° M °çreyam na ca° BM °vitam tva°. — 9. M °nāma veraṭiputra° pañcaçataparivā°. — 10. BM °çāliputra maudgalyāyana(B °ṇa)-mā° jayishya vairaṭikaputra°.
12. BM çālipu° M °hapravrajite° BM °maudgalyāyanenāpya(B °ṇenāpyā)rddha°. — 14[2]. B °dharmā nai° M °dharma nairyāṇiko | tatkasyatoradukhakshayāya samvartti° cchā-mi pṛi° B °ryeshāmaḥ° M °antarkriyā°.
16. M °sya khyā°. — 17[1]. B tato sa°. — 17[2]. BM °gītim kṛi° çāliputra(B °treṇa) pa° mauṅga° B °yano || .

तेन खलु पुनः समयेन भगवानन्तरागिरिरिकां यष्टीवने उद्याने यथाभिरन्तं वि-
हरित्वा वेणुवनमनुप्राप्तो तत्रैव विहरति वेणुवने कलन्दकनिवापे महता भिक्षुसं-
घेन सार्धमर्धत्रयोदशभिर्भिक्षुशतैः ॥ अथ खल्वायुष्मानुपसेनो कल्यमेव निवास-
यित्वा पात्रचीवरमादाय राजगृहनगरे पिण्डाय प्रक्रमे ॥ अद्राक्षीत् शारिपुत्रः
5 परिव्राजको आयुष्मन्तं उपसेनं दूरत एवागच्छन्तं प्रासादिकेन अभिक्रान्तप्रतिक्रा-
न्तेन आलोकितविलोकितेन संमिञ्जितप्रसारितेन संघाटीपात्रचीवरधारणेन नागो
विय कारितकारणो अन्तर्गतेहि इन्द्रियेहि अबहिर्गतेन मानसेन स्थितेन धर्मता-
प्राप्तेन युगमात्रं प्रेक्षमाणो दृष्ट्वा च पुनः अतीव मानसं प्रसीदे ॥ कल्याणा
पुनरियं प्रव्रजितस्य ईर्या । यन्नूनाहं तस्य उपसंक्रमेयं ॥ अथ खलु शारिपुत्रो
10 परिव्राजको येनायुष्मानु[278b]पसेनस्तेनोपसंक्रमित्वा आयुष्मता उपसेनेन सार्धं
संमोदनीयां कथां संमोदयित्वा सारायणीयां कथां व्यतिसारेत्वा एकान्ते अस्था-
सि । एकान्तस्थितः शारिपुत्रः परिव्राजको आयुष्मन्तमुपसेनमेतदुवाच ॥ शास्ता
भगवानुत श्रावको ॥ एवमुक्ते आयुष्मानुपसेनो शारिपुत्रं परिव्राजकमेतदुवाच ॥
श्रावको हं आयुष्मं ॥ एवमुक्ते आयुष्माञ्छारिपुत्रो परिव्राजको आयुष्मन्तमुपसे-
15 नमेतदुवाच ॥ किंवादी भवतो शास्ता किमाख्यायी कथं पुनः श्रावकाणां धर्मं
देशयति केथंरूपा चास्य श्रावकेषु अववादानुशासनी बहुलं प्रवर्तनीयं भवति ॥
एवमुक्ते आयुष्मानुपसेनो शारिपुत्रं परिव्राजकमेतदुवाच ॥ अल्पश्रुतो हमस्मि आ-
युष्मन्तं अर्थमात्रं कथेयं ॥ एवमुक्ते शारिपुत्रो परिव्राजको आयुष्मन्तमुपसेन-
मेतदुवाच ॥

20 अर्थेन मह्यं कार्यं किं भोति व्यंजनं बहु ।
अर्थगुरुको ह्यर्थविदो अर्थेनार्थं चिकीर्षति ॥

1. M °traivaṁ vi° BM °ne kala(M °ṇḍa)kani° B °sārddhaṁm arddhatra° M °sārdhe arddhatra°. — 3. B °kālasyai° M °ḥmayeva ni° °re piṇḍāya caritvā pra° B °me a°. — 5. B °kshit | çā° M °t çāliputro pari° M °kena abhiprakrānto prati° tena saṁmiñji° B °tra cīvadhāraṇe° M °ne dṛiptā ca punar atīi° B °side ka°.
8. M kalyāṇāṁ pu° °sya īrshyā | B °sya iryyā | . — 9ᵃ. M yaṁ nūnā°. — 9ᵇ. BM °çāliputra° niyāṁ kathā saṁmoda(M °dana)yitvā sārā(M °çālā)paṇīyāṁ(M °nīyā) ka° sthāsi e°.
12ᵃ. M °sthito çāliputro pa° B °çālipu° M °mna eta°. — 12ᵇ. B °n utā çrā° M °n utāhi çrā°. — 13. M °çālipu°. — 14ᵇ. M °n çāliputraḥ pari° B °ko āyushmam upa°. — 15. M °khyāhi kathaṁ punaḥ | çrāvakānāṁ dha° B °yati kaṁrū° M °pā cāsya° B °rttanīye bha°.
17ᵃ. M °senaḥ çālipu°. — 17ᵇ. BM °to haṁ asmiṁ ā°. — 18. M °çālipu° B °ālmam upa°. — 20. M °kiṁ hoti vyañjanakaṁ subahukaṁ artha° B °janaṁ subahukaṁ pi a°. — 21. BM °ruko hi arthavijño artha° M °rthaṁ vicīryati B °rshati va°.

एवमुक्ते शारिपुत्रो परिव्राजको मौद्गल्यायनमेतदुवाच ॥ अमृतं मे आयुष्मन्महा-मौद्गल्यायन अधिगतं अमृतगामी च मार्गो ।

यो सो श्रुयति शास्ते पुष्पमिव उदुम्बरं वने बुद्धा ।
उत्पद्यन्ति चिरिक्षणा उत्पन्नो लोकप्रद्योतो ॥

5 एवमुक्ते मौद्गल्यायनो परिव्राजको शारिपुत्रं परिव्राजकमेतदवोचत् ॥ किंवादी आयुष्मं शारिपुत्र शास्ता किमाख्यायी ॥ एवमुक्ते शारिपुत्रो परिव्राजको मौद्गल्यायनमेतदवोचत् ॥

ये धर्मा हेतुप्रभावा हेतुं तेषां तथागतो आह ।
तेषां च यो निरोध एवंवादी महाश्रमणः ॥

10 अथ खलु मौद्गल्यायनस्य परिव्राजकस्य तत्रैव पृथिवीप्रदेशे स्थितस्य विरजं विगतमलं धर्मेषु धर्मचक्षु विशुद्धं ॥ अथ खलु मौद्गल्यायनो परिव्राजको प्राप्त-धर्मो प्रहीणदृष्टिः तीर्णकांक्षो विगतकथंकथो उदग्रमानसचित्तो मृदुचित्तो कर्म-णीयचित्तो निर्वाणनिम्नो निर्वाणप्रवणो निर्वाणप्राग्भारो ॥

अथ खलु मौद्गल्यायनो परिव्राजको शारिपुत्रं परिव्राजकमेतदवोचत् ॥ कहिं
15 आयुष्मं शारिपुत्र शास्ता विहरति ॥ एवमुक्ते शारिपुत्रो परिव्राजको मौद्गल्या-यनं परिव्राजकमेतदवोचत् ॥ एष आयुष्मं शास्ता वेणुवने विहरति कलन्दकनि-वापे महता भिक्षुसंघेन सार्धमर्धत्रयोदशभिर्भिक्षुशतैः गच्छाम संजयिमामन्त्रेत्वा शास्तारं वेणुवने भगवतो सन्तिके ब्रह्मचर्यं चरिष्यामः ॥ एवमुक्ते मौद्गल्यायनो

1[1]. M evamm u° BM °çâlipu° B °ko maungalyâ°. — 1[2]. M °yushmân maungalyâ° B °shmân mahâmaungalyâ° M °dhigata amṛi° BM °rga yo°. — 3. B °so çruya °M °so çrûyati | çâstreshu pu° BM °m ivodu° M °mbaro vano buddhân utpadya ° B °mbaro vane buddhâ u°. — 4. B ° utpadya ° M °çirivyoma utpa° B °çirighâmo u ° lokadyâto ‖. — 5[1]. M °kimmahâmaungalyâ° B °maungalyâ° BM °yano parivrâ° M °çâliputra pari° B °putra pari°. — 5[2]. M °çâliputra ° khyâyi | khyâhi ‖.

6. BM maungalyâ°. — 8. M yo dharmo hetuprabhâvo hetus teshâm° B °yâ hetu teshâm°. — 9. B °di mahaçra° M °mahaçravaṇah ‖. — 10. BM maungalyâ° B °kasya | tatrai° M °traivam pṛi ° khur viçuddham ‖.

11. BM °maungalyâ° M °hînadṛishṭis tîrṇakâmkshâ vigatakathamkartho° B °thamkathâ u° BM °gramanasam citto(M °nto) mṛi° M °rmakaraṇi°. — 14[1]. BM °maungalyâ° M °yano çâlipu°. — 14[2]. M °yushma çâlipu°. — 15. M °çâlipu° BM °maungalyâ° M °m etad uvâca | B °cat eshe°.

16. B °ti | ka° M °laṇḍakanishdye maha° BM °trâ çâstrâ(M °stâ) ve° B °shyâmah e°. — 18. BM °maungalyâ° M °çâlipu°.

परिव्राजको शारिपुत्रं परिव्राजकमेतदुवाच ॥ गच्छ आयुष्मं शारिपुत्र इतो वे-
णुवनं किं मे संजयिना कुदृष्टिना दृष्टेन ॥ शारिपुत्रो तमाह ॥ न हि आयुष्मं
मौद्गल्यायन सो पि अस्माकं संजयी बहूपकारो यं आगम्य वयं गृहातो अभिनि-
ष्क्रान्ता ॥

ते दानि परिव्राजकारामं गत्वा संजयिं आमन्त्रेन्ति ॥ गच्छाम भगवति महा- 5
श्रमणे ब्रह्मचर्यं चरिष्यामः ॥ एवमुक्ते संज[279b]यी परिव्राजको शारिपुत्रमौ-
द्गल्यायनां परिव्राजकानेतदुवाच ॥ मा भवन्तो श्रमणस्य गौतमस्य ब्रह्मचर्यं
चरथ । इमानि मम पंच परिव्राजकशतानि तेषां भवन्तो अर्धपरिहारा ॥ ते
आहन्सुः ॥ न हि गच्छाम वयं भगवति महाश्रमणे ब्रह्मचर्यं चरिष्यामः । स्वा-
ख्यातो भगवता धर्मविनयो विवृतोद्योतो छिन्ना पिलोतिका अलमर्थिकस्य अप्र- 10
मादेन ॥ ते दानि संजयिमामन्त्रेत्वा परिव्राजकारामातो येन वेणुवनमेन प्रयाता
तानि पि पञ्च परिव्राजकशतानि शारिपुत्रमौद्गल्यायनेहि परिव्राजकेहि सार्धं ग-
च्छन्ति ॥ संजयी शारिपुत्रमाह ॥ एकं न दानि तेहि दुवे वा त्रीणि वा अथ वा
चत्वारि अथ सर्वे पंचशता उपतिष्यो आदाय प्रक्रमति ॥

भगवां वेणुवने भिक्षुणामामन्त्रयति ॥ प्रज्ञपेथ भिक्षवः आसनानि एते शा- 15
रिपुत्रमौद्गल्यायना परिव्राजका पंचशतपरिवारा आगच्छन्ति तथागतस्यान्तिके
ब्रह्मचर्यं चरितुं यो मे भविष्यति श्रावकाणामग्रयुगो भद्रयुगो एको अग्रो महा-
प्रज्ञानां अपरो अग्रो महर्द्धिकानां ॥ अद्राक्षीच्छारिपुत्रो परिव्राजको भगवन्तं

1. M °yushman çâlipu° BM °kiṁ māṁ saṁjayanā(M °jayitvā) kā°. — 2[1]. M çâliputra âha ‖. — 2[2]. M °yushman maudgalyā° B °maudgalyāyana so° BM °pi yushmākaṁ saṁjayi bahukaro° M °nishkrānto ‖. — 5[1]. M °vrājaka çâliputraṁ kāmaṁ gatvā sajayi ā° B °vrājakā kāmaṁ ga° BM °mantreti ‖. — 5[2]. M °gavato mahāçravaṇe bra° B °mah a°.

6. M °jayi pa° çâlipu° BM °maudgalyāyanaṁ(B °nāṁ) pa°. — 7. M °çravaṇasya° brahmacaryamaṁ cara°. — 8[1]. M °rdhha parihared ‖ B °rddha parihara ‖. — 8[2]. B °āhaṁsuḥ ‖ M °āhutsu. — 9[1]. M °hāçravaṇe bra°. — 9[2]. BM °khyātā bha° M °dapa pi cchinne pi° B °cchinne pi° M °lothikā alaṁ arthikāsya apracchinna ‖.

11. M °vrājaka ārā° ṇatāḥ tāni pi vañca pari° çâlipu° BM °maudgalyā°. — 13[1]. BM °çâri(M °li)putra âha ‖. — 13[2]. B ekaṁ ca dāni davehi triṇi° M ekaṁ ca dāni tehi ive triṇi vā atha catvāri vā atha sarva°. — 15[1]. B °ne bhikshuṇāmantra° M °ne bhikshuṇām āmantrayate pra°. — 15[2]. M °kshava āsanāni ‖ ete çâlipu° BM °maudgalyā° M °hmacaryya caritum ‖ mā me° B °tum ‖ yo° M °grayugo eko agro prajñā° B °ekā ago mahā° kānāṁ a°.

18. M adrākshīta çâlipu° B °kshīcchāri° M °cchāgacchato svapurana ma° skṛito pari° rmadeça° BM °ntaṁ ‖ ā° M °deu kalyāṇa madhye° svartha sa° BM °kevalaṁ paripū° M °ryyaṁ sapra° BM °kāçayitum ‖ dvā° M °kshaṇehi sa° çītihi anu° M °vā calahi vaiçāradyehi viçāradaṁ ‖ çāntendriye çāntamānasaṁ uttamadamaçamathapāramiprāpto° B °uttamadamaça° BM °indriyehi avarhigatena mānase° M °kshamāne ga° krānam iva

दूरतो एवागच्छन्तं वेणुवने महतीये परिषाये पुरस्कृतः परिवृतो धर्मं देशयन्तं
आदौ कल्याणं मध्ये कल्याणं पर्यवसाने कल्याणं स्वर्थं सुव्यंजनं केवलपरिपूर्णं परि-
शुद्धं पर्यवदातं ब्रह्मचर्यं संप्रकाशयन्तं द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतं
आशीतीहि अनुव्यंजनेहि उपशोभितशरीरं अष्टादशेहि आवेणिकेहि बुद्धधर्मेहि
5 समन्वागतं दशहि तथागतबलेहि बलवां चतुर्हि वैशारद्येहि विशारदो शान्तेन्द्रियो
शान्तमानसो उत्तमदमथशमथपारमिताप्राप्तो नागो यथा कारितकारणो अन-
र्गतेहि इन्द्रियेहि अबहिर्गतेन मानसेन सुस्थितेन धर्मताप्राप्तेन ऋजुना युगमात्रं
प्रेक्षमाणः गुप्तो नागो जितेन्द्रियो ह्रदमिव अच्छो अनाविलो विप्रसन्नो रतनयू-
पमिव अभ्युद्गतो सुवर्णबिम्बमिव भासमानं तेजराशिमिव श्रिया ज्वलमानं द्विती-
10 यं आदित्यमिव उदयन्तं असेचनकं अप्रतिकूलं दर्शनाये मुक्तो मुक्तपरिवारो दान्तो
दान्तपरिवारो तीर्णो तीर्ण[३४०']परिवारो पारगतो पारगतपरिवारो स्थलगतो
स्थलगतपरिवारो क्षेमप्राप्तो क्षेमप्राप्तपरिवारः श्रमणो श्रमणपरिवारः वाहित-
पापो वाहितपापपरिवारो ब्राह्मणो ब्राह्मणपरिवारः श्रोत्रियो श्रोत्रियपरिवारः
स्नातको स्नातकपरिवारः वाहितपापधर्मो वाहितपापधर्मपरिवारः ॥

15 अथ खलु शारिपुत्रमौद्गल्यायना परिव्राजका पंचशतपरिवारा येन भगवांस्ते-
नोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा एकान्ते अस्थासुः ॥ एकमन्ते
स्थितो शारिपुत्रो परिव्राजको भगवन्तमेतदवोचत् ॥

उषितं सागरसलिले उषितं गिरिगहनकाननवनेषु ।
अदर्शनात्सुखं मुने उषिता स्म चिरं कुतीर्थेषु ॥
20 कुमार्गा निवृत्ता पथे ते प्रसन्ना महासार्थवाह प्रतीर्णा ।
तं संसारकान्तारमुत्तीर्य धीराः विरक्ता न रज्यन्ति भूयः ॥

अथ खलु शारिपुत्रमौद्गल्यायना परिव्राजका भगवन्तमेतदुवाच ॥ प्रव्राजेतु

a* B °hradam iva kaccha° M °ccho anāvilo vipra° tanayūtham iva a° mśi tejoriçi° BM °ntam asecanakaṁ a(B °kam a)pratikulaṁ darçanāye | mukto° M °ktaparivāro çāro çāntaparivāro dānto dāntaparivārah tīrṇo tīrṇaparivārah pāragataḥ pāragatapari-vārah stha° sthalagataparivārah kshe° ptaparivārah çravaṇo çravaṇaprāptaparivārah bāhi-tapo bāhitapapariyārah brāhmaṇo°.

15. BM °mauṅgalyāya(M °ye) parivrā° M °yena bhagavān tena° sthātsuh | B °sthāsuh || .

16. M °te çālipu°. — 18. BM ushitaṁ sā° B °raçali° BM °shitaṁ gi° M °rigaha°. — 19. BM °rçanāt tava mu° M °ushitā° BM °sha ku°. — 20. BM °mārganivritta(M °tte ||) yatha(M °thā) tava prasa° M °prakīrṇṇe B °tīrṇṇo saṁ°.

21. BM saṁsā° B °rāḥ || vi° M °jyati bhuyaḥ || B °yaḥ a°. — 22ᵃ. M °çālipu° BM °mau-dgalyā° || . — 22ᵇ. B pravāje° M pravraje° saṁpadyeta° B °deta mān sugа° M °gataḥ || .

मां भगवानुपसंपादेतु मां सुगतो ॥ अथ खलु भगवां शारिपुत्रमौद्गल्यायनप्रमुखां
पंच परिव्राजकशतां एहिभिक्षुकाये आभाषे ॥ एथ भिक्षवः चरथ तथागते ब्रह्म-
चर्यं ॥ तेषां दानि भगवता एहिभिक्षुकाये आभाष्टानां यं किंचि परिव्राजकलिंगं
परिव्राजकगुप्तं परिव्राजकध्वजं परिव्राजककल्पं सर्वेषां समन्तरहितं त्रिचीवरा
सानं प्रादुर्भवेन्सुः सुभका च पात्रा प्रकृतिस्वभावसंस्थितका च केशा ईर्यापथो 5
सानं संस्थिहे सथयापि नाम वर्षशतोपसंपन्नानां भिक्षूणां । एष आयुष्मन्तानां
शारिपुत्रमौद्गल्यायनप्रमुखानां पञ्चशतानां प्रव्रज्या उपसंपदा भिक्षुभावो ॥

अथ खल्वायुष्मां शारिपुत्रो भगवन्तमेतदुवाच ॥ किं भगवं प्रज्ञपेन्तो प्रज्ञपेति
किं तिष्ठमानं तिष्ठति किं विभज्यमानं भज्यति किं पटिसंधेन्तं पटिसंधेति ॥ एव-
मुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवोचत् ॥ चत्वारो शारिपुत्र धातवः प्रज्ञपेन्ता 10
प्रज्ञपेन्ति चत्वारो धातवः तिष्ठमानायो तिष्ठन्ति चत्वारि धातवो भज्यमानीयो
भज्यन्ति चत्वारो पटिसंधेन्ता पटिसंधेन्ति ॥ एवमुक्ते आयुष्मां शारिपुत्रो भगव-
न्तमेतदवोचत् ॥ किंप्रत्यया भ[१८०b]गवं तिष्ठति किंप्रत्यया भज्यति किंप्रत्यया
सन्धेति किंप्रत्यया न प्रतिसंधेति ॥ एवमुक्ते भगवानायुष्मन्तं शारिपुत्रमेतदवो-
चत् ॥ किंप्रत्यया शारिपुत्र जायतीति अविद्याप्रत्यया तृष्णाप्रत्यया कर्मप्रत्यया 15
छंदप्रत्यया शारिपुत्र जायति ॥ किंप्रत्यया शारिपुत्र तिष्ठति । आयुःकर्मप्रत्यया
आहारप्रत्यया शारिपुत्र तिष्ठति ॥ किंप्रत्यया शारिपुत्र भज्यतीति । आयुःक्षया
कर्मक्षया आहारोपच्छेदा छंदप्रत्यया शारिपुत्र भज्यति ॥ किंप्रत्यया शारिपुत्र
प्रतिसंधेति । अविद्याये अप्रहीणत्वात् तृष्णाये अक्षीकृतत्वात् कर्म चास्य भवति

1. BM °gavaṁ çāri(M °ī)putramaudgalyā° M °mukhaṁ paṁ° kāye bhāshāve |. — 2. M ehi bhikshavaç cara°. — 3. M °bhagavatā yehi bhi° °shṭānāṁ yat kiñcit parivrājakaṁ liṁ° °guptiṁ pa° B °guptiḥ pa° BM °lpaṁ | sarva° °rā sanaṁ prā° M °velaṁ | sumbhakāya pā° B °takāra keçā || iryā° M °çā iryyā° °sadyathāpi° çatosapannā°.

6. M °çālipu° BM °maudgalyā° °nāṁ pañcānāṁ (M °nāṁ parivrājakaçatānāṁ) pra°. — 8¹. M °çālipu°. — 8². M °gavān prajñapento° B °gavāṁ pra° BM °tishṭa(M °shṭha)mānaṁ kiṁ vi° M °naṁ bhajyati kiṁ paṭisarvantaṁ paṭisaṁdhaṁdhati | B °jjati kiṁ paṭisaṁvantaṁ saṁpaṭisandhati kiṁ apaṭisaṁdheti ||. — 9. M °çālipu°. — 10. B catvāra çā° jñapento prajñapeti ca° M °çāliputra dhātavo prajñapyento prajñapenti catvāro dhātavo ti° BM °nāyo tishṭhanti (B °nti ||) kiṁpratyayā çāri(M °ī)putra(B °trā) catvāri dhātavo bha° B °sandhento pa° M °tvāri paṭhisarvanto paṭisaṁdhaṁdheti |.

12. M °kto bhaga° (l. 14). — 14. M °çālipu°. — 15. M °çāliputrā jāniti a° B °putrā jāniti° M °çālipu°. — 16¹. M °çāliputra tishṭhaṁtiḥ. — 16². BM °āhāra° M °çālipu°. — 17¹. M °çāliputra bhakshatiti |. — 17². M āyuḥkshayā karma° BM °cchedo i° M °çālipu°. — 18. M °çālipu° BM °ti avi°. — 19. B °prapatvāt tṛ° M °prahitvāt tṛ° B °kṛitatvāt || ka° M °kṛitatvā karma cā° °ti pakshaḥ a° B °çakshaṁ | a° M °çālipu° BM °saṁveti ||.

पक्षं भवति इदंप्रत्यया शारिपुत्र प्रतिसंधेति ॥ किंप्रत्यया शारिपुत्र न प्रतिसंधे-
तीति । अविद्यायै प्रहीणत्वात् तृष्णायै अन्तीकृतत्वात्कर्मं नास्य भवति पक्षं नास्ति
इदंप्रत्यया शारिपुत्र न प्रतिसंधेति ॥ चक्षुष शारिपुत्र आध्यात्मिकमायतनं अप-
रिभिन्नं भवति रूपो च बाहिरं आयतनं चक्षुषः आभासमागतं भवति । मना-
5 पासेचनसमुत्थानकं तस्य ततो निदानं उत्पद्यति प्रीतिसुखसौमनस्यं इन्द्रियाणि च
प्रीणयति । ये पि शारिपुत्र धर्मा प्रतीत्य उत्पादयति प्रीतिसुखसौमनस्यं इन्द्रिया-
णि च प्रीणयन्ति ते पि शारिपुत्र धर्मा जाता भूता संस्कृता वेदयिता प्रतीत्य समु-
त्पन्ना नैवात्मा नैवात्मनीया शून्या आत्मेन वा आत्मनीयेन वा ॥ अथ एवमन्यत्र
कर्मं चैव कर्मविपाकं च हेतुं चैव हेतुसमुत्पन्ना च धर्मा ॥ एवं श्रोत्रं घ्राणं जिह्वा
10 कायो मनश्च शारिपुत्र आध्यात्मिकमायतनं अपरिभिन्नं भवति धर्मा च बाहिर-
मायतनं मनस्य आभासमागता भवन्ति । मनापासेचनसमुत्थानं तस्य ततो निदा-
नमुत्पद्यति प्रीतिसौमनस्यं इन्द्रियाणि च प्रीणयति ॥ ये शारिपुत्र धर्मा प्रतीत्य
उत्पादयन्ति प्रीतिसुखसौमनस्यं इन्द्रियाणि च प्रीणयन्ति ते शारिपुत्र धर्मा जाता
भूता संस्कृता वेदयिता प्रतीत्य समुत्पन्ना नैवात्मा नैवात्मनीया शून्या आत्मेन वा
15 आत्मनीयेन वा । अथ एवं अन्यत्र कर्मं चैव कर्मविपा[२८१*]कं च हेतुश्चैव हेतु-
समुत्पन्ना च धर्माः ॥

इदमवोचद्भगवानिमस्मिं पुनर्व्याकरणे भाष्यमाणे सर्वेषां शारिपुत्रमौद्गल्यायन-

1. M °çâlipu° BM °saṁvetî°. — 2. M °hînatvâ tṛishṇâ ° ntîkṛitatvâ karma vâsya° B °t karmaṁ câsya bhavati | pa° BM °pakshaṁ nâ° M °çâlipu° BM °saṁveti | . — 3. M °çâliputra adhyâtmakam â° B °ra âyatanaṁ | apalibhi ° bhinaṁ âya° M °kabudha âbhâsama âyatanaṁ bha° B °ti ma°. — 4. B manapâsemanasya° M °manasamutthânikâ tasya° B °nakâ tasya tato niyatiṁ u° M °niryâtaṁ u° B °ṇayanti | .

6. B ca pi çâ° M °çâliputra dharmaṁ ca pra° B °dharma pra° BM °utpadyan(M °dyaṁ)-tu pri° M °sukhaṁ sau ° ni priṇayati | te° B °yanti | te° M °çâlipu° BM °tra dharmâ pratityan(M °tya)ti prîtisaumanasyaṁ indriyâṇi ca priṇayan(M °yaṁ)ti te pi çâri(M °li)putra dharma jâtâ prabhûtaṁ saṁ(M °ta saṁ)skṛi° B °vetayi° M °yito pra° BM °tpanno naivâtmanaivâtmanîyo çûnyâ âtmyena(M °tmano) vâ âtmani°. — 8. M °evam anyatra karmaṁ ca evaṁ karmavi° B °kaṁ na he° BM °caiva hetuṁ samu° M °dharmam e° B °rmâ e°. — 9. B °çrotmaṁ ghrâ° M °çrotaṁ ghrâ ° çâliputro â° BM °ti | dha° M °rmâ va bâhirayo° B °hiyam â° M °gato bhavantîti.

11. BM manâpa(M °pâ) saumanasyaṁ abhinâṁ(M °nîyâ tasya° M °tataḥ ni ° nasya idriyâni ca°. — 12. M °çâliputrasya dha ° tîtya dyantî pritim° B °tîtya dharmâ utpadyanti pritim° M °idriyâṇi° B °ṇayati | te° M °ṇayati | ye çâliputrasya dharmâ jâ° BM °skṛitâ cetayi(M °sitâ° M °tmâ naivamâtmanîyâ° B °tmena vâ âtmîye° M °tmanîyena°. — 15. M °tra karma caivaṁ karma ° çcaitasamutpannâç ca dha°.

17. B °vân imesmiṁ° M °puna vyâ ° çâlipu° BM °maudgalyâ° M °sahâya cittâ°.

मत्स्यजातेन भिन्नं ॥ ते दानि तेन यानपात्रेण विपन्नेन देवदेवां नमस्यन्ति यो यहिं देवे अभिप्रसन्नो । केचिच्छिवं नमस्यन्ति केचिद्वैश्रवणं नमस्यन्ति केचित्स्कन्दं केचिद्वरुणं के[281b]चिद्यमं केचित्कुबेरं केचिच्छक्रं केचिद्ब्रह्मं केचिद्दिशां नमस्यन्ति यथा इतो महासमुद्रातो जीवन्ता उत्तरेम ॥ ते दानि तेन यानपात्रेण 5 विपन्नेन नानाप्रकाराणि प्लवानि आदाय समुद्रमध्ये पतिता केचिद् घटिकामादाय केचित्फलकं केचिदलाबुश्रेणियं । केचित्परस्परस्य जीविताद् व्यपरोपेत्वा तं कुणपं आलम्बन्ति न महासमुद्रो मृतकुणपेन सार्धं संवसति अथ खलु तं कुणपं क्षिप्रमेव स्थलं वा द्वीपं वा क्षिपति ततः वयं पि एतेन कुणपेन सार्धं द्वीपं वा स्थलं वा उत्तरिष्यामः ॥ ते दानि वाणिजका तत्र महासमुद्रे प्रवन्ता वातेन राक्षसीद्वीपं 10 क्षिप्ता ॥ ते तहिं राक्षसीद्वीपे नानाप्रकाराणि नानाद्रुमसहस्राणि पश्यन्ति । यथा यथा च वातेन तत्तीरमल्लीयियन्ति ततो ततो प्रमदाशतानि पश्यन्ति नानापिकानि दर्शनीयानि नानारंगरक्तवसनानि सालंकारभूषितानि आमुक्तमणिकुण्डलानि विचरन्तो काचिन्नवयवधुकाकारा काचिद्देवप्रसूतिकाकारा काचिन्मध्यमस्त्रीकाकारा बहूनि राक्षसीशतानि मानुषीरूपाणि अभिनिर्मिणित्वा । समुद्र 15 ओतरित्वा एकमेको वाणिजको गृहीतो ॥ स्वागतमार्यपुत्राणां आर्यपुत्रा अस्माकमपतिकानां पतिका भविष्यथ अनाथानां नाथा भविष्यथ अबन्धूनां बन्धू भविष्यथ । अस्माकं पि स्वामिका महासमुद्रे विपन्नयानपात्रा सर्वे अनयातो व्यसनमापन्नाः । ध्रुवमस्माकं जलधरो प्रसन्नो येन यूयं इमं द्वीपमानीता ॥ ताहि ते वाणिजा अंसेहि आरूपिता समुद्रातो उत्तारिता स्थले प्रतिष्ठापयित्वा तेषां

1. M tadânîm tena° BM °syanti | yo °rnno ke°. — 2. M kecicchinnam namasyanti kecid vai° B °çramaṇam namasyanti | ke° BM °t skandham ke° M °ruṇa kecid ya °mam kecicchatram kecid bra° BM °çâm namasyanti | ya° M °drâto jara °remâ. — 4. M °dramadhyam pa° B °tâ kecid ṛṣitim â° M °kam kecid âlâmlaçreṇîyam B °yam ke°.

6. M kecit paraspa °vitâd yamparo °kuṇapam° B °nti na mṛtâsamu° M °mudrâto mṛtakâpeṇa sâ° B °rddham samvasati ‖ a° M °tam mṛtakuṇa° B °pati | ta° M °tato vayam° shyâmi | . — 9. M °tra mahasa °kshiptâ. — 10. BM te tahim(M °tarhi) râkshasîdvîpe kshiptâ te tahim(M °hi) râkshasî(M °sîpdvîpe°.

11. M yathâ yathâ ca târena tam tîlam âtrîpîyamti | tathâ tathâ tato pra° B °yanti | ta °çyanti | mânâyikâ° M °çyati mânâpikâpikâpi darçanîyânâm raṅgarakta °lamkâlabhû °caranto cit na va vadhûtakâkarâ kâcid evam sutikâkârâ kâcit madhyamastrokâkârâ ba° B °kâcin na ca vadhûkâkârâ kâcidevam prasû °cit adyamantrîkâkârâ° BM °bahuni râ° M °rûpam abhi° BM °tvâ sa°. — 15. M °dram otari °meka vâ° BM °to svâ°. — 15. M °ṇâm âryyaputra asmâ° BM °kâ bhavishyatha | anâthânâm nâthâ(M °tho) bhavishyatha | a°.

17. M °pâtro sarvo °m âpanno. — 18¹. M °nîtâh | B °tâ tahi te° — 18². BM tahi te vâṇijâm amçe° M °rûpinâ sa °uttaritâ° B °shâm vâṇikânâm°.

जका तेषु राक्षसीभवनेषु पश्यन्ति पर्यंकानि सुप्रज्ञप्तानि षोडशगोणिकास्तरणानि
सपद्रातपट्टप्रत्यास्तरणानि उभयतोलोहितविम्बोहनानि सुवर्णमयानि रूप्यमया-
नि दन्तमयानि अशोकवनिकादेशरमणीयानि सर्वपुष्पफलोपेतानि व्यायामशा-
लानि सुरमणीयानि अन्नपानभोजनविधानानि सुप्रणीतानि ॥

5 तेषां दानि रत्नामयेषु भद्रपीठेषु निषीदापयित्वा कल्पकेहि केशश्मश्रूणि का-
रितानि व्यायामशालेषु व्यायामकारापितानि स्नानशालेषु च स्नापयित्वा धौत-
मृष्टानि गात्राणि प्राज्ञयित्वा लोहितचन्दनकाषायानुसारेहि विलिप्तानि कृत्वा
महारहाणि च परिवारयित्वा पञ्चमाल्यदामेहि चालंकृतानि महारहाणि च भक्तो-
पस्थानानि उपनामितानि प्रत्ययाणि च प्रणीतानि खादनीयभोजनानि उपनामि-
10 तानि नानाप्रकाराणि च व्यंजनप्रकाराणि उपनामितानि खण्डाग्राणि लवणाग्रा-
णि [२८२b] मधुराग्राणि तिक्ताग्राणि कटुकाग्राणि कषायाग्राणि नानाप्रकाराणि
मांसप्रकाराणि उपनामितानि तद्यथा वराहमांसानि मत्स्यमांसानि तित्तिरमा-
ंसानि वर्तकमांसानि लावकमांसानि कपिंजलमांसानि एणेयमांसानि ॥ वि-
विधेषु च मानं नृत्यगीतवाद्यप्रकारेषु अभिरमापेन्ति मृदंगवाद्येषु आलिंगवाद्येषु
15 सिम्बवाद्येषु पणववाद्येषु एकादशिकावाद्येषु वीणावाद्येषु नकुलकवाद्येषु सुघोष-
वाद्येषु भाण्डकवाद्येषु च वेणुकवाद्येषु अपरा प्रणेन्सुः । अपरा तु मधुरं प्रवादे-
न्सुः ॥ यदा जानेन्सुः ता राक्षसीयो संचित्तका इमे वाणिजका अस्माभिरिति
ततो मानं संवृदानि रत्नकोशानि संप्रदर्शेन्सुः । आर्यपुत्राणां वर्ण च प्रणीतं च
सारं । मधुरं च आसनं प्रज्ञापेन्सुः । अभिरमन्तु आर्यपुत्राः इह रत्नद्वीपे

su° B °ptâni çoḍaçagoṇikâsta° M °ptâni shoḍaçagoṇikâsta° patrapra° BM °lohitabi(B °mi)-mbopahatâni(B °ni |) su° M °nikâniradeça°.

5. M te dâni ratnamà° BM °çmaçruṇi kâ° M °ritâni vyâyâmaçâleshu ca vyâyâmakârâpi° BM °dhautapâ(M °pa)trâṇi gâ° M °trâṇi pâñcayitvâ lo° mlanakârâma° B °lânuçâlehi° parivâpayitvâ ca° M °mehi ca alaṁkṛ° dhânâni upanâpitâni pratyapitâni ca praṇî° B °çapraṇi ca praṇî° M °khâdanîkhâdanîyabhojanîyâni ca upa° ni mânâprakâ° lavaṇâpraṇi° B °nâgrâṇi | madhu° M °madhurâgrâṇi madhurâgrâṇi tiktâ° BM °maprakârâṇi upanâmitâni | tadya-thâ || varâ° M °tittilamânsâni vakamâ° B °vakahyakamâ° BM °naâni lâ° B °ṇeyamânsâni ||.

13. M °dheshu ca | nânaṁ nṛtyâ° dyapravâdyeshu abhiramâpyeti mṛdaṅgavâdyeshu â° BM °paṇa(M °ca)vavâdyeshu | e° M °kulakavâdye sughoshavâdyeshu veṇu° B °bhâṇḍaka° M °aparâ prâpuṇetsuḥ a° B °ṇetsuḥ |.

16. M °râ pi tuṁ° gâyetsuḥ B °gâretsuḥ | . — 17. B °jânetsuḥ tâ° M °jânetsuḥ tâ° râ° B °vâsasâ | â° M °çcabhâ â° B °r iti | ta° BM °mânaṁ(B °naṁ mânaṁ) sâvṛ° M °ratnako° B °pradaçetsuḥ | M °çetsuḥ | . — 18. BM °varṇaṁ câ pra° B °mânaṁ ma°. — 19ᵃ. BM °naṁ ca prâpa(M °ye)tsuḥ a°. — 19ᵇ. B °mantu â° M °mantâ â° BM °traḥ | iha ratna(M °tna)dvî° M °rapuṭeṇ pi pramatto hi pi âryyaputreṇa nagara° B °api pramatto pi âryaputre nagara° rgeṇa gamâ°.

नन्दनगता वा मरुपुत्रा अपि तु प्रमत्तेहि पि आर्यपुत्रेहि नगरस्य दक्षिणेन मार्गेण
न गन्तव्यं ॥

अथ खलु भिक्षवो यद्येषां पंचानां वाणिजकशतानां सार्थवाहो पण्डितो सुप्र-
ज्ञातिको तस्य एतदभूषि ॥ किं नु खलु इमा स्त्रियो अस्माकं नगरस्य दक्षिणातो
मार्गातो वारेन्ति । यन्नूनाहं जानेयं नगरस्य दक्षिणेन किं चाव कथं वा ति ॥ 5
अथ खलु भिक्षवः सार्थवाहो स्त्रियः शयिता वा मत्तप्रमत्ता वा विदित्वान असि-
पत्रमादाय नगरातो निर्गम्य तं दक्षिणं मार्गमनुगच्छे । यथा यथा च गच्छति
तथा पश्यति आकाशे शरणं च प्रतिभयं बहूनां च पुरुषाणां रुदन्तानां शब्दं शृणो-
ति । सो दानि तेषां पुरुषाणां तं शब्दमनुसरन्तो पश्यति अयोमयं नगरं ताम्र-
प्राकारपरिक्षिप्तं ॥ सो दानि तस्य नगरस्य द्वारं मार्गन्तो समन्तेन प्रदक्षिणीक- 10
रोति न च तं द्वारं पश्यति बहूनां च पुरुषाणां रुदन्तानां शब्दं शृणोति ॥ हा
अम्बेति क्रन्दन्ति हा ताता ति क्रन्दन्ति हा पुत्रेति क्रन्दन्ति हा भ्रातेति क्रन्दन्ति
हा स्वसेति क्रन्दन्ति जम्बुद्वीपकाहो उद्यानवराहो ति क्रन्दन्ति ॥ सो तं शब्दं
शृण्वन्तो तं नगरं पर्यागच्छन्तो नगरस्य उत्तरे पार्श्वे प्राकारस्य अनुदिष्टं उर्ध्वं
शिरीषवृक्षं पश्यति । सो दानि शिरीषवृक्षमभिरुहित्वा नगरे पुरुष|283|शतानि 15
पश्यति सोपवासिकानां दीर्घकेशनखश्मश्रूणां पूतिखण्डवसनानां वातातपदग्धव-
र्णानां कृशानां मलिनानां मलिनकेशानां क्षुत्पिपासासमर्पितानां । नव-
मीहि पानीयार्थं भूमिं खनन्ति पृथिवीतो उत्क्षिपन्ति दीर्घकेण पुनर्धरण्यां पतन्ति ॥
ते दानि तस्य शिरीषस्य शाखापत्रपलाशशब्दं श्रुत्वा सर्वे अंजलिं कृत्वा स्थिता ॥
को आर्यपुत्रो देवो वा नागो वा किन्नरो वा गन्धर्वो वा यक्षो वा कुम्भाण्डो वा 20
ते वयं शरणं गताः । इतो संबन्धनातो दुःखितानि मोचेहि यथा मे पुनः स्वदे-

3. M °kahuvah pa° nijaṇa° BM °prajñājā° M °ko tasyaited a°. — 4. M kin tu kha° BM °imām stri° M °ṇāto cirenti | -.
6. M °khalave sā° ha tām stri° BM °çayita va matta(M °ttā) pramattā(M °ttā)nām vidi° M °sipatram ā°. — 7. BM °echati atha pa° B °kāçamçara° M °kāça çabdam ca pra°. — 9. M °ṇām yuvantānām ca° nusmaranto° BM °çyati | a°. — 10. B sā dā° M °rṇako na° BM °roti | na° M °çabdānām çr°.
11. BM °mbe kim krandanti | hā tātā kim krandanti hā pu° B °tra kim krandanti çva-koçe ti kra° M °tra ti krandanti hā bhrāteti krandanti hā putreti krandanti svhakoça-ti krandanti jambudvī°. — 13. M °bdam çṛṇvanto° °gurasyottare° B °anuçaṭhitam | u° M °vṛkṣam vṛi° B °tā so°. — 15. B °çyati | sā so° M °çyati | samvāsapa° B °çrūṇām pūti-khaṇḍavaçanānām vā° M °nām yuntikhaṇḍavasanānām vā° BM °tpipāsamu° °nām na°.
17. B sukhanti° BM °yārtha bhū° M °kṣipyanti dau° B °dhyanti | dau° tanti te°. — 19. BM °trapalāç(M °la)çam çabdam° M °kṛtatvā u° B °sthitā ko°. — 20. M °nāgo vā gandharvo vā kinnaro vā yakṣo° te vayam ça° B °te vayam ça°.
21. BM °nā mām pu°.

प्रवासो भवेय मित्रज्ञातिसमागमो च भवेय ॥ अथ खलु स सार्थवाहो श्रिरीष-
मतो अश्रुपूर्णनयनो तां वाणिजकानेतदुवाच ॥ नाहं देवो न यक्षो न किन्नरो न
गन्धर्वो न शक्रो न ब्रह्मा न विरूढको महाराजो वयं पि जम्बुद्वीपातो धनार्थाय
यानपात्रेण समुद्रमवगाढा विपन्नयानपात्राः । एताहि स्त्रीहि उद्धृता वाणिज-
5 कशतानि । ततः अस्माभिः सार्धं क्रीडन्ति रमन्ति प्रविचारेन्ति अपि सानं च यं
अप्रियं न करोम ता अस्माकं विप्रियं नेच्छन्ति ॥ ते दानि अभ्यन्तरवाणिजका
आहन्सुः ॥ वयं पि मारिष जम्बुद्वीपातो धनार्थाय यानपात्रेण समुद्रमवगाढा
अस्माकं पि सागरमध्ये गतानां यानपात्रं विपन्नं । ततः मं एताहि स्त्रीहि उद्धृता
पंच वाणिजकशतानि अस्माकं पि सार्धं क्रीडन्ति रमन्ति प्रविचारयन्ति यथा
10 एतरहि युष्माभिः सार्धं । यदा युष्माकं यानपात्रो विपन्नो वातेन च येन राक्ष-
सीद्वीपं तेन क्षिप्तो ततः एताहि राक्षसीहि यूयं दृष्ट्वा अस्माकं पंचानां वाणिज-
कशतानां अड्डातिया वाणिजकशता खादायिता ये अस्माकं मूलातो दारका
जाता ते पि सार्धं खायिता वयं अड्डातिया वाणिजशता इह ताम्रनगरे प्रक्षिप्ता ।
न एता मारिष मानुषिका राक्षसीयो एतायो ॥
15 सो दानि सार्थवाहो श्रिरीषमतो तेषामभ्यन्तरिमकानां वाणिजकानां ताम्रन-
गरप्रक्षिप्तानां तं वचनं श्रुत्वा भीतो त्रस्तो संविग्नो अंजलिं कृत्वा पृच्छति ॥ मारि-
षा किं उपायं यथाहं तासां राक्षसीनां मूलातो स्वस्तिना मुच्येय ॥ ते दानि
आहन्सुः ॥ कार्तिकपूर्णमास्यां केशी नामाश्वरा[१८३b]जा उत्तरकुरुद्वीपातो अकृ-
ष्टोप्तं शालिं अकणं अतुषं सुरभितण्डुलफलं परिभुंजित्वा इमं राक्षसीद्वीपमागच्छति।
20 सो इहागत्वा त्रीणि वारां मानुषिकाय वाचाय शब्दं करोति । को इह महास-
मुद्रस्य पारं गन्तुमिच्छति अहं स्वस्तिना उत्तारयिष्यामि । तं इयरात्रं शरणं

1. M °ṇijakāṁ eta°. — 2. M °dhanārthaya° B °gāḍhā vi° BM °pannā yānapātrāḥ (M °trā) |. — 4. B °dāhṛito vā° BM °ni ta°. — 5. M °samābhi sā° cāreti api sānaṁ vayaṁ a° BM °priyaṁ karoma na cā(M °ma || na co)smākaṁ°.

6. M °āha |. — 7. M °jambudvi° B °nāṁ pānapā° manaṁ ta°. — 8. M tato me ekābhi strī° B °taḥ me etā° M °ṇijaçatā° B °tāni kasmā° BM °kaṁ pi sārddhaṁ c(M °rddhan) tābhiḥ strībhiḥ krī° M °manti paricārayanti | yathā etarhi yuṣmābhi sā° BM °rddhaṁ ya°. — 10. M °dvipe te° BM °na kṣiptā ta° B °dṛṣṭvā kasmā° BM °cānāṁ vāṇija(B °jaka)çatānāṁ āvṛ(M °vṛttinna vāṇijaçatānāṁ āvṛ)ttiya vāṇija(B °jaka)çatā khāditā te (B °tān ākhāyitā ye) ṣya° dārakajā° M °naṁ khāyitāḥ vayaṁ na aṭṭātiya vāṇi° B °yaṁ aṭṭātiya vāṇi° M °kṣiptāḥ ||.

14. M na etāṁ māri° B °riṣa mānuṣikā°. — 15. M °teṣāṁm abhya° añjali kṛ°.
16. M āvāhyatha kim upā° BM °thā ca tāsāṁ° B °mūlato°. — 17. M °hanaḥ |. —
18. BM °keça nā° M °rṇamāsyā ke° liṁ açaṇaṁ ata° °ṇḍulaṁ pha° B °ddvīpaṁāṁ ā°. — 20[a]. M °ivā triṇi°. — 20[b]. M °uttarishyā° BM °ṇu taṁ°.

प्रपद्यथ । सो युष्माकं इतो राक्षसीद्वीपातो समुद्रस्य पारं प्रापयिष्यति ॥ तेषां
पंचानां वाणिजकशतानां यो वा तस्य हयराजस्य वालेष्ववलंबिष्यति अन्यतरा-
न्यतरे वा अंगजाते तेषां पि च पुरुषाणां परस्परस्य अवलंबिष्यति महाकायपृष्ठि-
स्मिन्तस्य अनुगमिष्यति शतं वा सहस्रं वा अनुपूर्वेण जम्बुद्वीपं प्रापयिष्यति । एषो
च उपायो इतो राक्षसीद्वीपातो स्वस्तिना जंबुद्वीपं गमनाय नास्ति अन्यो ॥ सो 5
दानि सार्थवाहो तेषामवशेषाणां वाणिजकानामाह ॥ आगच्छथ यूयमपि सर्वे
जम्बुद्वीपं गमिष्यामः । एवं तावत् नगरप्राकारं लंघयथ हेठतो वा खनथ ॥ ते
तं आहन्सुः ॥ न त्वं जानासि कीदृशो राक्षसीनगरं नातो वयं शक्ष्यामः लंघयितुं ।
तुम्हे पुनः यदि इच्छथ पलायथ एवं वो मोक्षो भविष्यति । अथ दानि तावन्नगरं
प्रविशथ नास्ति वो मोक्षो ॥ गच्छथ यूयं येनैव स्वकं देशं अमुकं च नगरं अ- 10
स्माकं पितृभ्रातरो तेषां अस्माकं वचनेन पृच्छित्वा यथार्थं देश दानानि करोथ पु-
ण्यानि । अपि शाठ्यकपालेन कुलेकुलेषु भिक्षित्वा जंबुद्वीपे वसथ मा च पुनः समुद्रं
ओतरिष्यथ यथेमान्येवृशानि दुःखानि परस्य वा प्रेष्यकर्म कृत्वा जीविकां कल्पे-
यथ मा च समुद्रमवतरणाय चित्तं करोथ यत्र इमानि एवंरूपाणि दुःखानि ॥
सो दानि आह ॥ मारिष आत्मना गमिष्यामि पुरा मे राक्षसी शयिता विबुध्येत 15
मा मे वानेया इह आगमनं ॥ सो दानि सार्थवाहो ततो शिरीषातो ओतरति
इमेहि च अभ्यन्तरिमकेहि वाणिजकेहि खादिता वयं राक्षसीहि अविधाविधा ति
विक्रुष्टं इदमस्माकं पश्चिमं ज्ञातीनां दर्शनमिति ॥

सो दानि सार्थवाहो ततो शिरीषातो ओतरित्वा यथागतेन मार्गेण गत्वा तत्र
राक्षसीये शयने शयितो ॥ सो श[284a]च शयनगतो चिन्तयति ॥ कथमेतेषां 20

1[1]. M °kshasidvi° B °ti te°. — 1[2]. BM te purushāḥ paṁ ° rājasya vālo(M °re)dhvavalaṁbishyati | anyatarā° M °re shu aṅgujā° BM °sparasya avalaṁba(M °lagnay)ishyaṁti | mahā° M °kālupṛishṭismi° B °pṛishṭismi ° gaṁishyanti ça° M °gaṁishyaṁti | ça ° dvīpaṁ prashayishyati | B °yishyanti | . — 4. BM raho ca u°. — 5. BM °teshāṁm a°.
6. M °shyāmi | . — 7[1]. M °tāvan naga° ghayitha he° B °heshtato ° natha te° — 7[2]. B teshām āha° M teshāṁm āhuḥ ‖ . — 8. M °tvaṁ yānāsi° B °nagarāto va° M °nagarāto ti vayaṁ çakyāmaḥ° B °maḥ ‖ laṁ ° tuṁ tumhe°. — 9[1]. M tushpha pu° vaṁ sho mokaho°. — 9[2]. M °mokshā B °kho ya°. — 10. BM gacchatha | yū ° kaṁ pitur jñāta° B °pṛicchatha sa° M °pṛicchatha va°.
12. M °na kulokuleshu bhikshetāmbudvi ° draṁ ottarishyatha | yatra ° paraspara preshyakarma kṛi° BM °rotha yathā yatra°. — 15[2]. M °ātmane ga° B °āmaro gamishyāmi ‖ pu ° kshasayitā vi° M °kshasaçayitāmi bu°.
16. B °tato ca çirshāto° M °tato çirshāto otaritvā vāhbya° B °ima ca abhya° BM °ntaraṁa° B °dito vayaṁ° M °ditāḥ va° BM °dhā āvi(M °bhi)dhāvidhā trivikrushtam i°. — 19. B °kshasidvīpe çaya° M °sīye çayana çayi°. — 20[1]. M °tapra ça°. — 20[2]. B kathaṁm eta° M °r kārya saṁ° B °dṛishṭva ca çra° B °dṛiptaḥ e° M °tarya kā° B °kāryā ya°.

चारिकां प्रक्रमिष्यामि अनुकंपाय प्राणिनां ॥
ततो च अर्धमासेन तं कृत्वान उपोसधं ।
चारिकां प्रक्रमे शास्ता अनुकंपाय प्राणिनां ॥
यं सो ग्रामं वा निगमं वा उपसंक्रमति गौतमः ।
5 तहिं तहिं समन्तता प्रत्युपेन्ति चतुर्दिशं ॥
यं सो ग्रामं वा निगमं वा उपसंक्रमति गौतमः ।
स्थानस्य पुष्पिता वृक्षा संप्रवान्ति चतुर्दिशं ॥
यस्य यस्यैव वृक्षस्य मूले तिष्ठति गौतमो ।
सो सो मुंचति पुष्पाणि ओनमित्वा द्रुमोत्तमो ॥
10 यस्य यस्यैव वृक्षस्य मूले तिष्ठति गौतमो ।
सो सो मुंचति फलानि प्रतिपूर्णानि सर्वशो ॥
मानुषका च ये वृक्षा पुष्पाणि च फलानि च ।
चारिकानानि दृश्येन्तु चरन्ते लोकनायके ॥
अमानुषा च ये वृक्षा पुष्पाणि च फलानि च ।
15 चारिकां तानि दृश्येन्तु चरन्ते लोकनायके ॥
ततो यं पृथिवी कम्पे ससमुद्रा सपर्वता ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
मन्दारवाणि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
20 महामन्दारवां पुष्पां देवास्संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
कर्कारवाणि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥

2. M °taṁ ca kṛ° BM °tvāna po°. — 3. M °prakramishyāmi anukaṁpāya prāṇināṁ | tato ca ardhamāsena taṁ ca kṛtvāna posadhaṁ | cārikāṁ prakrame° B °me çāsto a°. — 4. B °gauttamaṁ | . — 5. B tarhiṁ tahiṁ samantā° M °pratyanti°.

6. B °gauttamaḥ | M °gauttamaṁ | . — 7. M sthānasya pu° kahā yaṁ pra° BM °çaṁ yasya°. — 8. B °kahasya pare ti° M °tishṭhaṁti gauttamo | B °gauttamo | . — 9. M °ṇi ana°. — 10. BM °gauttamo | .

11. M °phalāṇi paripū°. — 12. BM mānuksha(M °shya)kā° M °pushpaṇi° B °lāni ca cā°. — 13. BM dṛçyeten(M °tauḥ) carante lo°. — 14. M amānushyā ca ye°. — 15. BM °dṛçyeton(M °tauḥ) ca°.

16. B °mudrasapa° M °mudraparvatāḥ || . — 17. M cārikāṁ tāni dṛçyeten cara°. — 19. M °caranto lo°. — 20. M °ndārapushpāṇi devāḥ saṁpra°.

21. B °ko | mahākarkā° (p. suiv. l. 1). — 23. M °kāṁ caramānasya°.

महाकर्कारवां पुष्पां देवाः संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
रोचमानानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
महारोचमानानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां प्रपिन्नस्य चरन्ते लोकनायके ॥
मंजूषकाणि पुष्पाणि देवास्संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
महामंजूषपुष्पाणि देवा संप्रकिरे तदा ।
चारिकां प्रतिपन्नस्य चरन्ते लोकनायके ॥
भीष्माणि च पुष्पाणि देवास्संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
महाभीष्माणि च पुष्पाणि देवास्संप्रकिरे तदा ।
चारिकाञ्चरमाणस्य चरन्ते लोकनायके ॥
समन्तगंधानि पुष्पाणि देवास्संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
महासमन्तगंधानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
पारिजातानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
सुवर्णमयानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते [२९१ᵇ] लोकनायके ॥
रूप्यमयानि पुष्पाणि देवाः संप्रकिरे तदा ।

1. M mahâkarûravâṁ pu°. — 2. M °kâṁ varamânasya°. — 4. M cârikâṁ caramâṇasya°. — 5. M °camânâ pushpâṁ de°.

6. M °kâṁ caramâṇasya°. — 7. M mañjusha° devâḥ saṁpra°. — 8. BM °kâṁ caramâṇasya°. — 9. M °mañjusha° devâḥ saṁ°. — 10. M °kâṁ caramâṇasya° BM °carante lo°.

11. M bhîshmâṇi pu° devâḥ saṁpra°. — 12. BM °mâṇasya°. — 13. M °shmâṇi pu° devâḥ saṁpra° tadâḥ |. — 14. M cârikâṁ caramâṇasya°. — 15. M °devâḥ saṁpra°.

16. M °mâṇasya°. — 17. M °ntagandhapushpâ°. — 18. M °mâṇasya carante°. — 19. B °jâtâni°. — 20. M cârimkâṁ°.

21. BM °mâṇasya°.

चारिकां चरमाणस्य चरन्ते लोकनायके ॥
रत्नमयानि पुष्पाणि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
चन्दनस्य च चूर्णानि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
अगुरुस्य च चूर्णानि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
केशरस्य च चूर्णानि देवाः संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
तमालपत्रचूर्णानि देवास्संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
दिव्या च रत्नचूर्णानि देवास्संप्रकिरे तदा ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
तूर्यकोटिसहस्राणि संप्रवादिंसु अम्बरे ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
अन्तरीक्षस्मिं भेरीयो संप्रवादिंसु अघट्टिता ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
चैलक्षेपाणि करेंसु अन्तरीक्षे स्थिता मरू ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
नागराजा सुपर्णा च अभिक्रान्ता च मानुषाः ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
इमे पि बहवो यक्षा वर्णवन्तो यशस्विनः ।
चारिकामनुबन्धेंसु चरन्ते लोकनायके ॥
इमे पि बहवो देवाः वर्णवन्तो यशस्विनः ।

1. M °mânasya°. — 3. M °mânasya°. — 5. M °mânasya°.

6. B agaru° M °sya ca nârṇṇâ°. — 7. BM °mânasya°. — 8. M °ca sarṇṇâni°. — 9. M °mânasya°. — 10. B °rṇṇâ de° M °devâḥ sam̃pra°.

11. M °mânasya°. — 12. M divyâ ratanacû° B °tnapûrṇṇâ° M °devâ sam̃pra°. — 13. M °mânasya°. — 14. BM °dyeṣu a°. — 15. M °mânasya°.

16. M antikshe ca bhe° B °rikshesmim̃ bhe° BM °dyeṣu a°. — 17. M °mânasya rante°. — 18. M vairakshepâm akareṁsuḥ antarikshe° B °reṣu a.° maru | M °maruḥ | . — 19. M °mânasya°. — 20. B °suvarṇṇasya atikrântâ ca manu° M °suvarṇṇasya atikrâm̃taç ca mâ°.

21. M °mânushta cara lo°. — 23. M cârikâm̃ caramânasya ca° B °nubam̃dhetsu ca°.

चारिकामनुबन्धेन्सु चरन्ते लोकनायके ॥
त्रिसाहस्रा विभू देवा यशवन्तो यशस्विनः ।
चारिकामनुबन्धेन्सु चरन्ते लोकनायके ॥
षडाशीति सहस्राणि ब्राह्मणानां समागता ।
चारिकामनुबन्धेन्सु चरन्ते लोकनायके ॥ 5
षडाशीति सहस्राणि गृहपतिनां समागता ।
चारिकामनुबन्धेन्सु चरन्ते लोकनायके ॥
न तत्र क्षुधा पिपासा नापि च हानि वर्णिता ।
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
न तत्र शीतमुष्णं वा दंशा वा मशकानि वा । 10
चारिकां चरमाणस्य चरन्ते लोकनायके ॥
सो चारिकां चरित्वान विनेत्वा च बहुं जनां ।
उपागमे लोकनाथो शाक्यानां कपिलाह्वयं ॥

अथ भगवां न्यग्रोधारामे विहरति महता भिक्षुसंघेन सार्धं अष्टादशभिर्भिक्षु-शतेहि ॥ अश्रोषी राजा शुद्धोदनो भगवान् कोशलेषु चारिकां चरमाणो महता 15 भिक्षुसंघेन सार्धमष्टादशभिर्भिक्षुशते[292ª]हि येन कोशलानां नगरं तदनुसारे तदनुप्राप्तो तत्रैव विहरति न्यग्रोधारामे ॥ ते दानि सर्वे कपिलवास्तव्याः शाक्या शाक्यस्त्रियश्च भगवतो दर्शनकामाः सकलकानि युग्ययानानि योजयन्ति । भगवतो दर्शनाय गमिष्यामः ॥ अश्रोषीत्खलु राजा शुद्धोदनो कपिलवास्तव्याः शाक्या शाक्यस्त्रियश्च सकलकानि युग्ययानानि योजापयन्ति । न्यग्रोधारामं 20

1. B °ndhetsu ca° M °ndhetsuḥ ca°. — 2. M °hasre vi° B °arābhibhū° M °devāḥ ca°. — 3. M °kām anuvandā lo° B °ndhetsu ca° M °yakeḥ | . — 4. M °nāṁ camāgatāḥ | . — 5. B °nubandhetsu ca° M °nubandhetsuḥ ca°.

6. M °patināṁ samāgatāḥ | . — 7. B °bandhetsu ca° M °badhetsuḥ ca°. — 8. M °pe-çā nāpi hāryyante varṇṇato | B °nāpi hāyante varṇṇato | . — 9. M °māṇasya°. — 10. M °çītaṁ uṣṇaṁ vā darçanā maçakāni ca.

11. M °māṇasya raṇte°. — 12. B °vikshiptā ca bahujanāṁ | M °vinetāṁ ca bahuṁ jānāṁ | . — 13. M °nāṁ çākyanaṁhvayaṁ || . — 14. B °sārddhaṁm ashṭada° M °sārddham ashṭādaçehi bhikshusaṁghehi B °tehi sero°. — 15. M °shit | rā° BM °koçareshu° M °ghena sārddha ashṭā° B °rddham ashṭada° tehi | ye° BM °sāre | tad anuprāpto(M°ptaḥ) tatrai° 6 || kapilavastunnāṁ nyagro° B °rāme te dā°.

17. B °sarvaṁ kapi° M °sarva kapilavāstavyā çā° kyayindrya kha° B °çcam kāyāḥ sa-kāni yu° M °māḥ sakāni yu°. — 19. M °stavyā çākyā çākyayiñnyaç ca° B °çca | sa° M °nāni yājāpa° B °nāni niyoyājayanti | . — 20. B °maḥ | khu°.

भामन्त्रयति ॥ गच्छामि भगवन् राजानं शुद्धोदनं निवर्तेमि ॥ भगवानाधिवा-
सेति ॥ नदीकाश्यपो पि गयाकाश्यपो पि उपसेनो पि सर्वे ते महर्द्धिका भिक्षू
भगवन्तं याचेन्ति ॥ गच्छाम भगवन् राजानं शुद्धोदनं प्रसादेम: यथा भगवन्तमु-
पसंक्रमेय ॥ भगवानेषां पि नाधिवासेति ॥

अथ खल्वायुष्मतो महामौद्गल्यायनस्य एतदभूषि ॥ कं भगवानाकांक्षति भिक्षु 5
यो राजानं शुद्धोदनमभिप्रसादेया ॥ अद्राक्षीत् महामौद्गल्यायनो दिव्येन चक्षुषा
विशुद्धेनातिक्रान्तमानुष्यकेन भगवतो चित्तं कालोदायिस्मिं भिक्षुस्मिं प्रतिष्ठितं ।
कालोदायी भिक्षु राजानं शुद्धोदनमभिप्रसादयिष्यति ॥ दृष्ट्वा च पुन: येनायुष्मां
कालोदायी तेनोपसंक्रमित्वा आयुष्मतो कालोदायिस्य एतदुवाच ॥ लाभा ते
आयुष्मं उदायि सुलब्धा लाभा यस्य ते शास्ता आकांक्षति उदायी भिक्षु राजानं 10
शुद्धोदनं अभिप्रसादयिष्यति । सन्ति अन्ये स्थविरस्थविरा भिक्षू याचन्तो न
लभन्ति । त्वं गच्छ आयुष्मन् उदायि राजानं शुद्धोदनं अभिप्रसादेहि ॥ एवमुक्ते
आयुष्मां कालोदायी आयुष्मन्तं महामौद्गल्यायनमेतदुवाच ॥ दुरासदा आयुष्मं
महामौद्गल्यायन राजान: क्षत्रिया मूर्धाभिषिक्ता जनपदस्थामवीर्यप्राप्ता ॥ सय्य-
थापि नामायुष्मं महामौद्गल्यायन समिद्धो महाग्निस्कन्धो पुरुषस्य दुरासदो भवति 15
उपसंक्रमणाय एवमेवायुष्मं महामौद्गल्यायन राजानो क्षत्रिया मूर्धाभिषिक्ता जन-
पदस्थामवीर्यप्राप्ता: दुरासदा उपसंक्रमणाय ॥ सय्यथापि नामायुष्मं महामौद्ग-
ल्यायन कुञ्जरो षष्टिहायनो दुरासदो भवति उपसंक्रमितुं एवमेवायुष्मं महामौद्ग-
ल्यायन क्षत्रिया मूर्धाभिषिक्ता जनपदस्थामवीर्यप्राप्ता: दुरासदा उपसंक्रमणाय ॥
सय्यथापि नामायुष्मं महामौद्गल्यायन सिंहो मृगराजो दाढी बली केशरी मृगाधि- 20

1¹. M °gava rājā° B °rttemi bha°. — 1². BM °gavā nādhi°. — 2. BM nadīkāçyapo 'ha ‖ ga° M °rddhiko bhikshur bhagava° BM °canti gacchā°. — 3. B °demaḥ | ya° M °meyaḥ. — 4. M °teshām api nādhi°. — 5¹. BM °mauñgalyā° M °nasyaita°. — 5². B kiṁ bha° M kittaya° B °ti | bhikshū ya° M °bhikshu yo° B °deyā a°.

6. B °kshit ‖ mu° M °kshin mahā° BM °mauñgalyā° B °kena | bhagavatā ci° M °gavatā cintaṁ ka°. — 8¹. M °dāyi bhikshuḥ rājānaṁ abhi°. — 8². M °puna yenāyushmān kālodāyī te° B °dāyin teno°. — 9. B lābhā te yushmaṁ° M °āyushmāta udāyi sulabdha-lābhā ya° B °kshati | udāyī bhi° M °ti udāyī bhi°.

11. M °bhikshur yācanti na labhante B °nti tvaṁ°. — 12¹. BM °yushmān u° M °dāyī ca°. — 12². M °yushmā kā° BM °mauñgalyā°. — 13. M °yushmantaṁ ma° BM °mauñgalyā° M °jāno kshetri° B °naḥ kshetri° M °prāptāḥ ‖ . — 14. B °māyushmantaṁ ma° BM °yana imasya ma° M °mahān agniskandho° BM °rāsadā bha° M °kramanāya° BM °sam evāmiṁ ma° M °yanaḥ rājāno kshetri° shikta ja°.

17. *Omis par* M. B °nāmāyushmaṁ mahāmauñgalyāyana kuñjaro shashṭi° taṁ | e° mauñgalyāyanaḥ ksha° kramanāya ‖ . — 20. BM °nāmāyushmaṁ mahāmauñgalyāyana siṁho mahārājo (M °jā) dāti ba° M °dhipati durāsadā bhavati purushasya° B °ti | pu°

पत्तिर्दुरासदो भवति पुरुषस्योपसंक्रमणाय एवमेवायुष्मं महामौद्गल्यायन राजानः क्षत्रिया मूर्धाभिषिक्ता जनपदस्थामवीर्यप्राप्ताः पुरुषसिंहा दुरास[193ᵃ]दा भवन्ति उपसंक्रमणाय ॥ सय्यथापि नामायुष्मं महामौद्गल्यायन शार्दूलो चोलीनकायो गुरुदर्शनो दुरासदो भवति पुरुषस्य उपसंक्रमणाय एवमेवायुष्मन्महामौद्गल्यायन
5 क्षत्रिया राजानो मूर्धाभिषिक्ता जनपदस्थामवीर्यप्राप्ताः पुरुषशार्दूला दुरासदा भवन्ति उपसंक्रमणाय ॥ अथ खलु भगवानायुष्मन्तं कालोदायिं गाथाय अध्यभाषे ॥

शृणु मम उदायिभद्रा परमकुशलप्रसादानां त्वमग्रो ।
शाक्यकुलनन्दिजननं राजवरं लघु प्रसादेहि ॥
न हि अन्यो कोचि भिक्षु समर्थो राज्ञो प्रसादयितुं चित्तं ।
10 नान्यत्र त्वया उदायि समागचरितेन भगवतो ॥
भूतपूर्वं उदायि अतीतमध्वानमभू भूमिपती ।
नामेन सत्यवर्धनो विघुष्टशब्दो धरणिपालो ॥
धार्मिको धर्मराजा संपूजितः प्राणकोटिनयुतेहि ।
धर्मेण इमां वसुमतिं समुद्रपर्यन्तां अनुशासे ॥
15 तस्य च अनूप राज्ञो पुत्रो दर्शनीयो पूर्वबुद्धानां ।
नामेन मतिसारो गुणगणपरिचारितमती च ॥
कामेषु दोषदर्शी अनर्थिको सर्वकामभोगेषु ।
श्रोत्रकुशलमूलो गृहे न रमति विवेकरतो ॥

ṇoyā ‖ e° M °ṇāya | sayyathāpi nāmāyushmaṃ mahāmaudgalyāyana kuñjaro shashṭihāyano durāsadā bhavati upasaṃkramituṃ | evaṃm evā° BM °maudgalyā° M °jāno kaha ° prāptā puru ° durāsadā upasaṃkramaṇāya | evam evāyushmanta mahāmaudgalyāyanaḥ kshatriyā mūrddhnābhishiktā janapadasthāmavīryaprāptā purushasiṃho durāsadā bhavanti |. —

3. B °nāmāyushmaṃ mahāmaudgalyāyana çārdūrā orinakāyo° M °nāmāyushman mahāmaudgalyāyano çārdūlo orinakāyo gurudarçanā durāsado° B °rçanā durāsado ° sya bhavati upasaṃkramaṇāya | evam ayu eāyu° M °ṇāya | evaṃm evā° BM °maudgalyā° M °triya mū ° shikto ja°.

6. M °gīthā adhya°. — 7. B °dāyiṃ bha° BM °dakānāṃ tvam evāgro çā°. — 8. B çākulanandija° BM °laghuṃ prasādehi na°. — 9. M °nyo kvacid bhikshu° B °nyo kvacid bhikshu° M °rājñā pra ° tuṃ citraṃ B °tuṃ | cittaṃ nā°. — 10. B nānyayitu u° M °tra u° BM °carito bha(M °bhaṇa)vati ‖. —

11. M °dāyī ati ° abhūshu bhūmi° B °naṃ abhūshu bhūmipatir nāme°. — 12. B °dharaṇipālo dhā° M °dharaṇipāro. — 13. M °rāja saṃpūjito pra° B °jā | saṃ ° koṭina° BM °hi dha°. — 14. BM °mudra i°. — 15. BM °pūrva(B °rva) buddhānāṃ nā°.

16. B °mena mati° M °timāro gu° B °cāritamatī ca kā° M °tīra kā°. — 17. BM °rçī | a° M °narthako° BM °shu o°. — 18. M oropitakuçala gṛ°.

शाकियमण्डलेन सार्धं स्वकायां दर्शनशालायां प्रत्यक्षामि ॥ तत्र राजा शुद्धो-
दनो शाक्या शाक्यायिन्याश्च आमन्त्रेसि ॥ महन्तातो पि ऐश्वर्याधिपत्या भ्रंशित्वा
कुमारो प्रव्रजितो । यदि न कुमारो प्रव्रजितो अभविष्य सो राजा भवे चक्रवर्ती
चातुर्द्वीपो विजितावी धार्मिको धर्मराजा सप्तरत्नसमन्वागतो तस्य इमानि सप्त
रत्नानि भवेन्सुः । तद्यथा । चक्ररत्नं हस्तिरत्नं अश्वरत्नं मणिरत्नं स्त्रीरत्नं गृह- 5
पतिरत्नं परिणायकरत्नं एवं सप्तरत्नं । पूर्णं चास्य पुत्रसहस्रं भवेत् शूराणां वीराणां
वराङ्गरूपिणां परसैन्यप्रमर्दकानां । सो इमानि चत्वारि महाद्वीपा सागरगिरि-
पर्यन्ता अखिलामकण्टकां अदण्डेनाशस्त्रेण अनुत्पीडेन धर्मेण अभिनिर्जित्वा
अध्यावसिय राजान सहस्रेषु च परिवृतो भवेय तेषामस्माकं इयोतं चक्रवर्तिराज्यं
अभविष्यन्ते वयं कुमारेण प्रव्रजितेन महन्तातो ऐश्वर्याधिपत्यातो भ्रंशिताः ॥ 10

अथ खल्वायुष्मानुदायी न्यग्रोधा[२९४*]रामातो वैहायसमभ्युद्गम्य राज्ञो शु-
द्धोदनस्य शाकियमण्डलपरिवृतस्य पुरतो तालमात्रं वैहायसमन्तरीक्षे अस्थासि ॥
अद्राक्षीद्राजा शुद्धोदनः आयुष्मन्तं उदायिं तालमात्रं वैहायसमन्तरीक्षे तिष्ठन्तं
दृष्ट्वा च पुनः हृष्टो तुष्टो सौमनस्यजातो उत्थायासनातो एकांसमुत्तरासङ्गं कृत्वा
येनायुष्मां उदायि तेनांजलिं प्रणामेत्वा आयुष्मन्तमुदायिं गाथाये अध्यभाषे ॥ 15

कुतस्त्वमागच्छसि रक्तचीवर
केन त्वमर्थेन इहानुप्राप्तो ।
किं चात्र आकांक्षसि त्वं उदायि
सुदुर्लभं सिद्धव्रतान दर्शनं ॥

1. BM °no çâkya çâ° M °yiṇyasya â° BM °mantresi ma°. — 2. B mahântâto pi° M mahânto pi ° °tyâ pâtayitvâ° B °tyâ pâtramitvâ ku° M °jitaḥ B °to ya°. — 3. B °vi-shyaṃ | so° M °vishyaṃ so° B °kravartti câ° M °imâni sapta ratanâni bhaveṃsuḥ B °tnâni bhaventsuḥ ||. — 5². M °saptamaṃ ratnaṃ B °ptaratnaṃ pu°.

6. B puri câsya° B °bhavet | çûrâṇâṃ varâṇâṃ° M °bhavet | çû.° rûpiṇâṃ pa° pra-mardda° BM °kânâṃ so°. — 7. B imâṃ catvâ° M °dvîpânâṃ sâgaraṃgiriparyantânâṃ akhilâṃ akaṇṭhakâṃ ada° BM °tpîḍatha° M °rmeṇa vâ abhijinitvâ° B °dhyâvaçishyaṃ râjâ° M °sishyaṃ | râjâ ° reyu teshâṃsm asmâ° B °stoptaṃ cakra° BM °vishyan te vayaṃ kumâ-(B °mâro)ṇa pra° M °mahatâto ai ° dhipatâto bhraṃ°.

11. M °danasya kiyamaṇḍalasya pari°. — 13. B °kshid râjâ çu° M °shan âyushmantam udâyi tâlâ° B °udâyi tâla° M °rikshaṃ tishṭhantaṃ dṛ° B °shṭhataṃ dṛ° °naḥ dṛshṭo° M °syajâtâ uttha° ekâṃçam u° BM °ttarâsaṅgaṃ° M °yi namâṃja° °tvâ âyushman udâyiṃ gâ°.

16. M kuto tvam â° °rtheneteṇa tvam a° prâptaḥ B °pto kiṃ°. — 18. B kiṃ vâ tvam âkâṃkshasi tvaṃ° M kiṃânuprâptaḥ âkâṃkshasi tvaṃ udâyi su° B °durlabhâ siddha° M °durlabhâ siddhadvratâu darçanaṃ ||.

लाभस्ते राष्ट्राधिपते शिरीमतो
यस्य तव पुत्र नराणमुत्तमः ।
तेजेन ओभासति सर्वलोकं
सहस्ररश्मीव उदेन्त मेदिनीं ॥

5 एवं दानि स्थविरेण उदायिना तालमात्रं वैहायसमन्तरीक्षे स्थितेन बहूनि बुद्धमाहात्म्यानि परिकीर्तितानि तानि च राजा शुद्धोदनो श्रुत्वा प्रीतो संवृत्तो ॥ सो दानि शाक्या शाक्यायिन्यश्च आमन्त्रयति ॥ सय्यथापि नाम भाविष्याहो सूर्यस्य अभ्युद्गमस्य एतं पूर्वगममेतन्निमित्तं यदिदं अरुणो उदायी भो सर्वसंशयच्छेत्ता सुगतस्य श्रावको ॥

10 बुद्धस्य पुत्रो परमार्थदर्शी
उपागतो शाक्यकुलं तदन्तः ।
प्रसादये शाक्यमहं इत्येवं

. . . . . . . . . . . . . .

आशाय कृष्यते क्षेत्रं बीजमाशाय वप्यते ।
15 आशाय वाणिजा यान्ति समुद्रं धनहारका ।
यो यस्य आशाय तिष्ठामि सा मे आशा समृध्यतु ॥
पुनर्पुनः क्षिप्र वपन्ति बीजं
पुनर्पुनः वर्षति देवराजः ।
पुनर्पुनः वर्धति बीजग्रामं
20 पुनर्पुनर्लाभं लभन्ति कर्षिका ॥

1. M lābhāstu rā° B lābhastu rāshṭhrādhi° BM °to | ya° M °narāṇām uttamaṃ ja° B °maḥ te°. — 3. M jeta na te bhā° B °jena te bhā° M °loko saha° B °kaṃ sarasra° M °raçmi iva udayati me° B °udeti me° BM °dini | . — 5. M °ntarikahe ° hātmāni pari° BM °to so°.

7¹. B °ni çākya çā° M °ni çākyo çākyayi°. — 7². B °nāma sarvāçiahiā sū ° bhyuddenta° M °bhyuddanāttasya enaṃ pa° ° ta etaṃ pūrvanimittaṃ yam idaṃ° B °u nirmittaṃ yad idaṃ āryudāyi° M °daṃ āryya udāyino ° çayakaheitāraṃ su ° vakyo bu° B °vako bu°. — 10. BM °rthadarçino upā(B °pa)gamo çākyakule tadanta(M °taratta)ra pra°.

12. B praçādaye çākyamahānty evaṃ | ā° M °ye çākyamarubhāvaṃ ā°. — 14. BM °traṃ vija(B °jaṃ)m āçāya vāpyate || . — 15. M āsya vāṇijā yāni sa° B °dhanahāyakā | M °nahārakā.

16. M ye yasya āsya tishṭhāmi | sā me āsā sa° M *transpose ici les lignes 1-5, p. 109, avant la ligne 17, puis répète la ligne 1, p. 109.* — 17. M °punar kshipra° BM °vayanti vījaṃ(M °jaṃ |) puna° M °rājaṃ | . — 19. M °maṃ | pu ° naḥ lābhaṃ labhaṃni ka°.

पुनःपुनर्याचनका उपेन्ति
पुनर्पुनः सत्पुरुषा ददन्ति ।
पुनर्पुनः सत्पुरुषा पि दत्त्वा
पुनःपुनस्स्वर्गमुपेन्ति स्थानं ॥
दुर्लभो पुरुषाजन्यो न सो सर्वत्र जायते । 5
यत्र सो जायते वीरः तं कुलं सुखमेधति ॥
वीरो हि वै सप्त कुलां पुनाति
यस्मिं कुले जायति भूरिप्रज्ञो ।
पितेव शाक्या नयति देवदेवो
तथापि जातो मुनि सत्यनामः ॥ 10
शुद्धोदनो नाम पिता जिनस्य
बुद्धस्य माया इति नाम माता ।
या बोधिसत्त्वं परिहार्य कुक्षिणा
कायस्य भेदात्स्वर्गेषु मोदति ॥
सा मोदति कामगुणेहि पञ्चहि 15
इष्टेहि कान्तेहि बुद्धस्य माता ।
रतिरिव ...... पुष्पकामा
परिवारिता अप्सरसां गणेहि ॥
पुत्रस्य बुद्धस्य असह्यतायिनो
गंभीरसत्त्वामतिमस्य तायिनो । 20
प्रीतः पिता हर्षित एष शाक्य
[294b] धर्मेण त्वं गौतम आर्यको सि ॥

राजा आह ॥

अस्थानिके प्रव्रजितो सि भिक्षु
अर्थाय सो चरति ब्रह्मचर्यं । 25

1. B °r yācakā u° M punarpu°. *Dans la répétition de ce vers* M *lit* : punarpunaḥ yā° upeti. — 3. BM °ruṣehi datvā(M °tvā |) punaḥ° M °naṃ | pu°. — 5. M durlabho°.
6. M °vīro taṃ° BM °m evati ||. — 7. M °punāti yasmiṃ° B °jāyate bhūriprajño pi° M °prajñāḥ pi°. — 9. M pite çākya na ° vadevāḥ trayā hi yāta ° nāmo ||.
13. BM °rihārya(M °hāya) nāpi sa kukṣi°. — 15. M sa mo°.
17. BM °riva pu ° puruṣaṃ ga°. — 19. BM putrasyāṃ bu° M °saṃgaha° BM °rasasya pra°.
21. BM putuḥ pitā(B °to) me tvaṃ si(M °si)tum sala ° ramya gautama° M °kami || . — 24. M °vrajito si° BM °so brahmacaryaṃ sa°.

न सो भीतो नापि भयं उपेति
एको पि सो रमति वृक्षमूले ॥

उदायी आह ॥

यस्यार्थिके प्रव्रजितो सि राज
अर्थाय सो चरति ब्रह्मचर्यं ।
न सो भीतो नापि भयं उपेति
एको पि सो रमति वृक्षमूले ॥
एवं चरन्तं मुनिमप्रमत्तं
निन्दाप्रशंसासु अवेपमानं ।
सिंहो व शब्देषु असंत्रसन्तं
वातं व जालस्मिं असज्जमानं ।
नेतारं अन्येषु अनन्यनेयं
भीत्व पितं शाक्य कथं वदेसि ॥
यं वेदयसि अनोपमप्रज्ञं
मह्यं पुत्रं तस्य पिता ति ब्रूमि ।
पुत्रस्य तस्य मह्य पुत्रो भोति
मुक्त्वान भिक्षु हर पिण्डपात्रं ॥
एष्याम वयं अपि दर्शनाय
बुद्धं अनन्तवरं वितीर्णकांक्षं ।
लोके उदपासि न सत्वसारो
पुत्रं मह्यं यथा वदेसि भिक्षु ॥
भुक्त्वान भोजनं यावदर्थं
शुचिं प्रणीतं रसस्वादुपेतं ।

1. BM so bhī° poti | s°. — 4. BM °rājā çra°.
6. M na çabhito° B °bhayam u°. — 8. BM ekam varaṃ muni° M °ttaṃ | nindāpra-çaṃçāsu asevyamānaṃ B °çaṃso asevyamāna aiṃ°. — 10. BM °ho ca ça° B °asantasan-taṃ° M °asaṃtasantaṃ | vātaṃ ca jālesmiṃ asajjamānaṃ B °jālesmiṃ°.
12. BM °yaṃ (M °yāṃ | yaṃ) bhīrudinaṃ ° demi | . — 14. M °prajña mahyaṃ | pitā ni me brumi B °hyaṃ pitā ni krumi | .
16. BM °tahiṃ ma° B °bhuktvā bhi° BM °bhuttkā hi bhi° M °kehu hana pi°. — 18. M yasyāma° B asyāma° BM °vayaṃ pi° M °ruṃ viçvaraṃ vistīrṇṇakāṃkṣā | B °ruṃ vistīrṇṇa-kāṃkṣāṃ lo°. — 20. B °si satvasāro | pu° M °si satvasāra putro ma° BM °bhikṣuḥ.
22. M guptvā ca so bhu° B bhuptkā ca bho ° rthaṃ | çu° M °cacipra° B °rasaṃ svādupetaṃ so° M °svādrupetaṃ | .

सो प्रक्रमे पिण्डपात्रं गृहीत्वा
उपसंक्रमे येन जिनो अनेधो ॥
सो तं प्रदेशं उपसंक्रमित्वा
उपनामये पिण्डपात्रं जिनस्य ।
वन्दित्व पादां अवचि तथागतं
याचन्ति ते ज्ञातयो दर्शनाय ॥
एवंरूपां गुणां श्रुणित्व भूमिपालो
विपुलसमुदानयति सुलब्धा लाभा ।
मह्यं अनन्ता यं त्रिसाहस्राय
लोकधातुये जिने जीवमाने
भविष्यति संगमो नायकेन ॥
संपुष्पिता द्रुमलता कुसुमावकीर्णा
आसेविता च द्विजसंघनिनादितेन ।
एवं पि मह्यं हृदयं प्रीतिसंकुसुमितं
श्रुत्वान पुत्रं मम सर्वगुणोपपेतं ॥

अथ खलु राजा शुद्धोदनः अन्यतरं राजामात्यमामन्त्रयति ॥ भो भणे अमात्य सर्वार्थसिद्धो कुमारो अनुत्तरां सम्यक्संबोधिमभिसंबुद्धित्वा प्रवृत्तप्रवरधर्मचक्रो कपिलवस्तूपवनेषु अनुप्राप्तो । ततः पुत्रस्य सर्वार्थसिद्धस्य कुमारस्याभ्युद्गमनं करिष्यामि ॥ ततो कपिलवस्तुनगरे घोषणां कारापेहि । सर्वेहि शाक्येहि ब्राह्मण-गृहपतिकेहि सर्वेहि च गान्धर्विकेहि सर्वेहि च श्रेणीहि सर्वेहि च शिल्पायतनेहि मया सार्धं सर्वार्थसिद्धस्य प्रत्युद्गमनं कर्तव्यं ॥ साधु महाराजेति ॥ सो राजा-मात्यो शुद्धोदनस्य प्रतिश्रुत्वा क्षिप्रमेव कपिलवस्तुनगरे चत्वरशृंगाटकचत्वरापण-

1. M so pakra° B °upanâmaye yena jana a° M °upanâmaye piṇḍa° (l. 4). — 3. M °ya piṇḍapâ° B °traṁ | ji° BM° aya va°. — 5. B °nditvâ pâ° BM °taṁ | paçyanti ° nâya îmodṛ°.
7. BM îmodṛ° çitvâ bhûtipâlâ | trikhutaṁ (M °lo trishkṛityaṁ) a ° ti lâbhâ sulabdhâ-(M °bdha) ma°. — 9. BM mahyam anantâya tri ° ya loke dhâtûya jîva° B °shyati | saṁ° kena saṁ°.
12. BM °kusumitâ (B- °tâya) kiryaṃ âsevanti dvi ° ditâni ||. — 14. BM adṛçaṁ pi° B °mitaṁ | çru° BM °tvâ putraṁ sarvaguṇopetaṁ ||.
16[a]. M °dano a°. — 16[b]. B ho bha° M ho bhaṇe sstatya ° kraṁbodhi saṁbu° lavastupavaneshu ânuprâptaḥ ta°. — 18. M tato pa ° naṁ kartavyaṁ | . — 19[a]. M sâdhu mahârâjeti kârayati B °nâṁ kârayeti | . — 19[b]. M °gṛihapatehi so râjâ° (21[a]) B °ca gandharvi° vyaṁ sa°.
21[a]. B sâdhû ma°. — 21[b]. B °lavastuṁ nagaraṁ catva° M °lavastuṁ mahânagaraṁ catvaraṁ çṛiṁgâṭakaṁ antarâpaṇa ma° B °ntarâyaṇaṁ°.

मुखेषु घोषणां कारयति ॥ भगवन्तो सर्वार्थसिद्धकुमारो अनुत्तरां सम्यक्संबोधि-मभिसंबुद्धित्वा कपिलवस्तूपवनेषु अनुप्राप्तो । [११५a] ततो सर्वभवन्तेहि राज्ञा शुद्धोदनेन सार्धं भगवतो प्रत्युद्गमनाय गन्तव्यं ॥

शाक्यानां वंशगतो येष्यति यो स्व चायं
5 सिद्धाभिप्रायो तृष्णाभावविरक्तचित्तो ।
क्षीणास्रवो विगतरागो समंतचक्षुः
द्रक्ष्यामथ द्वादशवर्षे अनन्तप्रज्ञं ॥
आनंदभेरिरिव श्रुत्वा शाक्यराष्ट्रे
संगीतिं देवगणवादितं लुम्बिनीये ।
10 येन प्रतिज्ञा कृता बुद्धो भविष्यं लोके
सो एष्यति भूतवचनो विगतान्धकारो ॥
प्रक्रान्तो सप्तपदं यो इह लुम्बिनीये
बोध्यङ्गसप्तरत्नानि अनुबुध्ये येन ।
यो सिंहनादं नदते अहं लोके ज्येष्ठो
15 सो एष्यति परवादं प्रभंजमानो ॥
येनेदं अपकृतं गर्भशय्यं अशेषं
उच्छोषितो च से पुनः भवहेतुः सर्वं ।
उच्छोषिता तृष्णलता च दुःखस्य मूलं
सो एष्यति बंधप्रमोचं करोन्तो लोके ॥

20 ते दानि कपिलवस्तुतो शाक्या शाक्यानियो च तं घोषं श्रुत्वा क्षिप्रमेव राजकुलद्वारे

1. M bhavanto sarvā° B °ttarāyā saṁmya° M °kavastuupava° prāptaḥ. — 2. M tato sarve bhavante° BM °hi | rājñā ça° M °na sārdha bha°. — 4. BM çākyānāṁ(M °nāṁ) çakale gate bheshyati | jagasya trāṇaṁ(M °sya prāṇaṁ) si° yo tribhavāna vi(M °vān vija° tto kahi°.

6. B °kahuḥ dakshāṁ atha° M °kahuḥ ukshāṁ atha° BM °rabdhi anantaprajñām ānaṁda°. — 8. BM °bherīrava çrutvā çākyārāshṭraṁ saṁgīti devatayava(M °yaca)ditaṁ lu° B °niye ya°. — 10. M °kṛta bhavishyaṁ | lokeça bhavishyati bhū° B °vishyaṁ lo° BM °kāro yo pra°.

12. B °nto | sapta padāni yaḥ i° M °padāni | yo i° BM °ratnāni anubudhya(B °dhyo) tena yo°. — 14. BM °siṁhanadite ahaṁ° B °jyeshṭo so° BM °nāno ye°.

16. BM °daṁ prakṛtā garbhaçayanaṁ aravas(M °sa)haṁ uposhitaṁ | (B °shishito) me punaḥ bha(M °nar bha)va° B °sarvaṁ u° M °sarvam ucche°. — 18. B ucchoshitvā tṛshṇālatā jālinī duḥ° M °shitvā tṛshṇālatā jālinī duḥ° BM °ṁ bandhanapra° karoti lo°. — 20. M °stuto mahānagarāto çākyaçākyayi° BM °dvāre saṁnipatito eva(M °te | so) ka° B °hitapramukhāyā brāhma° BM °çreshṭipramukhā vani° M °ggaho sarve° B °kapilakā° M °vāstavyā ga°.

मध्यमा सर्वे राजकुलद्वारे सन्निपतेन्सुः ॥ एवं दानि राजा शुद्धोदनो इमेन च
जनकायेन अन्तःपुरेण सार्धं कुमारामात्येहि परिवृतो धनुकरणिकहस्त्यारोहेहि
सार्धं चतुर्घोटरथमभिरुहित्वा श्रेष्ठिप्रमुखो निगमो सार्थवाहप्रमुखो वाणिजग्रामो
पुरोहितप्रमुखा ब्राह्मणा अष्टादश श्रेणीयो पुरस्कृतो परिवृतो महता राजर्द्धीये
5 महता राजानुभावेन महतो जनकायस्य हक्कारहिक्कारभेरीमृदंगपटहशंखसंनिना-
देन कपिलवस्तुतो नगरातो निर्यात्वा येन न्यग्रोधारामस्तेन प्रस्थितो भगवतो
दर्शनाय ॥ भगवतो दानि एवं भवति । अभिमानिनो शाक्याः यदि साहं
स्वके आसने निषण्णको प्रतिसंमोदयिष्यामि अत्र मानं भविष्यति चित्तस्थान्यत्वं
कथं हि नाम यो कुमारो चक्रवर्तिराज्यमपहाय प्रव्रजितो अनुत्तरां सम्यक्संबोधि-
10 मभिसंबुधित्वा धर्ममधिगतो धर्मस्वामी आत्मानं प्रतिजानाति सो पितरं च वृद्धत-
रकां च गुरुस्थानीयां च न प्रत्युत्थिहति । नास्ति च सो सत्वो वा सत्वकायो वा
यस्य तथागते प्रत्युपस्थिहन्ते न सप्तधा मूर्ध्न स्फलेया । यन्नूनाहं पौरुषमात्रं वैहा-
यसमन्तरीक्षे दीर्घं चंक्रमं चंक्रमेयं ॥

अथ खलु भगवां पितु राज्ञो शुद्धोदनस्य शाकियगणस्य च नातिमात्रं
15 ज्ञात्वा आगमनं विदित्वा पौरुषमात्रं वैहायसमन्तरीक्षे दीर्घं चंक्रमं चंक्रमति अस्पृ-
शन्तो पादतलेहि भूमिं ॥ अथ खलु राजा शुद्धोदनो दूरतो एवं न्यग्रोधारामे
भगवन्तं पश्यति पौरुषमात्रं वैहायसमन्तरीक्षे दीर्घं चंक्रमं चंक्रमन्तं अस्पृशन्तं पाद-
तलेहि भूमिं दृष्ट्वा च पुनः आश्चर्याद्भुतसंहृष्टरोमकूपजातो आश्चर्यं यावद्यं कुमारेण
ध[२९६ᵃ]र्मो अभिगमितो यथा सर्वलोके द्विपदानमुत्तमो ॥ अथ खलु राजा
20 शुद्धोदनो शाक्यो शाकियानामामन्त्रयति ॥ पश्यथ भवन्तो येन कुमारेण संकल्पो

1. M °kumāramātya ° dhanukārāpṛthakārohe° B °dhanukārathikāthikārohe° M °ghoṭapra abhi° B °ghoṭāpra abhi ° çreshṭhipramukho ni° M °shṭiprakho ni ° hapramukho vaṇi° BM °hitapramukho brā° B °rājariddhi° M °riddhiye° BM °vena mahatā janakāyasya hakkā(B °kvā)rapikkā(B °kvā)rabhe° B °grodhārāmes te°.

7¹. B abhimā° M °çākyā yadi° B °na | atha° M °atha sānaṁ bhavishya ci ° cittājyaṁ apahā° B °bhisaṁbodhitvā dharmam abhigo° M °saṁbuddhitvā dharma adhi ° gurunāṁ gurusthānīyaṁ ca na° BM °pratyutthihati ||.

11. B °ṇaka yo sā° M °tyutthi ° mūrddhā sphāleyā | B °rddhinaṁ sphāṭayā ||. — 12. B °rikshaṁ dī° M °rghaṁ caṁkramaṁmaṁ°. — 14. B °laya ca nāmātimānaṁ jñā° M °dirgha cakramaṁmati | aspṛçante pādataleḥi° B °ti | aspṛ°.

16. M °dharāme bha° B °çyati | paru° M °dirgha caṁkramaṁ caṁkramaṁti | aspṛ° B °maṁ caṁkramati | aspṛçanto pā° M °çanto pādatalehi bhūmiṁçaṁ ° punar āçcaryā° BM °hṛshṭāromakū(M °ku)paja° M °to āçcaryaṁ yādṛç ° rena nma abhigamito || ya°. — 19. BM °no çākyā çāki° B °i pa°. — 20. B °bhagava° M °lpa viciatyo paçā° BM °sthapati dra° M °shṭaṁ sarvajño sarvajño sarvadha° B °bhujaṁta saṁkalpaṁ° BM °ddhārthasa° B °rvasaṁsiddhapātraṁ dṛ° M °siddhasaṁ°.

चित्रितो सार्थवता द्रष्टुं सर्वज्ञं सर्वधर्मेष्वभिज्ञातसंकल्पं सर्वसिद्धं नरेन्द्रं सो पश्यतु सिद्धार्थं सर्वसिद्धिसंप्राप्तं ॥

दृष्टान पुत्रं परिपूर्णकायं
सुलक्षितं लक्षणविचित्रितांगं ।
पञ्चममासे यथ एव चन्द्रो
परिवृतो नक्षत्रतारकेहि ॥
दृष्ट्वा सुरूपं असमानकायं
तमायताक्षं श्रियेव ज्वलमानं ।

. . . . . . . . . . . .

अथ खलु राजा शुद्धोदनो यावत्तकं यानस्य भूमि तावत्तकं यानेन यात्वा यानातो प्रत्योरुह्य स्वकमन्तःपुरेण सार्धं शाक्यमण्डलेन च पदसा येन न्यग्रोधारामं प्रविष्टो येन भगवांस्तेनोपसंक्रमित्वा मूर्ध्ना भगवतः पादौ वन्दित्वा गाथामध्यभाषि ॥

इमं तृतीयं तव भूरिप्रज्ञ
पादान्ते वन्दामि समन्तचक्षुः ।
यं च ते नैमित्तिका व्याकरेन्सुः
यं जम्बुच्छाया न जहे इमं च ॥

अथ खलु भगवां न्यग्रोधारामे तालमात्रं वैहायसमन्तरीक्षे स्थित्वा विविधविचित्राणि यमकप्रातिहार्याणि करोति । हेष्टिमं कायं प्रज्वलति उपरिमातो कायातो शीतस्य वारिस्य पंच धाराशतानि स्रवन्ति । उपरिमे काये प्रज्वलिते हेष्टिमातो कायातो शीतस्य वारिस्य पंच धाराशतानि स्रवन्ति ॥ अथ खलु भगवानुपन-

3. BM °kāyaṃ | su° M °kāyaṃ | sulakṣaṇasurakṣitavici° B °taṃ lakṣaṇavi° BM °tāṃga pa°. — 5. BM pañcamātre (M °tra) yathaiva candro° BM °vṛtālakṣaṇa°.

7. BM °paṃ prasamānakāmaṃ ta° M °çiriyaṃ jvaramānaṃ || B °mānaṃ || atha°. — 10. M °ca yāvatakaṃ yānasya bhūmī tāvantakaṃ yāna° B °yāsā yānāto pratyoru° M °pratyāru° BM °hya sa antaḥ° B °ṇḍalaṃ sākiyamaṇḍa° M °padavyāyena ca nya° B °nā yena nya° M °ndilanā bhagavato pādau çirasā vandi° thām adhyebhāṣai ||.

14. BM °bhūmiprajña vadāmi te (B °u te ||) samantā° kaluḥ yaṃ°.

16. BM yaṃ ca naimittikā vyākaretsu (B °tsuḥ ||) yac ca jambucchāyā na jahetsur i- (M °tsuḥ) imaṃ ca tṛtīyaṃ (M °yāṃ) ||. — 18. M °dhārāmaṃ tā° °rṇāni karo° B °roti he°. — 19. B °heṣṭimaṃ° M °jvarati uparimātro kāyā°. — 20. BM uparimaṃ kāyaṃ pra° B °heṣṭimā° M °çatāniçatāni sra°

21. M °yavāna çiahalihaṃ varuṇaçiddhiye a° °trā vanatikakudavarṇa° B °kuhlara°

वर्णमूर्तिये अभिनिर्मिणित्वा अन्तरकुक्षं वर्णरूपसमुपेतो पुरस्तिमायां दिशायां
अन्तरहितो पश्चिमायां दिशायां प्रादुर्भवति । पश्चिमायां दिशायां अन्तरहितः
पुरस्तिमायां दिशायां प्रादुर्भवति । उत्तरस्यां दिशायां अन्तरहितो दक्षिणा-
यां दिशायां प्रादुर्भवति । दक्षिणायां दिशायामन्तर्हितो उत्तरायां दिशायां
5 प्रादुर्भवति ॥ एवं दानि महाप्रातिहार्यं विस्तरेण कर्तव्यं ॥ तत्र दानि बहूनि
प्राणिकोटीशतसहस्राणि भगवतो एदृशं ऋद्धिप्रातिहार्यं दृष्ट्वा प्रमुदिता प्रीतिसौ-
मनस्यजाता संवृत्ता आश्चर्याद्भुतप्राप्ता हक्कारसहस्राणि प्रवर्तेन्ति ॥ महाप्रजाप-
तीय दानि गौतमीय यदा भगवानभिनिष्क्रान्तो तस्य रुदितेन शोकेन च अक्षी-
णि पटलेहि च संछन्ना अन्धा संजाता । तहिं च यशोधरायै भगवतो विविधानि
10 विचित्राणि यमकप्रातिहार्याणि करोन्तस्य हक्कारसहस्राणि वर्तन्ति महाप्रजापती
गौतमी यशोधराये पृच्छति । किं एते हक्कारसहस्राणि कुर्वन्ति ॥ यशोधरा
आह ॥ एषो भगवां वै[296b]हायसमन्तरीक्षे विविधानि विचित्राणि यमकप्रा-
तिहार्याणि करोति नापि त्वं पश्यसि ॥ यशोधरा आह ॥ आगमेहि अहन्तया
करिष्यामि यथा त्वं पश्यसि ॥ ताये दानि यशोधराये यत्र भगवतो प्रातिहार्याणि
15 करोन्तस्य कायातो पंच धाराशतानि प्रवर्षन्ति ततः उदकांजलिं पूरेत्वा महाप्रजा-
पतीये गौतमीय अक्षीणि आच्छादितानि तानि च पटलानि बुद्धानुभावेन भिन्ना-
नि । तस्या दानि यथापौराणा शुद्धा विमला दृष्टि संजाता ॥

अथ खलु भगवां वैहायसमन्तरीक्षे विविधानि विचित्राणि यमकप्रातिहार्याणि
कृत्वा बहूनि प्राणिसहस्राणि ऋद्धिप्रातिहार्याणि दर्शयित्वा आर्यधर्मेषु प्रतिष्ठा-
20 पयित्वा प्रज्ञप्त एव आसने निषीदे ॥ अथ खलु राजा शुद्धोदनो शाक्या च भग-

M °purastimāyāṁ diçāyāṁ prādurbhavati | paccimāyāṁ diçāyāṁ antarhito purastimāyāṁ diçāyāṁ prādurbhavati || u°.

3. B uttarasyāyāṁ diçāyam antarahito uttarā° (sigue sic.) M °syāyāṁ diçām antarhito dakshiṇāyāṁ diçaṁ prā°. — 4. M dakshiṇāyāṁ diçāyām anta° B °ttarāyaṁ diçāyaṁ prā°. — 5¹. M °hārya vi°. — 5². BM °bahuni prā° M °koṭisahasrāṇi bha° B °vṛttaḥ ā° M °vṛttāḥ B °ptā hakvāra° vartanti | M °vartanti.

7. B °jāpati | ya dāni° M °gautamīyāṁ yadā bha° B °syā uditena ço° M °syā rone naiva ço° B °akshiṇi paṭalehi ca sañcha° M °talena ca sañchannā andhā saṁjātāḥ. — 9. B °trāni yama° °sya hakvāra° M °sya hakāra° °ti gautamī | yaço°.

11¹. BM °hakvāra° M °kurvati. — 12. B °trāni yama°. — 13². BM māgame°. — 14. M tāyaṁ dā° °dharāye yataṁ bha° B °dharāye yattaṁ bha° °hāryā ka M °to prātihā° °ntī | tato u° B °nti | tataḥ° BM °līṁ puro° gautamiye akshiṇi ācchāditāni°.

17. BM tasya dā° rūpāṁ çuddhā (B °ddho) vi°. — 18. BM °yamakaprātihāryāṇi kṛtāni ba° B °sāṇi riddhiprātihāryāṇi da° M °rçayitvā aryyadha° °pta eväsa° BM °ne nishide |. — 20. M °çākyāç ca bhagavato pādau° sukhaṁ ca pra° °detaṁ B °detaḥ |.

वतः पादौ शिरसा वन्दित्वा भगवन्तं साधु च सुष्ठु च प्रतिसंमोदित्वा एकमन्तं निषीदेन्सुः । महाप्रजापती गौतमी च यशोधरा च सार्धं च अंतःपुरेण भगवतः पादौ शिरसा वन्दित्वा भगवन्तं प्रतिसम्मोदित्वा एकमन्ते निषीदेन्सुः । अथ खलु राजा शुद्धोदनो वेशजातो भगवतो हिताहितं अपृच्छे ॥

तं देववर्णं सुकुमाररूपं (5)
उद्यानभूमिं अनुचंक्रमन्तं ।
पिता पुत्रं प्रांजलिको उपागमे
इन्द्रं व देवा त्रिदशा व शक्रं ॥
इदं तृतीयं तव भूरिप्रज्ञ
पादान्ते वन्दामि समन्तचक्षुः । (10)
यं च ते नैमित्तिका व्याकरेन्सुः
जंबुच्छाया न विजहे इमं च ॥
ते देववर्णा उभये समागता
बुद्धो च बुद्धस्य पिता च राजा ।
उपशोभति सालवने निषण्णो (15)
चन्द्रो यथा ऋक्षगणा प्रमुक्तो ॥
अथाप्रमेयस्य पितुरभूषि
चिरस्य दृष्टान प्रियं मनापं ।
पुत्रं स्वकं प्राणसमं निषण्णं
हिताहितं पृच्छति वेशजातो ॥ (20)
पुरा तव कम्बलपादुका च
सुचित्रा सूक्ष्मास्तरसंस्थितासु ।

2. M °pati gau° B °gautami° M °rddhaṁ cāntaḥpureṇa bhagavato pā° BM °shidetsuḥ | . — 3. BM °taṁ ca pṛcche | (M °cchet). — 5. BM °ntaṁ pi°.

7. B °indro ca deva tṛiṇā ca çakro° M °indro cāṁ de ° çā ca çakraḥ. — 9. BM °yaṁ ca ta° M °bhūmiprajño pā° BM °n te vanditvā sa°.

11. BM pañcānya nai° M °mitikā vyākaretsuḥ jaṁ° B °retsuḥ | jaṁ° BM °jahe | i° B °ñaṁ ca de°. — 13. M °tā buddhaçca buddha° BM °jā u°. — 15. BM °lavaṇe ni° M °sharṇṇo candro° B °straga° M °mukta.

17. M atha pra° BM °dṛishṭvātanipri°. — 19. M °nisharṇṇaṁ hitāhitāhitaṁ pṛicchaṁti ca ve° B °cchanti veçajāto pu°.

21. M puraṁ bhuvaṁ kaṁbalapādukā ca su° B puro tavaṁ ka ° dukā ca sucitrā sukshmāstaraṁ saṁ° M °citrā sukshmottamasaṁ°.

अभिरुह्य तां चंक्रमते च वीर
चेतम्हि कृत्स्नम्हि धरीयमाने ॥
सो दानि ताम्रमृदुजालिनीहि
समन्तनेमीहि सहस्ररेहि ।
5 कुशकण्ठकशर्करशाक्रमन्तो
कथन्ते पादौ न रुजन्ति वीर ॥

भगवानाह ॥

सर्वाभिभू सर्वविदू हमस्मि
सर्वेषु धर्मेषु अनोपलिप्तः ।
10 सर्वं जहे तृष्णक्षया विमुक्तो
न मादृशो संप्रजनेति वेदना ॥

राजा आह ॥

पुरा तव लोहितचन्दनेन
शशिस्य रश्मोपनिभेन आसे ।
15 मनोज्ञगन्धेन सुशीतलेन
स्नपका विलिम्पिन्सु ते स्नापयित्वा ॥
सो दानि ग्रीष्मासु खरासु रात्रिषु
वनाद्वनं ईर्यसि चंक्रमन्तो ।
ओदातशीतेन सु[297]चीन वारिणा
20 को दानि ते स्नापयते क्लिलन्तं ॥

भगवानाह ॥

शुद्धा नदी गौतम शीलतीर्था
अनाविला सद्भिः सदा प्रशस्ता ।

1. BM *hya taṁ caṁ *ca vara *cchatra dhariyamāna | (M *nā). — 3. BM *tāmrehi mṛidu(B *dūhi)jā* B *hasrārehi ka*. — 5. BM kuçakaṃṭhakaçakara akra* M *nto kvacitea pā* B *ceike pā *vīrā ‖.
8. BM *bhū sarvavidu tam asmiṁ sarve *ptaḥ sa*. — 10. B sarve ja* M *kto na mādṛiçīṁ upajānati yesā ‖ B *na mānasaṁ upajānati ve*.
13. B puro tava rohitacandanena saçiahya rakto* M *va rohita *na çaçisya raktoparibhedakāre B *le ma*. — 15. B *snayī a* M *snayakā viliṁpesu te* B *paisu te*.
17. B *vanāddhana irya* M *vanāndhana irya*. — 19. BM tato tena çī* M *kilataṁ ‖.
22. BM *gauttama çī* M *lā sadbhis sadā praçastāḥ.

यस्मिं ह्रदे देवगणेहि स्नातो
ओगाढगात्रो प्रतरामि पारं ॥
धर्मो ह्रदो गौतम शीततीर्थो
अनाविलो सद्भिः सदा प्रशस्तो ।
यस्मिं ह्रदे देवगणेहि स्नातो 5
पृथिवीं प्रवाहेति स्वपुण्यगन्धां ॥

राजा आह ॥

यदा तुवं काशिकवस्त्रधारी
पद्मुत्पलचम्पकवासितानि ।
शुक्लानि वस्त्राणि निवासयित्वा 10
सो शोभसि शाकियमण्डलस्मिं
शक्रो व साहस्रनेत्रान मध्ये ॥
सो दानि शाणानि च पट्टकानि च
रक्तानि वस्त्राणि द्रुमत्वचानि ।
धारेसि तं च अजुगुप्समानो 15
इदं पि ते आश्चरियं महन्त ॥

भगवानाह ॥

न चीवरे शयने भोजने वा
अनुध्यापिता भोन्ति जिना नरेन्द्र ।
लब्ध्वा मनापं अथवापि अप्रियं 20
उपेक्षका भोन्ति जिना प्रशामका ॥

राजा आह ॥

पुरा तव आजन्यरथा विचित्रा
सुवर्णकक्षरुचिरा महार्हा ।

1. BM °snā(M °snāyā)to anātragā°. — 3. BM °gauttama çī° M °lo sadbhi sadā pra-
śasto | . — 5. B °thivī pra° M °prithvī pravāhaṃti sapu° B °ti sapu°.
8. BM yadā tvaṃ kā° B °dhārī pa° M °ri padumutparaṃ caṃpa° B °tpalaṃ ca°. —
10. M °ṇḍalasmiṃ | çakro va sahasranetrāna madhye B °smiṃ | çakro va sahasranetrāna ma-
dhye | .
13. M °dāni śāṇāni ca mantakāni ca° B °ṇāni ca mattakāni ca ca° BM °tvacena dhā°.
15. BM °taṃ ca | anu(M °abhi)ju° idam te āçcarya bha°.
17. B °ha cīva°. — 18. B cīva° M cīvare çayana bho° anudhyā° nti tanā narendrā | .
— 20. BM labdhā ma°.
23. M °tava anajanya° B °rūpakāñcanu° M °rupakāñcanu° BM °rā ga°.

श्वेतं च छत्रं मणिखड्गचामरं
ध्रुवं ग्रहेत्सु ते दिशं प्रयायतः ॥
पुरा तव यातजवो उदग्रो
हयोत्तमो कण्ठको शीघ्रवेगो ।
5 आजानेयो काञ्चनजालछन्नो
अभीक्ष्ण सो वहति येन कामं ॥
यो युग्ययानेहि तुवं उपेतो
रथेहि अश्वेहि च कुञ्जरेहि च ।
राष्ट्रेण राष्ट्रं अनुचंक्रमन्तो
10 कच्चिन्न शान्तो सि तदद्य ब्रूहि ॥

भगवानाह ॥

रथो मे ऋद्धिपादो स्वायत्तवाहनो
धृती च प्रज्ञा च स्मृती च सारथी ।
सम्यक्प्रधाना चतुरो मे अश्वा
15 समं प्रयातो हं पदं सुसंस्कृतं ॥

राजा आह ॥

पुरा तुवं रूप्यिभाजनेषु
सुवर्णपात्रेषु च भुंजियान ।
शुचिं प्रणीतरसकं च भोजनं
20 राजानुभावेन उपस्थिहेन्सु ॥
सो दानि लोलं च अलोणकं च
रूक्षं अलूखं अरसं सरसं च ।

1. BM °cchatraṁ ma° M °khadgacâmaraṁ | dhruvaṁ sugṛhna di° B °grahetsu di° M °yato | . — 3. M °haryotta° B °vego â°. — 5. M °bhikshana so°.
7. M °nehi yena kâmaṁ | yo yugyayânehi bhûshaṁ upe ° rehi | . — 9. BM °kaçcin na çânto si° M °tahida bruhi ‖ B °tad iha kruhi ‖ .
12. B °me riddhi° M °ciptavâ° B °dhṛitî pra° M °sârathi ‖ . — 14. M °myakapradhâ ° çâ pravaṁ pra° B °çrâ pamaṁ ° haṁ padamasaṁ° M °padamasaṁ°.
17. B puro tu° M °râ tava rûpiyabhâñja° BM °ṇṇapatre° M °jiyâḥ | . — 19. BM °ṇîtaṁ rasa° B °naṁ | râ° M °hetsuḥ ‖ B °hetsu sa°.
21. M °ni lolaṁ ca aloṇakaṁ ca lukham ca alushaṁ ca asaraṁ ca saraṁ | B °kaṁ ca lûkhaṁ ca alûkhaṁ ca arasaṁ ca sarasaṁ pari°.

परिभुंजसि तं च जुगुप्समानो
इदं पि ते आश्चर्यं भदन्त ॥

भगवानाह ॥

ये चापि बुद्धा पुरिमा अतीता
अनागता यो पि अहं अनेयो । 5
लूखं अलूखं अरसं सरसं च
इमाधिकी लोकहिताय भुंजति ॥

राजा आह ॥

पुरा तुवं गोणिकतूलिकासु
अजिनाखुते क्षोमसुखोपधाने । 10
सुवर्णपादे शयने महान्ते
त्वं मोदसे मुक्तपुष्पावकीर्णे ॥
सो दानि दुर्गाय धराय भूमिये
तृणानि पत्राणि च संस्तरित्वा ।
त्वं मोदसे . . . . . सत्वसारो 15
कथिने गात्राणि रुजन्ति धीर ॥

भगवानाह ॥

नाखल्विधा शाक्य दुःखं स्वपन्ति
सर्वे च मे शोक[297ᵇ]ज्वरा प्रहीणा ।
सो हं सदा निर्ज्वरथो विशोको 20
जयाम्यहं सर्वभूतानुकम्पी ॥

1. B °bhuñjasi tvam atra ju° M °bhuñjasi tvaṃm atra sujugupsamānaṃ idaṃ pi te āryya bha°. — 4. BM °gatā ye(M °tā cā)pi yo cahaṃ° B °neyo lā°.

6. M lukhaṃ alushaṃ asaraṃ sa° B °ca | idam arthi° M °ca imarthi°. — 9. M puro bhuvaṃ° B °goṇika ° su ajānastṛi° M °su ājānastṛi°.

11. M °ne mahaṃ tvaṃ°. — 13. M °bhūmira tṛi ° saṃstaritvā B °tvā tvaṃ°. — 15. M saṃmodaye satva° B °se satva° M °ro kvarinta gā ° rudanti dhīraḥ ‖.

18. M °duḥkha svapati sarve° BM °me so jva° M °prahīṇā ‖. — 20. BM so haṃ açoko nirjvaratho viçoko(M °vikoço) ja ° kampi ‖.

राजा आह ॥

पुरा तुवं गौतम स्वके अगारे
अन्तःपुरे देवविमानकल्पे ।
प्रदीपखद्योतगणाभिकाशे
5 कूटागारे पिथितवातपाने ॥
विचित्रमाल्यास्तरणाश्च नार्यो
अलंकृता अप्सरसन्निकाशा ।
उपस्थिता किंकरणीया उत्सुका
मुखं उदीक्षन्ति किमार्य आह ॥

10 भगवानाह ॥

अथापि मे शाक्य स्वके विहारे
देवा च ब्रह्मा च प्रभास्वरा च ।
चित्तं येषां मह्य वशेन वर्तति
यहिं च इच्छामि तहिं व्रजेमि ॥

15 राजा आह ॥

भेरीमृदंगतुरियाभिगीतो
पाणिस्वराख्यानविदूहि तत्वं ।
स शोभसि शाकियमण्डलस्मिं
शक्रो व साहस्रगतान मध्ये ॥

20 भगवानाह ॥

सूत्रान्ते वैयाकरणाभिगीतो
विद्याविमुक्तिप्रतिबोधनो हं ।

2. M puro tu° BM °gautama°. — 4. M °ṣu kuṭāgāre vithitavā° B °vātayāne vāsi°.
6. M nāriyo° B °ṇārtha nāriyo | a° BM °kṛtā u°. — 8. M °yā samutsukā sukhaṃ° nti kiṃ āryya āha ||.
11. BM °svakā vihārā divyā ca bra°. — 13. BM °tiṣāṃ ya mera ma° M °hya vasena varttati° B °yahiṃ icchā° M °ihapatha ||.
16. BM °gaturyābhigīte yā° M °khyāṇavidheyaistatvaṃ | B °vidho ste tvaṃ |. —
18. BM so çobhati ça° M °yamaṇḍa° BM °kro va sāhasragatā°.
21. M sutrānta vai āka° B sūtrānta vai āka° M °dhanātha | B °haṃ sa°.

सोभाम्यहं भिक्षुसंघमध्ये
ब्रह्मा व साहस्रगतान मध्ये ॥

राजा आह ॥

पुरा तुवं भीम स्वके अगारे
अन्तःपुरे देवविमानकल्पे । 5
रक्षन्ति ते वर्मधरा मनुष्या
सुसंविताः खड्गगृहा प्रहारिणो ॥
सो दानि एको विहरे अरण्ये
उलूकभेरण्डकसंनिनादे ।
अनेकव्यालानुचरितासु रात्रिषु 10
क्वचित् न भीतो सि तदद्य ब्रूहि ॥

(भगवानाह ॥)

सर्वे पि ये यक्षगणा समागता
चण्डा पि हस्ती गिरिदुर्गचारी ।
न मादृशे रोमहर्षं जनेयु 15
भयं प्रहायाभयमस्मि प्राप्तः ॥
एको चरामि मुनि अप्रमत्तो
निन्दाप्रशंसासु अवेधमानो ।
सिंहो व शब्देषु असंत्रसन्तो
वातं व जालेषु असज्जमानं । 20
नेतारमन्येषु अनन्यनेयं
भीरुं जिनं शाक्य कथं वदेसि ॥

1. B °hmā adha° M °hmā saha°. — 5. BM °lpe ra°.
6. BM °te dharma° M °nuṣyaḥ sarvānitāḥ khaḍgadṛ° B °ṣyā sarvanitaḥ kha° ri-ṇā | . — 8. B °bheraṇḍa° māde a°. — 10. BM °vyālānucari° M °kvacin na bhī° tad adya bruhi | sarve° B °tad idya bruhi || sarve°.
13. BM °pi ca ya° M °samāgatāḥ caṇḍā pi hasti gi° B °ṇḍā pi hi hasti gi° BM °rga-dhāri | . — 15. BM na mā(M na tā)dṛçaṃ romaharṣaṇī(M °ṣaṃ) sujāneyā bhayaṃ prahāya abhaya(M °ya)smiṃ prāptaḥ(M °pto) | .
17. BM eka carānte(M °nte a)nindā° M °çaṃsāsu° BM °pamānaṃ | . — 19. B siṃhe va çabde° M siṃha va ça° BM °ntrasantaṃ vātaṃ va jā° °sajyamānaṃ | .
21. M nabhvam anye° BM °bhiruhi(M °ruha)ṃ saṃjābya va°.

राजा आह ॥

पृथिवी च ते विजिता सर्वकल्या
पुत्राण ते पूरसहस्रमस्ति ।
रत्नानि च सप्त परिख्यचिता
5 श्रामण्यमेवाभिगतो सि वीरा ॥

भगवानाह ॥

पृथिवी च मे विजिता सर्वकल्या
पुत्राण मे पूरसहस्रमस्ति ।
रत्नानि च अष्ट इमानि सन्ति
10 एतादृशं रत्नमन्यं न अस्ति ॥
तं वीतरागं सुसमाहितेन्द्रियं
सम्यक्प्रमुक्तं अखिलं अनाश्रवं ।
पुत्रं पिता प्राञ्जलिको उपागमे
देशेहि मे मार्गं मनुष्यहिताये ॥
15 तमेन ज्ञातिन परिवृत्त शास्ता
शुद्धोदनं पितरं एतदब्रवीत् ।
अभीक्ष्णं सो रोचय भिक्षुदर्शनं
मा प्रमादि भेष्यति तुभ्य धर्मो ॥
अथाप्रमेयस्य पितु अभूषि
20 संवर्णितं तायिनो भिक्षुदर्शनं ।
समनन्तरं सत्पुरुषो भवन्तो
अथोत्तरीधर्मपथु विशो[298ᵃ]धये ॥
एतादृशो आसि तदा समागमो

1. BM °viditā° B °rvakalyā putrāṇa te purasaha° M °trāna te purahsaha° BM °sya ra°. — 4. M °virāḥ ||.
7. B °vī te ca vi° M °vī ca te vi° BM °viditā° B °rvakalyā putrā° M °trāna me purasa° B °me purasa°. — 9. M ratanāni ca° BM °santo e° M °tnaṃ anya nāsti | B °anyan nāsti |.
11. M °ndriya sa° B °yaṃ samyu° M °khile a°. — 13. M °jaliṃko u° BM °çehi mamāryaṃ ma° B °manuṣyāhitā°. — 15. BM °phaṛitvā çā° B °danapi°.
17. M abhīkṣṇaṃ sāroti | bhi° B °abhīkṣṇe so rocayati bhi° M °pramāyiṣyati tuva dharma | B °dharmā ||. — 19. M °pitur abhūṣi saṃvahitaṃ° B °ṣi saṃvarṇṇitaṃ tā°.
21. M samanta° BM °ruṣā bha° B °nto | a°. — 23. M °dṛçaṃ āsi sadā° B °āsi sadā sa° M °traç ca ha°.

पितुश्च पुत्रस्य च हर्षणीयो ।
तमादृशं सुगतमनुस्मरन्तो
निरामिषां को न लभेय प्रीतिं ॥

पितापुत्रसमागमो समाप्तो ॥

भिक्षू भगवन्तमाहंसुः ॥ पश्य भगवं कथं आयुष्मता उदायिना अयं राजा 5
शुद्धोदनो अभिप्रसादितो ॥ भगवानाह ॥ न हि भिक्षवो एतरहिमेव एतेन
उदायिना एषो राजा शुद्धोदनो अभिप्रसादितो अन्यदापि एष एतेन उदायिना
राजा शुद्धोदनो अभिप्रसादितो ॥ भिक्षू आहन्सुः ॥ अन्यदापि भगवं ॥ भग-
वानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवो अतीतमध्वानं नगरे वाराणसीये काशिजनपदे राजा ब्रह्मदत्तो 10
नाम राज्यं कारयति कृतपुण्यो महेशाख्यो सुसंगृहीतपरिजनो दानसंविभागशीलो
महाधनो महाकोशो महाबलवाहनो । तस्य तं नगरं वाराणसी काशिजनपदं
ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च आकीर्णजनमनुष्यं च बहुजनमनुष्यं च सुखि-
तमनुष्यं च प्रशान्तदण्डडमरं सुनिगृहीततस्करं व्यवहारसंपन्नं ॥ तत्र सुपार्श्वो
नाम काकराजा प्रतिवसति अशीतिसहस्रपरिवारो । तस्य दानि काकराज्ञो 15
सुपार्श्वा नाम काकभार्या । तस्या काकीये राजभोजनेन दोहलको । सा तस्य
सुपार्श्वस्य काकराज्ञो तं दोहलं आचिक्षति ॥ सो आह ॥ अयं आज्ञापयिष्यं
राजभोजनं भुंजाहीति ॥ सो दानि काकराजा अमात्यमाह ॥ सुपार्श्वाये राजभो-
जनेन अभिप्रायो आज्ञापेहि काकानां यं राज्ञो ब्रह्मदत्तस्य महानसातो राजभो-
जनमाहरिष्यन्ति ॥ सो अमात्यो आह ॥ स्वामि आनयिष्यामि राजभोजनं 20
पि ॥ सो दानि अमात्यो तेषां काकानामाज्ञापेति । गच्छथ राज्ञो ब्रह्मदत्तस्य

2. BM °smarantā ni° B °ṣāṃ ko la°. — 4. M iti śrīmahāvastuavadāne pitā° māptaṃ ||. — 5¹. BM bhikṣu bha° M °m āhaṃsuḥ ||. — 5². B °bhagavāṃ ka° M °bhagava ka° bhiprasād°.

6². M na hi bhi° tarahiṃm eṣaṃ etena udāyinā | eṣo° BM °pi eṣa etinā u°. — 8². BM bhikṣu ā° B °hansuḥ ||. — 8³. M °gavan ||. — 9. M °kṣavaḥ B °vaḥ bhū°. — 10. M °hmadatto nā°.

12. BM °vārāṇasī kāśi° M °sphītam ca kṣemaṃ ca ākīrṇa° ḍamaraṃ° hītataskarasaṃ-pannaṃ ||. — 14. BM °vasati | aśītikā (B °kāka)saha° vāro ta°. — 15. M °dāni kāka supārśvo nāma bhāryyo B °bhāryā ta°.

16¹. BM tasya kākī° M °doharako B °lako sā°. — 16². B °dohalaṃ ā°. — 17². M ayaṃ ānāpayi°. — 18¹. B °amātyaṃ āhansuḥ || M °amātyā āhansuḥ ||. — 18². M supārśvo-yaṃ rājabhojane ° yo āṇāpāhi ° hānaso rājabhojanenam āhariṣyati || B °ṣyati ||. — 20². M °mātyā ā°.

21¹. BM °nām ānapeti ga°. — 21². BM °tha | rājño bra°.

महानसातो राजभोजनमानेय सुपात्रस्य काकराज्ञो भार्या परिभुंजिष्यति ॥ ते
काका आहन्सु: ॥ राजकुलं इष्वस्त्रशिक्षितैः रक्षीयति । परिसमन्तेन राजकुलस्य
पक्षी न शक्नोति अतिक्रमितुं ततो न शक्याम वयं राज्ञो ब्रह्मदत्तस्य महानसातो
राजभोजनमानयितुं ॥ अपरे पि आयाचन्ति न च उत्सहन्ति । अशीतिहि
5 काकसहस्रेहि न च कोचिदुत्सहति राज्ञो ब्रह्मदत्तस्य महानसातो राजभोजनमा-
नेतुं मा तत्र गता काण्डेन वा गुडिकाये वा हन्येम ॥ तस्य दानि काकराज्ञो
अमात्य[११८a]स्य एतदभूषि ॥ अहं सुपात्रस्य काकराज्ञो अशीतिनां काकसह-
स्राणां अमात्यो यदि च अहं न शक्नोमि एतं सुपात्रस्य काकराज्ञो आयाचितं कर्तुं
न पुरुषकारकं भवति अथ्याहं गच्छामि स्वकं राज्ञो सुपात्रस्य निवेदितुं ॥ महा-
10 राज अत्र स्वकं महानसातो राजभोजनं आनेमि यदि हन्यामि यदं भवतु एकश-
रीरेण न पुनः सुपात्रस्य काकराज्ञो भार्याये भोजनं नानेमि ॥ सो दानि तेषां
राजपुरुषाणां इष्वस्त्रशिक्षितानां व्याक्षिप्तचित्तानां आज्ञातो । ततः राज्ञो ब्रह्म-
दत्तस्य महानसातो नानाप्रकारं राजभोजनं भक्ष्यं वर्णरसोपेतं तुण्डेनादायापग-
च्छति । दिवसे दिवसे पुनर्पुनः हरति ॥

15 तेहि तेहि सूपिकेहि राज्ञो ब्रह्मदत्तस्य निवेदितं ॥ अत्र महानसे काको अपरा-
ध्यति राजभोजनमुच्छिष्टीकरोति विट्टालेति विध्वंसेति वयं कर्मे प्रसृता तेहि
कर्मेहि उत्क्षिप्ता न निवारयितुं ॥ राज्ञा अमात्या आज्ञप्ता ॥ एवं महानसं
जालेन पिधापेथ यथ सो काको न महानसे शक्येय अपराधितुं ॥

मनसा देवानां वचसा पार्थिवानां
20 नचिरेणाढ्यानां कर्मणा दरिद्राणामिति ॥

1. M °âhaṁsuḥ |. — 2[1]. B °çikshito ra° M °çikshito rakshayati. — 2[2]. B °knoti | a° M °knoti abhikra°. — 4[1]. B °āyāchyanti | na° M °āyāchyaṁti na° B °hanti a°. — 4[2]. BM °hi na ca kocid u° B °janam ânituṁ | mâ° M °janam ânayituṁ | ye tatra° B °tâ kaṇḍena vâ guḍikâye vâ hanyema | M °tâ kaṇḍena vâ guḍikâye va hanyema |.

6. M °tyasyaita°. — 7. B °knomi | e° M °knomi | etaṁ râjño su° âyantikaṁ ka° BM °vati | asmâ° M °svakaṁ râjño supâtrasya kâke niveditum B °sya kâkaniveditum |. — 9. BM °tra sakâ mahâna° B °di haṁnyâ° M °di haṁnyâmi ahaṁ° BM °vata | e° M °bhâryyâye nânyemi || B °naṁ nânemi ||.

11. B °kshitânâṁ vyâkipiaci° BM °nâṁ vijñâtvâ ta°. — 12. M °graṁ varṇarasa° ṇḍe-nâdâya ga°. — 14. M °naḥ harati |. — 15[1]. M °tehi supa° veditaṁ |. — 15[2]. BM °ko aparadhya° M °cchishṭîkaroti viṭṭâreti viddhaṁsa° prasûtâ tehi karmehi ukshiptâm atirâra° B °prasûtâ te ° ukshiptâmanivâra°.

17[1]. M râjâ a° ṇaptâ |. — 17[2]. B °petha so kâke na mahâ° M °petha | yathâ ° pa-radhyituṁ | B °paradhyituṁ |. — 19. M °ṇaḍhyânâṁ°.

राज्ञो ब्रह्मदत्तस्य प्रथममायेव सर्वन्तं महानसं जालेन अपिहितं ॥ सो काको
तत्र महानसे न शक्नोति ओपतितुं नापि शक्नोति अपकर्षितुं ॥ सो पि तर्केति
कथं अहं इतो राजभोजनं हरिष्यामि ॥ तस्य काकस्य एतदभूषि ॥ यन्नूनाहं
एतं पन्थं रक्षेयं येन पथेन महानसातो राज्ञो भक्तं अभिनीयति ॥ यतः पन्थातो
तं पश्यति राज्ञो अभिनीयन्तं ओदनं वा व्यञ्जनं वा मांसप्रकाराणि वा खज्जकं
वा तिलकुटं वा अन्यं वा कंचिद्भक्ष्यं ततः तुण्डेनादाय गच्छति ॥ राज्ञा आज्ञत्तं
सर्वेषामेतेषां परिवेषकानां वर्षवराणां च भोजनभाजनानां पिधानानि देथ ॥ ते
दानि परिवेषका तं भोजनं पिधानेहि अपिहित्वा महानसातो राज्ञो अभिनीयन्ति ॥
ततो सो काको न भूयो शक्नोति हर्तुं ॥ तस्य दानि काकस्य एतदभूषि ॥ कथमहं
शक्नेयं काकराज्ञो भार्याये भूयो राजभोजनं हर्तुं ॥ सो दानि यं राजा ब्रह्म-
दत्तो चेटीनां हस्ते अर्पयन्तो देवीनां कवलानि प्रेषति ततः चेटीनां हस्तातो
हरति ॥ राज्ञा ब्रह्मदत्तेन श्रुतं । यतः [199a] देवीनां कवलेहि प्रवेशीयन्तेहि
सो काको चेटीनां हस्तातो भोजनं हरति ॥ राज्ञा आज्ञत्तं ॥ सर्वासां चेटीनां
कवलानि प्रवेशयन्तानां अपिधानानि देथ ॥ तत्र च राज्ञो ब्रह्मदत्तस्य सुबहुं
अमर्षं संजातं ॥ अहो यादृशो एषो काकः धृष्टो मुखरो प्रगल्भो च साहसिको
च धनुहस्तेहि न शक्यति रक्षितुं अनान्तरहा ओपतति ॥ राज्ञा आज्ञत्तं ॥ यो
मे एतं काकं जीवन्तं गृहीत्वा अभिनीय तस्य विपुलं अभिच्छादनं ददेयं ॥ सर्वस्य
परिवारस्य आज्ञत्तं एवं राजा ब्रह्मदत्तो जल्पति ॥

1a. M °sarve taṁ ma° lena āpihiti |. — 2a. B °opayituṁ nā° apariddhyituṁ | M °apa-radhyituṁ. — 2. B °taketi° M °takehi kathaṁ ° rishyaṁ ti. — 3b. M °bhūmi | B °shi ya°. — 3c. M yaṁ nūnāhaṁ evaṁ patthā rakshoya ya° B °haṁ | etaṁ panthā rakshoya ye° M °ktaṁ asiripiyati |. — 5. BM yataḥ panthā(M yato yathā)to taṁ paçyati rājño allipīyati tataḥ panthā(M °lipiyati | tato paṁthā)to taṁ paçya° B °ntaṁ | o° M °piyaṁtaṁ odanaṁ vyañjanaṁ vā mānsaprakāçi vā khajakaṁ ° nyaṁ vā kaṁcid bhakshyaṁ | ta° B °nyaṁ vā kecid bhajyaṁ vā || ta°.

6. M °āṇantaṁ eteshāṁ sarveshāṁ pa° B °bhojanasabhā° M °bhojanabhāñjanānāṁ vidhā°. — 7. BM °hitçaṁ(B °janaṁ) pariveçakehi āpihitvā°. — 9a. B °to sa ka° M °kākena bhūyo na ça°. — 9b. BM °shi ka°. — 9c. B °bhāryāye bhā° M °ya bhūtā rā°. — 10. B °nī yaṁ rājā° BM °ste apakrānte de° M °valābhi pra° BM °shati | tato(M °taḥ) ce° °rati rā°.

12a. M ate de ° kavarehi pra° B °samya°. — 13a. M °āṇantāṁ. — 13b. M °veçiyantāṁ api° B °veçīyantānāṁ apyidhā ° dethaḥ ||. — 14. BM °jño kāko bra° B °gurushaṁ a° M °marsha saṁ°. — 15. M °sho kāko dhārto mu° B °sāhasiko° M °sishi purushehi na ça° B °çakyeti ra° M °tuṁ | anantaraṁ dṛṣ°.

16a. BM °ktaṁ yo°. — 16b. B °lliyeyan tasya° M °lliyeyaṁ tasya vipulaṁ abhicchā-danaṁ tasya dadeyaṁ° B °cchādayaṁ tasya dadayeyaṁ sa°.

अपरा दानि चेटी राज्ञो ब्रह्मदत्तस्य अर्पयतो स्वकाये देवीये अशनं आदाय
वस्त्रेहि अपिहित्वा गच्छति । सा दानि तेन काकेन दृष्टा । तस्य एतदभूषि ।
कथं अतो चेटीय हस्तातो भोजनं हरेयं । यन्नूनाहं अस्या चेटीये नासाये अपेयं
ततः सा चेटी अस्ता इमं भोजनं उज्झिष्यति ततो अहं यं तं भोजनं गृह्य गमिष्या-
5 मि ॥ सो दानि येनाभूद्दासी ओपतित्वा ताये चेटीये नासे पतो । तच नासे
व्रणो कतो । चेटीये भीताये भोजनमुज्झित्वा सो काको उभयेहि हस्तेहि गृहीतो ॥
सा दानि चेटी काकमादाय नासाय रुधिरेण घरन्तेन राज्ञो ब्रह्मदत्तस्य उपसं-
क्रान्ता । अयं सो दुष्टकाकः गृहीतो ॥ सो दानि राजा ब्रह्मदत्तो तस्या चेटीये
प्रीतो संवृत्तो । शोभनं ते कृतं यं त्वया एषो काको गृहीतो ॥ तेन दानि राज्ञा
10 ब्रह्मदत्तेन ताये चेटीये विपुलो आच्छादो दिन्नो ॥ सो च काको परिभाषिय-
ति । न शोभनं यं त्वं राजकुलं पि धर्षयसि ॥ सो दानि काको राजानं ब्रह्मदत्तं
गाथाये अध्यभाषे ॥

वाराणस्यां महाराज काकराजा निवासितो ।
अशीतिकाकसहस्रेहि सुपार्श्वो परिवारितो ॥
15 तस्य दोहलिनी भार्या सुपार्श्वा मांसमिच्छति ।
राज्ञो महानसे पक्वं प्रत्ययं राजभोजनं ॥
तस्याहं वचनं श्रुत्वा करन्तो अनुशासनीं ।
भर्तुरपचितिं कृत्वा नासाये अकरि व्रणं ॥

अथ खलु भिक्षवः राजा ब्रह्मदत्तो तस्य काकराजामात्यस्य प्रीतो संवृत्तो ।
20 इमस्य काकराजामात्यस्य तस्य काकराजस्य सकाशातो नैव यामो न भोगो नापि

1. M apara dā ° sya aparakāte sva° B °sya apakāte sva°. — 2¹. BM °kālena dṛishṭvā ta°. — 2². M tasyaita°. — 3¹. B °reyaṁ ya°. — 3². BM yannū(M yaṁ nū)nāhaṁ asya ca ye nāsā °gneyaṁ | tataḥ° B °ujhishya° M °ujhishyati tataḥ a° BM °haṁ yato bhojanaṁ gṛi°. — 5¹. B °ni yenābuddhasyo o° M °ni yenābuddhasya o° nāso ha° BM °gno ta°. — 5². M °vraṇo kahāṇo B °kahaṇo ce°.

6. M °bhojanaṁ ujhitvā ‖ so° B °bhojanam ujhitvā ‖ so° BM °stehi sā dā°. — 7. B °ii kākānām ā° BM °nāçāya ru° B °krānto | M °krāntāḥ ‖. — 8¹. M °so deva dusto kāko gṛi°. — 8². BM °tasya ce° B °vṛitto ço°. — 9¹. M sobhanaṁ° BM °to te°. — 9². M °rājño bra°. — 10. M °shiyanti | B °yati na ço°.

11¹. M na sobhana yaṁ° B °dharshayesi |. — 11². B °ko rājñaṁ bra° M °ko rājaṁ-bra°. — 13. BM °kājarājanivāsiko ‖ (M °site). — 14. B °supātro° M °suprāpta pa°. — 15. M °dohariṇī bhāryā supārçve mā°.

18. M bhartu apacitaṁ kṛi° B bhartuṁ apacintiṁ kṛitvā nāçāye akari praṇaṁ | M °nāçāyesu kari vraṇa ‖. — 19. M °khavo rājā brahmadanto tasya kākasya rājamā° B °ttr i°. — 20. M imasya kākarājā ° pi ca atra kraṇi° BM °tīib sva°.

न अन्या काचिद्वृत्तिः । एतेन तुण्डेन वृत्तिं पर्येषन्तो आत्मनानं तस्य काकराजस्य कार्यं करोति ॥ अथ भिक्षवो राजा ब्रह्मदत्तो अमात्यपार्षदां गाथाये अध्य[११९^b]भाषे ॥

एतादृशो अरहति राजभोगं हि भुंजितुं ।
यथायं काकराजस्य भद्र आमरणाहितो ॥ 5

तस्य दानि काकस्य राज्ञा ब्रह्मदत्तेन दैवसिकं राजभोजनं अनुज्ञातं । राजभोजनस्य प्रत्यग्रस्य नानाप्रकारस्य पूरं भाजनं कृत्वा तस्य काकस्य अर्थाये एकान्ते क्षिप्यति अतः तं दैवसिकं स्वयं च भुंजति काकराजस्य च हरति ॥ परिवारस्य आज्ञप्तं । न केनचिदेतस्य काकस्य राजकुलं गच्छन्तस्य वा आगतस्य वा किंचिद्व्याघातं उत्पादयितव्यं ॥ 10

भगवानाह ॥ स्यात्खलु पुनर्भिक्षवो युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन सुपार्श्वो नाम काकराजा अभूषि । न खल्वेवं द्रष्टव्यं । तत्कस्य हेतोः । अहं स काकराजो अभूषि ॥ या काकराजस्य भार्या सुपार्श्वा नाम सा एषा यशोधरा अभूषि ॥ यस्य काकराजस्य अशीतीनां काकसहस्राणामग्रमात्यो अभूषि एष स कालोदायी स्थविरः ॥ यो भूद्राजा ब्रह्मदत्तः स एष राजा शुद्धोदनो 15 अभूषि ॥ तदापि एषो एतेन प्रसादितो एतरहिं पि एष एतेन प्रसादितः ॥

काकजातकं समाप्तं ॥

भिक्षू भगवन्तमाहन्सुः ॥ पश्य भगवन् कथमियं महाप्रजापती भगवतो शोकेन अन्धा संजाता भगवन्तं चागम्य अनन्धा संजाता ॥ भगवानाह ॥ न भिक्षवो एतरहिमेव एषा महाप्रजापती मम शोकेन काश्येन च अन्धा संजाता मम एव 20

1. B °vṛttiyaṁ pa° M °ttiṁ saṁparye°. — 2. M atha khalu bhi°. — 4. BM °ço aharati(B °ti |) rājabhogāṁ(M °gaṁ |) hi ° tuṁ ya°. — 5. BM °sya pratyamaraṇāhrejo | .
6¹. M °kākarājño bra° B °ttena devasi° M °nunajñātaṁ | . — 6². M rājabhojanasya pratyagra° BM °prakārasaṁtasya pūraṁ bhojanaṁ° M °ekānte prakshipati sa taṁ dai° harati | . — 8. M °āmantaṁ B °ttaṁ na°. — 9. M °gacchantasya vā ā° B °cchantaṁ, tasya vā agantasya vā kiṁcid vyā° M °kiṁ vidyāghrātaṁ u°.
11¹. M °khalu vaḥ yu° B °bhikṣavo na kha°. — 12¹. M °vaṁ taṁ devaṁ drashtu tat ka°. — 13¹. M °rājā a°. — 13². M sa dāni kāka ° syaṁ nāma eshe yaça° abhū yo°. — 14. M yasya kākarā ° çītinām° BM °shi || e° M °stharira B °raḥ yo°. — 15. M °bhuta-dante sa°.
16. M °hiṁ pi saha etena prasāditaḥ iti || . — 17. M iti çrīmahāvastuvedāne kā°. — 18¹. M bhikshur bhaga ° tu āhaṁsuḥ || . — 18². M °saṁjāto || . — 19¹. BM °hiṁ evam eshā ° rusya(M °ne)na ca saṁjātā(M °to) mama eva° M °jāto || .

आगम्य अनन्धा संजाता । अन्यदाप्येषा महाप्रजापती मम आगम्य अनन्धा संजाता ॥ भिक्षू आहंसुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवः ॥

भूतपूर्वं भिक्षवः अतीतमध्वाने हिमवन्तपार्श्वे चण्डगिरिर्नाम पर्वतो तस्य दानि पार्श्वे महन्तो वनषण्डो वृक्षसहस्रेहि पुष्पफलोपेतेहि संछन्नो पद्मिनीहि च आयमेहि च उपेतो ऋषिगणानुचीर्णो प्रान्तो प्रविविक्तो ॥ तत्र महान्तं हस्तियूथं प्रतिवसति षड्दन्तकुलं ॥ तहिं आजानेयो हस्तिपोतो जातो षड्दन्तो इन्द्रगोपकशीर्षो सप्तांगसुप्रतिष्ठितो कुमुदवर्णो । सो यदा संवर्धितो तदा मातां गुरुगौरवेण प्रेमेण च परिचरति । तस्या पूर्वं भोजनं पानीयं च दत्वा पश्चादात्मना परिभुंजति कालेन च तां कालेन उदकशरीराया वन[300*]लतायो परिमार्जेति स्नापयति ॥ एवं सो हस्तिपोतो मातुहितं प्रसादेन प्रेमेण च गौरवेण च सर्वकालं अनेन परिचरति ॥ सो दानि कदाचित्तां मातुं स्नापयित्वा परिविषित्वा आसितां स्थाने गजगणेन सार्धं चरन्तो धाक्षेन निर्गतो ॥ सो दानि मृगलुब्धकेहि मृगव्यं चरन्तेहि दृष्टो तेहि गत्वा काशिराज्ञो निवेदितं । देव अमुष्य वनषण्डे षड्दन्तो गजपोतको प्रतिवसति प्रासादिको दर्शनीयो देवस्य योग्यो भवेय ॥

अथ खलु भिक्षवः काशिराजा तेषां लुब्धकानां श्रुत्वा सबलवाहनो तं वनषण्डमागमे ॥ तेन स हस्तिपोतो वनषण्डातो निगृह्य अपराहि करेणुहि परिवारितो वाराणसीं प्रवेशितो हस्तिशालायां च स्थापितो ॥ तस्य दानि राज्ञो

1. B °pyesho mahâ° M °pyeshâṁ mahâ°. — 2¹. BM bhikshu â° M °haṁsuḥ ‖. — 2². B °dâhâ bha° M °gavân ‖. — 4. M etasmiṁ evaṁ mahâ mahâprajâpatî mama çakena kâruṇyena ca saṁjâta mama eva âgamya anandhâ saṁjâta ‖ anyadâpyesha mahâprajâpatiḥ mama âgamya anandhâ saṁjâtâḥ ‖ bhikshu âhaṁsuḥ ‖ anyadâpi bhagavan ‖ bhagavân âha ‖ anyadâpi bhikshavo bhû° B °kshavaḥ bhû°. — 5. M °ntapârçve caṇḍagiri nâma parvato ‖ tasya ° rçve mahanto vana° B °ni pârçva mahato vanakhaṇḍe vṛ° M °phalope ° çramahi ye u° B °rishiga° BM °kto ta°.

6. M °ti ‖ shaddaṁtaku° B °taṁ ta°. — 7. M tahi â ° poto japto sha ° saptâge su° BM °pratishṭhito ° rṇṇo so°. — 8. M °to mâtâ so tâṁ gu° B °dô mâtâ gu° M °ṇa ca pre°. — 9. BM tasya pû ° ca datvâ pa ° bhuñjanti kâ ° rirâ yâva ta (M °nna) lâbhâyâṁ pa ° rjati sthâpayati ‖.

11. B °atapâto sarvahito pra° M °tâposo sarvahitaṁ pra ° premanena ca gau° B °jenentriṁ pa°. — 12. BM °cit taṁ mâ ° vaçitvâ âsitaṁ jñâ° M °pena ca sâ° BM °hyuṇa ni°. — 13. B °vyaṁ aṭṭhakehi dṛishṭvâ te° M °vyaṁ akaṁṭhakehi dṛishṭâ te ° rajñâ ni°. — 14. M °amuka vana ° gajapoto pra° B °gajapâtako ° ti ‖ prâ° M °veyâ ‖.

16. M °kshavo kâçi ° bdo savâha° B °bala havâha ° khaṇḍa âgame te° M °khaṇḍa âgamanena so ha°. — 17. B °vanakhaṇḍâ° M °vanakhaṁḍâto ° apare karenu° B °aparekarenu° BM °veçitvâ hastiçâ ° ca dhâvito ta°.

भवति । भद्रको मे श्रयं यानो भविष्यतीति ॥ सो दानि सर्वसत्कारेहि सत्क्रि-
यति स्वयं राजा तस्य भोजनं च पानीयं च ददाति । तस्य तं सर्वसत्कारं न
प्रीणयति शोकेन तां मातरं श्रनुस्मरन्तस्य शरीरं च निश्वसति श्रश्रूणि च पातयति
शुष्यति च मिलायति च ॥ सो दानि राजा प्रेमानुगतो श्रंजलिं प्रगृह्णित्वा तं
गजपोतं पृच्छति ॥ सर्वसत्कारेहि ते गजोत्तम सत्करोमि श्रथ च पुनस्त्वं शुष्यसि 5
च मिलायसि च परिहायसि च वर्णच्छवीतो न च ते पश्यामि उदग्रमात्तमनं प्रहृष्ट-
मुखवर्णं । देहि मे वाचं श्राख्याहि केन ते उपकरणेन वैकल्यं उपस्थापयिष्यामि
प्रियो च मे त्वं गजोत्तम मनापो च श्राख्याहि मे केन त्वं परिहायसि भोजनं च
पानीयं च न प्रतीच्छसि ॥ सो दानि गजपोतो राज्ञा पृच्छीयमानो मानुषिकाये
वाचाये श्राह ॥ देव न मे केनचिद्वैकल्यं उपकरणेन नैवमाहारेण मम कृतं मम 10
माता तहिं वनखण्डे प्रतिवसति जीर्णा वृद्धा गतवया चक्षुर्विहीना दुर्बलकाया
यदा विश्वामप्राप्तो स्मि नाभिजानामि मातुपूर्वं श्रदत्त्वा भोजनं वा पानं वा स्वयं
परिभुंजितुं । एष मे समादानो मम मरणं इहैव भविष्यति । न पुनरहं श्रदत्त्वा
मातये स्वयं परिभुंजेयं भोजनं वा पानीयं वा ॥ सो दानि काशिराजा धार्मिको
च सकृपो च परानुग्रहप्रवृत्तो च । तस्य एतदभूषि । श्राश्चर्यमिदं इमस्य हस्ति- 15
पोतस्य याव मातृज्ञो च धार्मिको च श्राजानेयो च यस्य श्रद्य एत्तकानि दिव-
[300b]सानि भोजनं श्रप्रतीच्छन्तस्य पानीयमपिबन्तस्य मातृशोकेन । एकत्येषु
मनुष्येषु नैते गुणा सुलभरूपा ये इमस्य गजपोतस्य । नेतमस्माकं साधु न प्रतिरूपं
यं वयं इमानेवरूपा कल्याणमता विहेठाम ॥ सो दानि महामात्रानामाह ॥
मुंचथ एतं हस्तिपोतं गच्छतु वनखण्डं यतो स्माभि श्रानीतो मातृपोषको मातरं 20

1[b]. M °hi satkriya°. — 2. B °ṇayati | çokena taṁ mā° M °ṇayati koçena taṁ mā° BM °çvasati açrūṇi(M °ṇiya) ca pā°. — 4. M °gṛihitvā°. — 5. M °roti || atha° B °romi | atha° M °çushyati ca milāyati ca pari° B °shyasi ca pilā° M °varṇaccavito° BM °çyāmi | u °ṇṇaṁ de°.

7. M °caṁ ākhāhi kena te upaka° me kenā tvaṁ° B °me kena tva pa° yasi || bho° pāṇīyaṁ ca pra° M °yaṁ ca pra°. — 9. M °pṛicchimāno°. — 10. B °hiṁ vanakhaṇḍe° M °hiṁ vanakhaṁḍe pra° ti || jīrṇṇo vṛi° B °jīrṇṇo vṛi° M °vayā cakshurvihīno du° B °pto smiṁ nābhi° M °mi || mātu pūrvaṁ° BM °adatvā bho°.

13[a]. M evaṁ me samādānaṁ marana mama °haivaṁ bha°. — 13[b]. BM adatvā mā° M °pānaṁ vā ||. — 14. M °satkripo° B °kṛipā ca pa° BM °tte ca ta°. — 15[a]. M °bhūshiḥ || B °shi ā°. — 15[b]. M °yāvat mātṛijño ca dharmi° BM °ko ca āyāne° M °yo ca asya adya° BM °praticcha° M °pāniyam api pibantasya mā° BM °kena e°.

17. M sulabhyesha ma° BM °shyesho caile°. — 18. B neta° M na eta° BM °imāne evarūpā° M °ṇaṁtvāḥ vi°. — 19. BM °ṁ āhaṁsu ||. — 20. M muṁcati hastipotaṁ gacchatu vanakhaṁḍe yato asmābhir ānīto mātṛiposhako mātaraṁ upasthāsyate māṁ iha° BM °shyati | ta° B °shako a° M °shakaṁ adharmeṇa samajjenna ||.

समागच्छतु मा इह अनाहारो मरिष्यति ततो वयं निरर्थका अधर्मेण संयुज्येम ॥
सो दानि राजामात्यीये तस्यैव वनषण्डस्य समीपे नेत्वा मुक्तो ॥

सो दानि तं वनषण्डं गत्वा नैवाहारं करोति न पानीयं पिबति तां मातरं मा-
र्गति ॥ तस्य दानि सा माता शोकेन रुदमाना च तं पुत्रकं अपश्यन्ती अन्धीभूता ॥
5 सो दानि गजपोतको तां मातरं अलभन्तो पर्वतशिखरमभिरुहित्वा कुंजररावां
मुंचति । तस्य महान्तं कुंजररावं मुंचतो ताये मातरे तं स्वरं प्रत्यभिज्ञातं पुत्रस्य
मे एषो स्वरो ति ताये पि महानिनादं मुक्तं ॥ ततः तेन मातुस्वरो प्रत्यभिज्ञातो ॥
सो दानि तस्या मातु मूलं उपसंक्रमे ॥ तस्य सा माता उदकह्रदस्य मूले आसति
अन्धा परिभ्रमन्ती पुत्रशब्दं श्रुत्वा रेणुगुण्ठितशरीरा ॥ सो दानि गजपोतको
10 ततः ततो वनलतां सुकुमारां भंजित्वा तां मातरं परिमार्जेति रेणुं चास्या शरी-
रातो अपनेति । ततः च उदकह्रदातो शुण्डं उदकस्य पूरेत्वा हृष्टो तुष्टो आत्त-
मनो प्रीतिसौमनस्यजातो तां मातां स्नापेति ॥ सा दानि स्नाता च तानि च
अक्षीणि धौतानि सर्वमलं वर्धितं अशुच्यपगतं विमला चास्या परिशुद्धा दृष्टी
संवृत्ता ॥ सा दानि हस्तिनिका तं पुत्रकं पश्यित्वा प्रीतिसौमनस्यजाता पृच्छति ।
15 पुत्र कहिं सि गतो मम नेत्वित्वा अनाथाये दुर्बलचक्षुये ति ॥ सो तस्या मातावे
तां प्रवृत्तिं विस्तरेण आचिक्षति यथा गृहीतो यथा च ओसृष्टो ॥ सा तं पुत्रकं
आह । एवं पुत्र आनन्दतु काशिराजा सपरिवारो यथा अद्य तव दृष्ट्वा अहं
नन्दामि ॥

स्यात्खलु भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन तेन समयेन काशि-
20 राजा अभूषि । न खल्वेतदेवं द्रष्टव्यं । तत्कस्य हेतोः । एषो नन्दो मम

2. M °rājā āṇa° B °nasaṇḍesya° M °nakhaṁḍesya samipe nitvā°. — 3. BM °hoti taṁ māta° B °raṁ mārgati | . — 4. M °nā caṁ taṁ pu° paçyaṁti a°. — 5. M °ni rājapotako mātaraṁ° B °kuṁjaravārāṁ muṁcati ta°.
6. BM °muṁcato tasya tāye mā° M °ro ti | tāme pi° B °nināda mu°. — 8[1]. BM °tasya mā°. — 8[2]. M °mātār uda° B °bhramanti pa° M °bhramati pu°. — 9. M °ni rājapotako tato tataḥ shalunatāṁ sukumālāṁ bhaṁ° BM °rā taṁ māta° M °yaṁ cāra ça° B °cāsya ça°.
11. M tataḥ udakahra° B °sya pure° M °ātamo pri° B °jāto tāṁ mātāṁ°. — 12. BM °akshi(M °kahi)ṇi dhotāni sarvam alaṁ(M °m ahāṁ) akshi | mucya ° cāsya pa° M °drishti saṁvṛittāḥ. — 14. M °hasinikā ° jāto tāṁ mātāṁ pri°. — 15[1]. M °kathaṁ vihato° B °hiṁ siṁhato ti mama me° M °durbala ca°. — 15[2]. BM °tasya mātāye taṁ pra° kahati | yathā gṛi° M °oshūshṭo ||.
16. B so taṁ° M so tāṁ putrakam āhanuḥ || . — 17. M °tra nanda°. — 19. M °khalu yu° d anyo sa tena kāla° BM °shi na°. — 20[1]. M °drashṭaṁ ta°. — 20[2]. B °ndo mama putriyapu° M °pitriyatro bhātā°.

र्विजयपुत्रो भ्राता सो काशिराजा अभूषि ॥ यो गजपोतको अहमेव त[301*]-
दा अभूषि ॥ या गजपोतस्य माता अभूषि एषा सा महाप्रजापती गौतमी तदापि
मम शोकेनान्धा संजाता मम एवागम्य अनन्धा संजाता । एतरहि पि एषा महा-
प्रजापती गौतमी मम शोकेनान्धा संजाता मम येव आगम्य अनन्धा संजाता ॥

समाप्तं हस्तिनिकाजातकस्य परिकल्पं ॥ 5

चीवरं विजहित्वा शृणोथ एकाग्रमानसा सर्वे ।
यथ बोधिसत्वचर्या सुदुष्करा दुर्गमीया च ॥
तिर्यग्योनिगतस्यापि गजस्य स्वमातरे सौहृदमासि ।
किं पुनः मनुष्यभूतो गुरुं परिचरेय तं चित्रं ॥
कामं पि बोधिसत्वा सर्वजगति वत्सला प्रकृतिस्निग्धा । 10
अतिवत्सला तु गुरुषु यथा श्रुतं कीर्तयिष्यामि ॥
हिमवन्तपादपार्श्वे चण्डोर्धे चण्डपर्वते रम्ये ।
तापसकुलाश्रमेहि क्वचित्क्वचि कृताभ्यलंकारे ॥
किन्नरकुंजरवानरवराहशार्दूलव्याघ्रगणचीर्णे ।
ऋक्षमहिषसरभचरिते वृषभचमरिशम्बराकीर्णे ॥ 15
मोरशुकजीवञ्जीवकचकोरकरविंकशकुनमिथुनेहि ।
समन्तं हि तं वनवरं शोभति मधुरं रुतेहि ॥

2. BM yo gaja* B *sin coho sâ * prajâpati tadâ* B *saṁjâta ma* M *ma eshâga * jâtâḥ |. — 3. M *pi eyâ mahâ* B *çoko andhâ saṁjâtâ tâṁ mama ye* M *kena andhâ saṁjâtâ mamaiva câ * jâtâḥ. — 5. M iti çrîmahâvastvavadâne ha* BM *jâtasya* M *lpaṁ samâptaṁ ||.

6. M atha ni* B *gramanasâ* BM *rve ya*. — 7. BM yathâ bo * tvacaryâṁ dushkarâṁ ha*. — 8. M tirya* B tiyagye * sya mâtrâ sau* M *sya mâtâ sau* BM *hṛidaṁ âsi |. — 9. M *punar manu* BM *guru pa* M *care taṁ* B *care taṁ citraṁ |. — 10. M *dhisatvaḥ sarva * tsarâ pra* BM *gdhâ a*.

11. B *tsarâ tu khu | yathâ guruçru* M *lâ gurushu | yathâ guruçru* BM *shyâmi hi*. — 12. M hibhava* BM *rçve ca caṇḍore caṇḍa* B *ramyo tâ*. — 13. B *kulâçre* M *kulâ ... sehi kva* B *t kvacit kṛityalaṁkâraṁ | M *t kvacit kṛitâlyalaṁkâlaṁ |. — 14. BM kinnaraṁ kuṁ* M *jaraṁ vâ* BM *naraṁ va* M *rdûlaṁ vyâ * cirṇṇaṁ B *cirṇṇa ruru*. — 15. M urunnahi* BM *sarabhacaritaṁ vṛishabhacamariçuruṇṇa M *rṇa)kâkîrṇṇaṁ | (M *rṇṇaṁ).

16. BM *çukajîvaṁjîvakacakorakaraviṅga* M *kanaṁ mi* BM *hi sa*. — 17. BM samantehi taṁ* M *dhuraṁ ramante dvi ço* B *utehi ço*.

गजोत्तमो आ[301ᵇ]ह ॥

न खु शोचामि नरपते बन्धनमुपरोधनं क्षुधपिपासां ।
इतो च मे दुःखतरं नरेश्वर तेन शोचामि ॥

राजा आह ॥

किन्नाव इतो गजवर दुःखतरं दुःखतरं पुनरन्यं । 5
येन ते न प्रतिभाति पानीयमशनं च आख्याहि ॥

गजपोतको आह ॥

माता मम गतवया जीर्णा अतिवत्सला नयनहीना ।
सा मया विना मरिष्यति नरेश्वर तेन शोचामि ॥
तस्याहं बिसमृणालं पूर्वं उपानयामि अनयनाये । 10
भुंजामि पश्चात्मना साध अनसना ति शोचामि ॥
ग्रीष्मे परिदग्धगात्रा शीतलवनच्छादितोदकं चैव ।
उपनामेमि स्नपेमि च साध अनाथा ति शोचामि ॥
संप्रति वने अनयना परिभ्रमति रेणुगुण्ठितशरीरा ।
हा पुत्रेति च वदति तदद्य दुःखतरमासाद्य ॥ 15
श्रुत्वा गजेन्द्रवचनं मनुजेन्द्रो सुमधुरं सुकरुणं च ।
अश्रुपरिपूर्णवदनो नरवरो वारणमभ्यभाषित ॥
एकत्वेषु मनुष्येषु सुदुर्लभा एद्दृशा गुणा सम्यक् ।
येन तव इमा गजवर हृदयस्मिं जायते पीडा ॥
मुंचथ लघु गजवरं चरतु वने गुरुजनं परिचरन्तो । 20

2. BM °kahudhānāṁ pipāsāṁ (M °sān) i°. — 3. BM idaṁ ca° B °tena çocāmi ‖ M °tena çacāmi ‖. — 5. M kiṁ tavo i° B kin tuvaṁ ito ga° BM °vara duḥ° khatare punar a(B °naḥ a)nyaṁ ye°.
6. BM °niyaṁ a(M °ā)sanaṁ°. — 7. M °pottako°. — 9. M sa maye vi° B çāmaye tinā mari° M °ra teśma co°. — 10. BM °haṁ biçamṛ° pūrvam upetāmi ānayanāye(M °nāya) bhuṁ°.
12. BM °cchāyodakaṁ cai°. — 13. BM °memi snāpe° M °mi va sā° B °cāmi soṁ°. — 15. M °puçreti vadati ca vadati° BM °d adya naravara duḥ° M °khataram ā°.
17. BM °pūrṇṇaṁ vadano naravāraṇa adhya° M °shito ‖. — 18. BM ekatvena° M °dṛçā gu° BM °ṇā ‖ (M °ṇā) samyak yena°. — 19. BM °ime ga° dayasya jāyanti (M °nti) pīḍāṁ ‖.

बद्धो सि काशिराज्ञा पुरोत्तमे दारुणेहि पाशेहि ।
तव तु कृतेन चनयमा मुक्तो पुन धर्मराजेन ॥
सा गजवरस्य घोषं श्रुत्वा स्पर्शं च तस्य उपलभ्य ।
प्रीतमनसा उदग्रा पुनः सनयमा गजं लब्धा ॥

हस्तिनिका आह ॥ 5

एवं नन्दतु नन्दन्तो काशिराजा सबान्धवो ।
यथाहं अद्य नन्दामि पुत्रेण नयनेहि च ॥
एतं पुत्रं यथा पूर्वं शैलवने मृगान्विते ।
सपुत्रा अद्य नेत्रेहि पश्यति वरकुञ्जरं ॥
पूर्वजातिमभिज्ञाय संबुद्धो वदतां वरो । 10
जातकमिदमाख्यासि शास्ता भिक्षुणसंतिके ॥
अहं गजवरो आसि माता सा आसि हस्तिनी ।
तेनाद्याप्यस्या पुत्रो हं मातस्नेहा च गौतमी ॥
एवं दीर्घस्मिं संसारे स्नेहद्वेषेण दुःखिता ।
स्नेहद्वेषप्रहाणार्थं धर्मं चरथ निर्ममा ॥ 15

हस्तिनीजातकं समाप्तं ॥

त्रिभिः प्रातिहार्यैर्बुद्धा भगवन्तो सत्वां विनयन्ति । तद्यथा ऋद्धिप्रातिहार्येण अ-
नुशासनीप्रातिहार्येण धर्मदेशनाप्रातिहार्येण ॥ भगवता इमेहि त्रिहि प्रातिहार्येहि

1. BM baddho smiṁ kāçirājño(M °jā) pu° M °ttame kāçirājā dā°. — 2. BM °anayena mukto punaḥ dharma°. — 3. BM °bhya pri°. — 4. BM °tamanā o° B °labdhā ‖. — 5. M °stinikā°.

6. BM °tu nando(M °ndā)to kā° B °jā sabā°. — 7. M °ndāmi pu°. — 8. BM ete putra yathā(B °tha)pū° BM °çailāva° B °mṛgagandhā sa° M °mṛgandhakā ‖. — 9. B saputrādya ° hi yasyanā varaṁ kuñ° M °hi yasyānā va° B °jaraṁ pū°. — 10. M pūrvaṁ jā ° jñāye sambuddho varatām varaṁ ‖.

12. BM °varā āsi mā°. — 13. B °dyāpi putravagā° M °dyāpi putra evāpi gā° BM °sneho ca gautamī ‖. — 14. BM °sāre saṁsarante sa prāṇinām(B °nām ‖) sne° B °haduḥkhena dveṣena sne° M °sheṇa dāduḥ°. — 15. M °shaprāhā° BM °rasamā(B °mā ‖) nillayaṁ jāhnisaṁghasrito sa(M °vite mṛ)yānti āhirā vatibhūtashande ghara(M °ode ye ca ghano)ttamaṁ echindiya mamda(M °mamḍa)lāçayaṁ ‖.

16. M iti çrīmahāvastunavadāne hastiyā°. — 17[1]. M atha tribhir prāti° B °hārye buddhā° M °vantaṁ sa ° nayati ‖. — 17[2]. B °dharma ° ryeṇa bha°. — 18. BM °gavato i° M °mehi trihi prāti° B °hāni ca pra°.

न्यग्रोधारामे बहूनि प्राणिसहस्राणि आर्ये धर्मे विनीता ॥ अथ खलु राहुश्चा-
सुरेन्द्रो वेमचित्री च असुरेन्द्रो मुचिलिन्द्रो च असुरेन्द्रो षष्टीहि असुरनयुतेहि
सार्धं प्रभूतं गन्धमाल्यमादाय बहूनि असुरसहस्राणि च बहूनि च असुरकन्यासह-
स्राणि सर्वालंकारभूषितानि आमुक्तमणिकुण्डलानि महता असुरानुभावेन महता
5 असुरऋद्धीये येन कपिलवस्तुन्यग्रोधारामस्तेनोपसंक्रमित्वा न्यग्रोधारामस्य उपरि
वैहायसमन्तरीक्षे स्थित्वा भगवतो पूजासत्कारमकरेन्सु: । सर्वगन्धेहि सर्वमाल्येहि
सर्वचूर्णेहि सर्वगीतेहि सर्ववादितेहि सर्वतूर्यताडावचरेहि भगवन्तं सत्कृत्वा गुरुकृत्वा
मानयित्वा पूजयित्वा अपचयित्वा अनुत्तरायं सम्यक्संबोधये चित्तमुत्पादेन्सु: ।
अहो पुनर्वयं पि भवेम अनागते अध्वाने तथागता अर्हन्तः सम्यक्संबुद्धा विद्याचरण-
10 संपन्नाः सुगता लोकविदनुत्तरा पुरुषदम्यसारथयः शास्तारो देवमनुष्याणां यथायं
भगवानेतर्हि एवं द्वात्रिंशतीहि महा[302b]पुरुषलक्षणेहि समन्वागता भवेम अशी-
तिहि अनुव्यंजनेहि उपशोभितशरीरा अष्टादशहि आवेणिकेहि बुद्धधर्मेहि सम-
न्वागता दशहि तथागतबलेहि बलवां चतुर्हि वैशारद्येहि विशारदा यथा भगवां
एतरहिं एवम् अनुत्तरं धर्मचक्रं वर्तेम यथापि भगवता एतरहि । एवं च नो
15 देवमनुष्या श्रोतव्यं श्रद्धातव्यं मन्येन्सु: यथा च भगवतो एतरहि एवं च समग्रं श्रा-
वकसंघं परिहरेम यथा भगवां एतरहिं । एवं तीर्णा तारयेम मुक्ता मोचेम
आश्वस्ता आश्वासेम परिनिर्वृता परिनिर्वापेम । एवमेतं भवेय बहुजनहिताय
बहुजनसुखाय लोकानुकम्पाय महतो जनकायस्य अर्थाय हिताय सुखाय देवानां
च मनुष्याणां च ॥ अथ खलु भगवानेषामसुराणामिदमेवंरूपं चेतोप्रणिधानं

1. M °hulaçā °tri vâsurendraḥ mucilinda vâsureṁdro ṣha° BM °dāya bahūni asurāṇa ca(M °rāṇi) bahūni ca asuraka(B °kaṁ)nyā° B °laṁkālabhū° BM °ddhīye na kapilavastu(M °stuṁ) nyagrodhārāmas te(M °maṁ te)na° M °hāyasavanta ° retsuḥ B °retsuḥ | .
6. M °ttaroye sa° B °ttarāye saṁmya° BM °detsuḥ | . — 9. BM °yaṁ pi bhaveya anāgate(M °tam) a° M °dhvānaṁ tathāgatām arhantas samyaksaṁbuddho vidyā° BM °nnāḥ (M °nno) sugato lo° M °ttaraḥ purushada ° çāstā devānāṁ ca manushyā° BM °ṇehi samanvāgatā(M °to) bhavema | açī° M °rīro ashṭādaçehi 4° BM °dyehi viçārado yathā (M °thāyaṁ) bhagavāṁ° M °ṁ ca samagraṁ anuttaradha ° rticeyaṁ || ya° B °rticeyaṁ ya° M °vato etarahiṁ.
14. BM evaṁ ca so de° BM °çrotavyaṁ (B °vyaṁ çraddhātavyaṁ) manyatsuḥ(B °tsuḥ |) yathā ca bhagavata etarahi e(M °tarhim e)vaṁ ca sa(M °sa) devamanushyā çrotavyaṁ çraddhātavyaṁ manyatsu(M °nyetsuḥ |) yathā(B °thā ca) bhagavataḥ e(M °tor e)tarahiṁ e(M °him e)vaṁ ca samagraṁ(B °gryaṁ) çrā ° reme | ya° M °thā ca bhagavān etarahim evaṁ ca ti° B °gavaṁ etarahiṁ evaṁ°.
16. BM °tīrṇṇo(M °rṇo) tā° ° mukto mocema āçvāsto āçvase(B °sa)ma parinirvṛtaḥ (M °to) parinirvāpeyam(M °rvāpedyaṁ) e°. — 17. BM evam etaṁ bhaveyaṁ bahujana-hi° M °shyāṇāṁ | . — 19. M °vaṁrupaṁ udāraṁ ca praṇi° BM °ṇidhānaṁ prādushka°

विदित्वा तस्यायं वेलायं स्मितं प्रादुष्कार्षे समनन्तरं प्रादुष्कृते च भगवतो मुखद्वारातो नानावर्णा अनेकवर्णा अर्चियो निश्चरित्वा नीलपीतमाञ्जिष्ठा रक्तश्वेतावदाता कनकवर्णा सर्वं बुद्धक्षेत्रं ओभासयित्वा यावदकनिष्ठा देवनिकाया भगवन्तं त्रिखुत्तं प्रदक्षिणीकृत्वा भगवतो पुरतो अंतरहिता: ॥

अथ खल्वायुष्मानश्वकी येन भगवांस्तेनोपसंक्रमित्वा तेनांजलिं प्रणामयित्वा भगवन्तमेतदुवाच ॥ नाहेतुकं नामप्रत्ययं तथागता अर्हन्तः सम्यक्संबुद्धाः स्मितं प्रादुष्करोन्ति । को भगवं हेतुः कः प्रत्ययो स्मितस्य प्रादुष्करणाय ॥ अथ भगवानायुष्मता अश्वकिना पृष्टो तं [अचुरा यावदकनिष्ठा देवनिकाया भगवन्तं त्रिखुत्तं प्रदक्षिणीकृत्वा भगवतो पुरतः अंतरहिता] अचुराणां चेतोप्रणिधानं गाथाभि आकार्षि ॥ 10

तत्रमभासि स्मितं द्विपदेन्द्रो
दानवचित्त विदित्वमुदारं ।
पृच्छति अश्वकि प्रांजलि कृत्वा
दृष्ट स्मितं सुगतस्य मुखातो ॥
नेह अहेतुक लोकप्रदीपो 15
प्रादुकरोति स्मितं परमर्षि ।
ब्रूहि नरोत्तम हेतु स्मितस्य
यत्ते कृतं इह लोकहितैषी ॥
अथ निःसंशयं बोधिमुदारा
केनचि संजनिता परिभाषा । 20
यस्य तथागत आशय ज्ञा[303a]त्वा
प्रादुकरोति स्मितं रमणीयं ॥

ntara(M °re) prâdurkṛito(M °shkṛitâṁ) yaṁ bhagavato mu° M °rci niçca° B °ñjishṭâ rakta° M °ñjishṭaraktaçvetavadâ ° sarvabu° BM °traṁ obhâsaṁ obhâ° B °d akanishṭâ de° BM °kâyena bhagavantaṁ trittaṁ(M °ntaṁ trishkṛityaṁ) pra° M °purato antarhitâ ‖.

5. B °çvaki ye°.

6. B °ntaḥ samyaṁ° BM °prâdushkaro(M °roṁ)ti ‖. — 7¹. M °puran hataḥ° B °ye smiñta°. — 7². BM °taṁ anarâ akanishṭhâ(B °shṭâ) de° B °ntaṁ tṛiksha° M °trishkṛityaṁ pra ° purato antarhitvâ a° B °hitvâ a° M °gâthâṁ vyâkârshit ‖.

11. BM tatram abhâsi smitaṁ dvijendro(M °dvipamdro) dâna° M °citte viditvâṁ u° BM °raṁ pṛi°. — 13. BM °ti ‖ a° B °dṛishṭasmitaṁ su° M °dṛishṭe smi°. — 15. BM °prâdushkaroti ‖ smṛi(M °ti smṛi)taṁ paramarshiṇâ he(B °ke)°.

17. B brûhi ° kṛitenaṁ vale° M °kṛitânaṁ sarvalokahitaishi ‖. — 19. B °raṇa bo° BM °dhim udâraṁ(M °ra) kena citta saṁjanita paribhâṣaṁ ‖

21. B °gatasya âça° BM °prâdushkaro°

कांचनसंनिभगात्रधारी
सर्वे जिना भविष्यन्ति जितारी ॥
श्रुत्व च व्याकरणं असुराणां
तुष्ट उदग्रो सदेवकलोको ।
प्राणसहस्रशतानि बहूनि  5
प्रस्थित तत्र अनुत्तरयाने ॥

अथ खलु शंबरो असुरेन्द्रो ताये वेलाये इमां गाथामध्यभाषि ॥

एदृशेहि मे मित्रेहि सदा भोतु समागमो ।
यं निश्राय यदागम्य पूजेम द्विपदोत्तमं ॥

अथ खलु भगवांस्तानि षष्टी असुरनयुतानि अनुत्तराये सम्यक्संबोधीये व्या- 10
करित्वा बहूनि च प्राणिसहस्राणि आर्यधर्मेषु प्रतिष्ठापयित्वा राजानं शुद्धोदनं
च सपरिवारं च उद्योजये ॥ अथ खलु राजा शुद्धोदनो सपरिवारो उत्साहा-
मनातो भगवतः पादौ शिरसा वन्दित्वा प्रक्रमे । तथा सर्वो जनकायो ॥

अथ खलु राजा शुद्धोदनो तस्यैव रात्रिये अत्ययेन प्रभूतं खादनीयं भोजनीयं
प्रतिजागरित्वा कपिलवस्तुनगरं सिक्तसंमृष्टं कृत्वा अपगतरजं अपगतपाषाणशर्क- 15
रकठल्लं मुक्तपुष्पावकीर्णं गन्धघटिकाधूपितधूपनं चित्रपरिक्षिप्तं विततवितानं ओ-
सक्तपट्टदामकलापं । यावच्च कपिलवस्तु यावच्च न्यग्रोधारामं नटनर्तकऋल्लमल्ल-
पाणिस्वरिकां कुम्भतूणिकशोभिकां द्विस्तवकवेलम्बकां देशेदेशेषु स्थापयित्वा महता
राजानुभावेन महता राजऋद्धीये भगवतो नगरं प्रवेशितं करोति ॥ अथ खलु
राजा शुद्धोदनो भगवन्तं [303ᵃ] सश्रावकसंघं पुरस्कृत्वा राजकुलं प्रवेशेति ॥ 20

1. BM °sarva jinā° M °tāri B °tāri ṣu°. — 3. BM °ṇāṃ uda ° devakulaloke (B °ke |).
5. BM °sthita (M °taḥ) tatrāṇu° M °rajāne ‖.
7. M °lu saṃbahulo a° B °lu sambaro a ° verāye i°. — 8. M etāḍṛç° B °dṛçu hi me°.
— 9. B °niçāya yadāgameya pū° M °çāmya yad āga°. — 10. M °shaṣṭhi naya° B °ttarāye saṃmya° M °vāṇi ca āryya° B °āryadha° M °vāraṃ udyojeya | B °dyojeyaṃ ‖.
12. B °garaloḥ pā° M °garatā pā ° nā vandita°. — 13. BM °kāya | atha°. —
14. M °syaiva rātriye a ° stumahānaga ° ktasaṃmṛṣṭaṃ° B °siktasaṃmaṣṭaṃ° BM °ṣāṇaṃ çarkaraka (B °kkala) ṭhallamukta° M °ṇaṃ gandhagha° B °citraṃ parikshiptaṃ vigatavitānaṃ oçaktapaṭṭa° M °ptaṃ vitataviṃānaṃ oçaktapatradā° B °tāpaṃ dhūpaṃ dhūtaṃ muktapushpāvakirṇṇaṃ | M °kalapaṃ dhūpanadhūpaṃ pushpapushpāvakīrṇṇaṃ |.
17. B °ttakaṃ ṛ° M °svarakāṃ kumbhatūṇikāṃ ço° B °kumbhatuṇḍikaçe° BM °dvistavala (M °vara) velañcakāṃ ° praveçitaṃ ka°. — 19. BM °ntaṃ çrāva°.

अथ खलु भगवां शुद्धोदनस्य निवेशनं प्रविशित्वा प्रज्ञप्त एवासने निषीदि यथासनो
च भिक्षुसंघो ॥ अथ खलु राजा शुद्धोदनो भगवन्तं स्वहस्तं प्रणीतेन प्रभूतेन खाद-
नीयभोजनीयेन सन्तर्पयति संप्रवारेति भिक्षामात्या च भिक्षुसंघं ॥ अथ खलु
भगवां भुक्तावी धौतहस्तो अपनीतपात्रो राजानं शुद्धोदनं धर्म्यां कथया संदर्श-
5 यित्वा समादापयित्वा समुत्तेजयित्वा उत्थायासनातो प्रक्रमे ॥ अपरं दिवसं
महाप्रजापती गौतमी भगवतो सश्रावकसंघस्य भक्तं करोति । अपरं दिवसं यशो-
धरा भक्तं करोति । अपरं दिवसं अन्तःपुरिका । अपरं दिवसं शाकियमण्डलं
भगवतो सश्रावकसंघस्य भक्तं करोति ॥

यशोधरायै दानि भगवतो सश्रावकसंघस्य मोदकं सज्जीकृतं सर्वं ज्ञातिवर्गं
10 निमन्त्रितं ॥ भगवां कालज्ञो वेलज्ञो समयज्ञो पुद्गलपरापरज्ञो काल्यस्यैव नि-
वासयित्वा पात्रचीवरमादाय भिक्षुसंघपरिवृतो भिक्षुसंघपुरस्कृतो यशोधराये
निवेशनं प्रविशित्वा निषीदि प्रज्ञप्ते एवासने यथासनो च भिक्षुसंघो ॥ अथ खलु
यशोधरा राहुलमाता महाप्रजापतीगौतमीये सार्धं ज्ञातिवर्गेण च भगवन्तं सश्रा-
वकसंघं प्रणीतेन खादनीयभोजनीयेन सन्तर्पयति संप्रवारयति ॥ ताये दानि
15 यशोधराये राहुलस्य हस्ते प्रत्यग्रो प्रणीतो मोदको वर्णगन्धरसोपेतो दिन्नः गच्छ
इमं मोदकं पितुर्देहीति ॥ तेन गच्छित्वा भगवतो पात्रे प्रक्षिपित्वा भगवतो
छायायां निषीदित्वा मातरमेतदुवाच ॥ सुखा खल्वम्ब श्रमणस्य इयं छाया ॥
अथ खलु यशोधरा राहुलं कुमारमेतदुवाच ॥ याच पुत्र पैतृकं धनं ॥ अथ
खलु राहुलो कुमारो भगवन्तमेतदुवाच ॥ देहि मे श्रमण पैतृकं धनं ॥ भगवा-
20 नाह ॥ राहुल प्रव्रजाहि ततो पैतृकं धनं दास्यामि ॥ अथ खलु राजा सान्तः-

1. M °vâṁ râjâ çuddho° BM °thâsane ca° M °saṁgho ‖. — 2. B °çavaṁtaṁ sva° M °khâdanîyena bhojanîyena saṁtarpa° B °rpayanti saṁpravâreti ‖ mi° M °pravârayati mi° °kshusaṁghaṁ ‖. — 3. M °haste apa° B °danaṁ dhâryakatha° M °danaṁ dharmyâ katha° B °dâyayitvâ samu° °utthâsanâ°. — 5. B °diva mahâ° °gauttami°.
6. M °dharâ divasaṁ ka° B °roti a°. — 7¹. M °rikâḥ. — 7². M °kiyamaṁḍalaṁ. — 9. BM °to çrâva° B °kaṁ sarjjikṛ° M °kaṁ sarjjkṛ° °nimaṁtritaṁ ‖. — 10. BM °velajña samayajño puṁgala(M °gava)parâparajño kâlya(B °la)syai° thâsane ca(M °va) bhikshusaṁgha(M °ghaḥ) ‖.
12. B °gauttami° M °çavaṁtaṁ sçrâ° B °khâdanîya bho° M °khâdanîyena bhojanîyena saṁtarpa° °pravârayati | B °rayati tâ°. — 14. BM °hula hasya° M °ste pratyâgro praṇî° to dinno gaccha° B °gaccha | imaṁ mokaṁ pi°.
16. M °cchitvâ bhagavato cchâyâ° B °prakshitvâ bha°. — 17. M °çravaṇa°. — 18¹. M °dharâ râhulamâtâ râhu°. — 18². M yâcat putra°. — 19¹. M °çravaṇa° B °çramaṇaṁ pai°. — 20¹. M °rîrâcu hri° B °ahlamanaḥ° M °bhâshaḥ ta° °hulaputra° °dasâmi ‖ B °dashmi |.

समवसन्ति मृगपक्षिगणापि आश्रमस्य परिसामन्ते चरन्ति प्रतिवसन्ति च सापि मृगी
तस्यैव आश्रमस्य परिसामन्तेन चरति तत्रैव परिक्रमति ॥ सा दानि कालेन सम-
येन दारकं प्रजायति ॥ तेन ऋषिणा दृष्ट्वा तस्यैतदभूषि । कुतो इमस्या तिरि-
च्छानगताये मृगीये मानुषो अपत्यो ति ॥ समन्वाहरित्वा ऋषीणां ज्ञानं प्रवर्त-
5 ति । सो दानि ऋषि समन्वाहरति । अमुकं कालं मये अधिमात्रं क्षुद्रपाकानि
फलानि परिभुक्तानि बहुतरकं च मे पानीयं पीतं ततो मे अनिष्यन्देहि धातूहि
उपलकुण्डके अशुचिं प्रस्रावं कृतं । एताये मृगीये तृषिताये पानीयसंज्ञाये [304b]
पीतं ऋतुमतीये ततो च ताये कुक्षिं प्रतिलब्धं । ममैवैषो अङ्गनिस्रावो ति ।
तेन दानि गर्भरूपं अजिनकेन गृह्णीय तं आश्रमपदं प्रवेशितो ॥

10 सा दानि मृगी पृष्ठतो अन्वेति । तेन तस्य गर्भरूपस्य फलकेन नाभि छिन्ना
तैलेन च अभ्यङ्गितो सुखोदकेन तं गर्भमलं परिधौतं ॥ सो ऋषि तं गर्भरूपं तस्या
मृगीये स्तने अल्लीपेति सापि मृगी पायेति । ऋषिस्यापि तस्या मृगीये स्तनं तस्य
दारकस्य मुखे प्रक्षिप्यति ॥ यं कालं सो दारको आश्वस्तो भवति ततः सा मृगी
तस्य आश्रमस्य परिसामन्तेन चरित्वा पानीयं च पिबित्वा पुनः गर्भरूपं स्तनं पायेति
15 जिह्वायेन च परिलेहति ॥ यं कालं सो गर्भरूपो पादेहि पि अस्थितः ततो
स्वयमस्या मृगीये स्तनं गृह्णित्वा पिबति ॥ एकचरं शृंगकं जातं ति तेन ऋषिणा
एकशृंगो ति नामं कृतं ॥ सो दानि यथा से माता मृगेहि सार्धमञ्चति तथा सो
पि एकशृंगको ऋषिकुमारो अञ्चति मृगेहि च मृगपोतकेहि च सार्धं क्रीडमानो ।
यतो यतः सा माता मृगगणेहि सार्धं अञ्चति ततः ततो सो पि एकशृंगो ऋषिकु-

2. BM so dā° B °jāyati te°. — 3¹. BM °drishṭvā ta°. — 3². BM kuto imasya tiri° M °sho apatye pi sa°. — 4. M °vartteti ‖. — 5¹. BM °ti s°. — 5². BM °ye adhimātraṁ° M °pitaṁ | tataḥ me° BM °bhiṣyaṁsvehi dhā° M °utpalakuṇḍake° B °udalake° prasrāvaṁ°.

7. B °ṛitumatīnatārakāye kukshi pra° M °tu tatāye ku°. — 8. M mamevai° BM °niçrāvo ti te°. — 9. M °dāni rū° gṛihṇiya tam āçra° çitaḥ. — 10¹. M so dā° BM °nveti tena°. — 10². M °phalakenābhicchinnāt taile° B °khodakena taṁ° BM °dhautaṁ so°.

11. B so rishi taṁ° BM °tasya mṛi° B °llīyeti sā° M °llīyanti sāpi mṛigī prāpeti ‖. — 12. BM so pi ṛishi pi tasya mṛi° M °ye stanānaṁ° kshiṣyati. — 13. M yaṁ kālaṁ so° vati | tato sā° B °vati | tataḥ° BM °yeti | jihvāyena caraṁ pari° B °hatā yaṁ°. — 15. M °hi pi aṁṣṭhito tataḥ sva° BM °n tasya mṛi° M °gīye stanaṁ° BM °gṛihṇitvā° B °hati e°.

16. M ekaṁ caraṁ° B ekaṁ varaṁ çriṅgakaṁ° BM °jātan tena° B °go hi nāmaṁ°. — 17. BM° yathā me mātā mṛigehi sārdhaṁm ayra(M °m aṁṣṭha)ti | tathā so pi (M °thā-pi so) e° M °kumārah ayra° B °ḍamo vo yato°. — 19. M mataḥ yato so tāṁ mṛigagaṇehi yataḥ yataḥ sa mātā mṛgagaṇehi sārdhaṁ anvati | tato tataḥ so °ekaṁçriṅgako ṛi° B °rdhaṁ anvati | tataḥ°.

मारो अच्चति । मृगपोतकेहि सार्धं क्रीडन्तो अच्छिय अच्छिय मृगेहि मृगपोत-
केहि च सार्धं पुनस्तं ऋषिस्य आश्रमपदं आगच्छति । ततो नं ऋषि क्षुद्रक्षुद्राणि
फलानि वर्णगन्धरसोपेतानि देति ॥ यदा सो ऋषिकुमारो आश्रमपदे शयितो
भवति ततो बहू मृगा च मृगपोतका च तमृषिकुमारमनुपरिवारेत्वा शयन्ति ॥
यं वेलं ते मृगा च मृगपोतका च चरितुकामा भवन्ति ततः तमृषिकुमारं शयमानं 5
मुखतुण्डकेन प्रतिबोधयन्ति ॥ एवन्ते मृगा च मृगपोतका च नानाप्रकारा च
पक्षी तेन ऋषिकुमारेण सार्धं तत्र आश्रमपदे अभिरमन्ति ॥ यं कालं सो एक-
शृंगको ऋषिकुमारो विज्ञप्राप्तः संजातो तस्य ऋषिस्य तं आश्रमं सिंचति संमार्जति
मूलानि नानाप्रकाराणि आनेति पत्राणि आनेति उदकं आनेति काष्ठानि आनेति
तमृषिं परिमर्दति स्नापेति अग्निहोत्रं प्रतिजागरेति । तमृषिं परिविषति नानाप्र- 10
कारा[305a]हि मूलविकृतीहि पत्रविकृतीहि पुष्पविकृतीहि फलविकृतीहि पानीयं
उपनामेति । प्रथमं तं ऋषिं परिविषित्वा तां च मृगीं मातरं पश्चात्स्वयमाहारं
करोति ॥ तेन ऋषिणा तस्य ऋषिकुमारस्य ध्यानानां च अभिज्ञानां च मार्ग-
मुपदिष्टं ॥ तेन दानि ऋषिकुमारेण पूर्वरात्रापररात्रं जागरिकायोगमनुयुक्तेन
विहरन्तेन घटन्तेन वायमन्तेन चत्वारि ध्यानानुत्पादितानि पंच चाभिज्ञा साक्षी- 15
कृता ॥ सो दानि ऋषिकुमारो चतुर्ध्यानलाभी पंचाभिज्ञो कौमारब्रह्मचारी
महर्द्धिको महानुभावो संजातो अभिज्ञातो देवमनुष्याणां ॥

एकशृंगको ऋषिकुमारो अनुहिमवन्ते गंगाये नदीये कूले साहंजनीआश्रमपदे
प्रतिवसति । वाराणसीयं च नगरे काशिराज्ञो पुत्रो न भवति ॥ तेन दानि बहू
इष्टिप्रक्रियाख्यानानि कृतानि पुत्रार्थाय यथा मे पुत्रो भवेय न चास्य पुत्रो संभवति 20

1. BM mrigipo° M °dante | acchiya mrigo° B °nto acchiya acchiyo mrigo° M °kehi sa° °sramasya padaṁ°. — 2. M tataḥ taṁ rishiṁ kshudra° B °to maṁ ri° kṣu vo° M °rṇa-gandhara° B °tāni | deti ya°. — 3. BM °bahu mrigā ca mrigā° M °parishkretvā çayanti ||. — 5. B °taṁ taṁ mrigā° M °gā ca mrigā ca mrigā° BM °tukāmo bha° M °tataḥ | tataḥ tam rishi° °khatuṇḍake° BM °dhayanti (M °yati) mrigapakshihi c°.

6. M eva te mrigā° potakā vaca nānāpra° pakshi te°. — 7. BM °ro ārijña° B °rishi taṁ° M °rishi taṁ āçritaṁ siñca° B °cati sanmārja° M °rjayati | mū° prakārāṇi mūla-prakritihi āneti patrāṇi āneti kāshṭāni āneti || tam ri° B °jāgaroti | . — 10. M taṁ ri-shiṁ° B °rivesati nānāprakārāṇi mū° M °prakārāṇi mūlaprakritihi pushpa° niyam upa° B °meti pra°. — 12. M °saṁ tam rishiṁ° BM °revecitvā ° mrigī mata° M °caṁ paçya vayaṁ āhā°. — 15. B °viharatena gha° M °viharantena vyā° tpādayitā°.

16. M °vābhijñā kaumaraba ° ri maharshiko° B °jñātā de° BM °shyāṇāṁ c°. — 18. BM °diye kule sāhañjana (M °nījm āçra°. — 19. B °hū yashṭiupayā kṛtakāni kṛi° M °hū yashṭiupakriyāsu te tāni kṛi° B °saṁbhavati | vi° M °rtiraṁ mātaḥ° BM °ro rā vati |.

विस्तीर्णे अन्तःपुरे धीतरो व अस्ति । तेन दानि काशिराज्ञा श्रुतं । गंगाय कूले
साहंजनी नाम आश्रमपदं तत्र काश्यपो नाम ऋषि प्रतिवसति तस्य राजर्षिस्य
तत्र आश्रमपदे प्रतिवसन्तस्य मृगीये सकाशातो एकशृंगको नाम ऋषिकुमारो
उत्पन्नो ति । यन्नूनाहं नलिनीधीतरं राजकुलकुमारीं एकशृंगस्य ऋषिकुमारस्य
5 ददेयं सो मे पुत्रो भविष्यति जामातिको च ॥ अथ खलु भिक्षवो स काशिराजा
ब्राह्मणपुरोहितमाह ॥ तत्र काश्यपो नाम ऋषिः प्रतिवसति । तस्य राजर्षिस्य
तत्र आश्रमपदे प्रतिवसन्तस्य मृगीये सकाशातो एकशृंगको नाम ऋषिकुमारो
उत्पन्नो ति । यं नूनाहं नलिनीधीतां राजकुमारीं एकशृङ्गस्य ऋषिकुमारस्य
ददेयं सो मे पुत्रो भविष्यति जामातिको च ॥

10 अथ खलु भिक्षवः स काशिराजा ब्राह्मणं पुरोहितं राजाचार्यं आमन्त्रयति ।
गच्छ पुरोहित इमां नलिनीं राजकन्यां एकशृंगस्य ऋषिकुमारस्य देय । सो मे
पुत्रो भविष्यति जामातिको च ॥

अथ खलु भिक्षवो ब्राह्मणपुरोहितो राजाचार्यः नलिनीं राजकुमारीं सपरिवारां
प्रवहणे आरुहयित्वा प्रभूतं खाद्यपानं मोदका[305b]नि च नानाप्रकाराणि खाद-
15 नीयभोजनीयानि आदाय साहंजनीं आश्रमपदं आगमे ॥ ते च दानि साहंजनी-
माश्रमपदं गत्वा आश्रमस्य नातिदूरेणापि समीपे गता ॥ तत्र नलिनी राजकुमारी
सखीहि सार्धं क्रीडति हसति तानि च क्रीडमानानि दृष्ट्वा तानि मृगपक्षिगणानि
सन्त्रसन्ति दिशोदिशं परिधावन्ति ॥ अथ खलु भिक्षवः एकशृंगस्य ऋषिकुमारस्य
एतदभूषि ॥ किं नु खल्विमे च मृगपक्षिगणाः सन्त्रसन्ति दिशोदिशं च परिधाव-
20 न्ति ॥ अथ खलु भिक्षवः एकशृंगो ऋषिकुमारः येन नलिनी राजकन्या तेनागमि ॥
अद्राक्षीत्खिच एकशृंगको ऋषिकुमारो नलिनीं राजकुमारीं सखीहि सार्धं क्रीड-

1[a]. BM °taṁ guṇ°. — 1[b]. M °gṛye kule sahaṁ° BM °ṛishāya | tatra° M °de pratica-santa°. — 5. M yaṁ nūnā° B °haṁ nalinidhī° tasya dadyeyaṁ° shyati | jā° M °shyati yāmā°. — 5. B °brāhmaṇabrāhmaṇapu°.

6[b]. B °ṛṣito | e°. — 8. M yamunā° B °rasya dadeyaṁ° M °shyati yāmā°. — 10. M °khavo sa kā°.

11[b]. B gaccha te pu° māṁ nandalinī rājakanyā e°. — 13. BM °rohita rā° M °jācāryyo nali° taṁ cinteyānaṁ modakāni khā° B °dāya sahaṁ° M °haṁjanim āçra° daṁ āṁgamya B °gama te°. — 15. M te ca | tāni sā° B °ca tāni sahaṁ° M °gatah | B °gatā ta°.

16. M °ṇāni saṁtrasaṁti diça° dhāvaṁti |. — 18. M °rasyaitad a°. — 19. M °ṇāh saṁtrasaṁti diço° dhāvayaṁti | B °dhāvayanti |. — 20. BM °ga rishi° M °māro ye° B °rājakaṁnyā°.

21. M °kshavah e° linī rājakumārī sa° B °hehi ca vasiṭehi ca dṛṣ° M °ṭehi ca dṛṣ°

णी स्वलंकृतां सुभूषितां महारहेहि वस्त्रेहि । दृष्ट्वा च पुनः तस्यैतदभूषि ॥ शोभना
खल्विमे ऋषिकुमारा उदाराणि तासां अजिनानि जटानि च अजिनमेखलानि
च ॥ निध्यायति राजकन्यानां । सो दानि राजकन्यानां अजिनमेखलानि अति-
रिव काये विभासन्तानि पश्यति ॥ सो दानि एकशृंगको नलिनीं पृच्छति ॥ शो-
भनानि युष्माकं अजिनानि जटानि मेखलानि च कण्ठसूत्राणि च ॥ सा दानि 5
नलिनी राजकुमारी एकशृंगं ऋषिकुमारं इदं श्रुत्वा आह ॥ एतानि एदृशानि
अस्माकं अजिनानि च मेखलानि च कण्ठसूत्राणि च हस्तसूत्राणि च ॥ सा दानि
तस्य ऋषिकुमारस्य मोदकानि पानं च अनुप्रदासि इदमस्माकं इच्छे मोदकं परि-
भुंजाहीति ॥ तेन दानि तानि मोदकानि परिभुक्तानि पानकं पि च पीतं ॥ तस्य
तहिं आश्रमपदे कटुकषायेहि फलफलेहि जिह्वेन्द्रियमप्रत्याहतस्य तेहि मोदकेहि परि- 10
भुंजमानस्य अतिरिव रसेषु आस्वादो सुमहोसो ॥ तानि च पानकपिबनानि पीत्वा
सो दानि आह ॥ शोभनानि युष्माकमिमानि फलाफलानि पानीयं च अजिनमे-
खलानि च कण्ठसूत्राणि च हस्तसूत्राणि च उदाराणि च भोजनानि अस्माकं आश्रमे
एदृशानि ॥

अथ खलु निचदो नलिनी राजकुमारी एकशृंगं ऋषिकुमारं एतदुवाच ॥ 15
आगच्छ ऋ[306^a]षिकुमार इदमस्माकं उटजानि संचारिमाणि येन इच्छाम तेन
एतानि उटजानि आदाय गच्छाम आगच्छ अस्माकं उटजं प्रविश आश्रमं ते च
उपदर्शयिष्यामि ॥ सा दानि नलिनी तत्र याने अभिरुहित्वा एकशृंगस्य हस्तं
प्रसारि आगच्छ प्रविशाहि इदमस्माकं उटजं आश्रमं प्रवेक्षाम त्ति ॥ सो दानि
तत्र याने अश्वानि आयुक्तानि दृष्ट्वा आह ॥ मम मृगी माता इमं च उटजं मृगा 20

1[1]. M °punar asyai°. — 1[2]. BM °ne ṛiṣiḥ ku° °lāni ca ni°. — 3[1]. B °dhyāyanti rā°. — 3[2]. M °bhā anyanāni paçyaṃti ‖ B °çyanti ‖. — 4[1]. M °pām paçyati ‖ so dāni ekaçriñgako nalinī pṛicchati ‖. — 4[2]. M °yuṣmāñkaṃ ajināni ca mekhalāni ca kaṇṭhasutrā°. — 5. B °çriñgasya ṛi°.

6. M °lāni ca kaṇṭhasutrāṇi ca ha°. — 7. B °pradāni i° M °pradāni ‖ i° B °hasta no° BM °bhuñjati ‖. — 9[1]. BM tena dāni kāçcitjā paribhuñjāhi(M °ti)ti ‖ tena dāni tā °kaṃ pi vānaṃ ca pi° B °taṃ ta°. — 9[2]. BM °dehi kaṭu° M °lehi dvijihvendriyehi pratyā °ahu āçvādānugṛihitu ‖ B °svādānugṛiddhatā tā°.

11. M jñāni ca pā° BM °pibanāni pitvā ‖ so°. — 12. M °tāni phalaphalāni pā° khalāni ca kaṇṭhasutrāṇi ca hastasutrāṇi ca u BM °rāṇi bhoja° M °asmākam āçra°. — 15. M °vācat ‖.

16. B °kaṃ udapāni saṃ° M °kaṃ udupāni sacāri° BM °etāni uda(M °du)pānāni ādā° kaṃ udayaṃ pra° BM °çramaṃ te(M °me) na upadarçayiṣhyamī ‖. — 18. B °nāṃ ā° M °udayam āçra° BM °maṃ praviṣhyāmaṃ ti ‖. — 20. M mama çriñanī mā° BM °ca udayaṃ mṛigā° M °vahanti nā°.

वहन्ति नाहं अत्र प्रविशामि ॥ सा दानि नलिनी एकशृंगस्य ऋषिकुमारस्य हस्ते गृह्णति कण्ठे गृह्णति आलिंगति चुम्बति प्रलोभेति च ऋषिकुमारो च ताये नलिनीये मूर्धातो उपादाय यावत्पादेषु निमित्तं पश्यति । अन्यादृशा स्वकानि जटानि अन्यादृशानि नलिनीये अन्यादृशं रूपं पश्यति अन्यादृशं नलिनीये अन्यादृशं
5 स्वकं मुंजमेखलं अन्यादृशं नलिनीये अन्यादृशानि स्वकानि हस्तसूत्राणि पश्यति अन्यादृशानि नलिनीये ॥ सा दानि ऋषिकुमारेण सार्धं आलापसंलापं कृत्वा विश्वासं च संभावयित्वा प्रेमं च संजनयित्वा यथोक्तं भगवता ॥

पूर्वे वासनिवासेन प्रत्युत्पन्नहितेन वा ।
एवन्तं संजायते प्रेमं उत्पलं वा यथोदके ॥
10 यत्र मनं निवसति चित्तं चापि प्रसीदति ।
निष्ठां पण्डितो गच्छेया संतुष्टा मे पुरे मम ॥

तेषां संसारे संसरन्तानां दीर्घरात्रं कल्पसहस्रकोटीभिः परस्परेषां समागमो आसि भार्यापतियां तस्मात्तेषां सह दर्शनेन परस्परं प्रेमं निपतति ॥ सा दानि नलिनी एकशृंगस्य ऋषिकुमारस्य प्रलोभनाभिप्राया राजार्हाणि मोदकानि खादनीय-
15 भोजनीयानि च परिभुंजापेत्वा प्रणीतानि च पानकानि पायेत्वा आलम्बित्वा च चुंबयित्वा च कण्ठसमालम्बतो च कृत्वा अश्वयानं अभिरुहित्वा वाराणसीं प्रत्यागता ॥ एतां प्रकृतिं विस्तरेणारोचयति ॥ एकशृंगको ऋषिकुमारो पि आश्रमं गत्वा तां नलिनीं राजधीतां मूर्धातो समुपादाय यावत्पादेषु रंजनीयानि निमित्तानि मनसिकरोन्तो आसति नैव मूलफलानि आनेति न उदकं न काष्ठानि
20 न आश्रमपदं संमार्जति अग्निहोत्रं पटिजागरेति ॥

1. M °ṇṭhe lagneti â° to mûpâdâya° B °çyati a° — 3. BM °jaṭâni anyâdṛçâni nalinîye anyâdṛçâni vâ° M °paṁ paçyati anyâdṛçaṁ nalinîye anyâdṛçâni rupaṁ paçyati anyâdṛçaṁ svakaṁ muñjamekhalaṁ anyâdṛçâni svakâni hastasutrâni paçyati ‖ anyâdṛçâni nalinîye ‖ B °sûtrâni pa°.

6. M sa dâni tena ṛishiṇâ ku° BM °âlâpaṁ samâ° B °paṁ vitvâ° BM °viçvastaṁ ca saṁbhâ°. — 8. M °tpannehi°. — 9. M °tpaṁ vâ°. — 10. M °vasaṁti ‖ ci° B °vasanti ci°.

11. M nishṭhâ paṁḍito gacchennâ saṁ° B nishṭhâ paṇḍi° tuṭâ me° sahâ te°. —
12. M teshâṁ sansâre sansârantânâṁ° B °rghavâtrapalmas° BM °hasrâ koṭibhi(M °bhiḥ) paraspare° M °gamaḥ â° BM °bhâryâ(B °ryâṁ)patishâṁ abhût teshâṁ° B °nipyatanti ‖ M °nipâtyaṁti ‖. — 13. B sa dâ° M bhu dâ° lobhenâpi abhimâyâ râjâ° bhojanîyâni ca pari° BM °ṇîtâni ca pânakâni ca pâyatvâ alambi M °âlaṁbitvâ ca cuṁ° M °bayitvâ ca kaṇṭhe sa° çvayânam abhiruhya vâ° gato e°.

17. M °naraṁ mulapha° kaṁ na kâshṭhâni° B °daṁ saṁmârjati ‖ agni° M °traṁ pratipâkaroti ‖ B °tipâkaroti ‖

मुक्तापुष्पावलीयेहि सपरिवारां आरूपयित्वा नौकाये प्रतिस्रोतेन तं साहंजनिं आश्रमपदं गतो ॥ तेन दानि तस्य आश्रमपदस्य समीपे नावानि स्थापेत्वा सा नलिनी राजकन्या एकशृंगस्य ऋषिकुमारस्य सकाशं विसर्जिता गच्छ त्वं ऋषिकुमारमानेहि ॥ सा दानि नलिनी राजकुमारी नावातो ओतरित्वा सपरिवारा तत्राश्रमपदे नानाप्रकाराणि वनकुसुमानि च वनकिसलयानि च प्रलोभेन्ती आसति । तां पि च दृष्ट्वा ततो आयमातो मृगपक्षिणो उत्र[307ᵃ]स्तकानि भीतानि मुंचन्तानि दिशोदिशं प्रधावन्ति ॥ ऋषिकुमारो पि तानि मृगपक्षिणानि उत्रस्तकानि दृष्ट्वा तं प्रदेशं गतः । ततो तां पश्यति नलिनीं राजकुमारीं सपरिवारां वनकुसुमानि च वनकिसलयानि च प्रलोभेन्तीं ॥ दृष्ट्वा च पुनर्येन नलिनी राजकुमारी तेनोपसंक्रान्तो ॥ नलिनीये ऋषिकुमारो भूयो अभिनन्दितो कण्ठे च लग्नो भूयो च आलिंगितो चुंबितो च मोदकानि च खज्जकप्रकाराणि च परिभुंजित्वा रसायनानि च पानकानि पिबित्वा नलिनीये सार्धं तां नावां आरूढो ॥ नलिनी आह ॥ इमे अस्माकं आश्रमे उदके संचरन्ति ॥ सो ताये प्रलोभेत्वा नावायानेन वाराणसीमानीतो । पुरोहितेन ऋषिकुमारस्य नलिनी पाणिग्रहं कृत्वा दिन्ना ॥ सो ताये नलिनीये सार्धं आरमति क्रीडति न च वन संयोगं गच्छति । जानाति वयस्यो मे ऋषिकुमारो ति ॥

सो दानि ताये नलिनीये सार्धं तस्यां नावायां साहंजनिमाश्रमपदं गतः ताये च मातरे मृगीये एकशृंगको ऋषिकुमारो नलिनीये राजकुमारीये सार्धं आगच्छन्तो दृष्टः ॥ सा दानि पुत्रं पृच्छति । पुत्र कहिं सि गतो ति ॥ सो दानि आह ॥ इमस्य मे वयस्यस्य आश्रमं गतो ति ॥ एषो मे वयस्य अग्निं प्रदक्षिणीकृत्वा उदकेन पाणिना गृहीतो ति ॥ तस्या दानि मृगीये एतदभूषि ॥ न खलु

1. BM °pe nâvâ nidhape(M °nipate)tvâ sâ ° jakanyâ e° M °rṣita gacchamtam ṛ° B °rekumam ṛṣikumâra ânehi sâ°. — 5. BM °te âçra° M °de nânâprakârâni vanaku° BM °sumânâni ca vanakiçalakâni ca pralobhenti âsati (M °pravobhamti âsamti) |.

6. BM tâni ca dṛ ° nmuñcatâni diço° M °dhâvamti | B °nti ṛ°. — 7. B °ṇâni utrasantâ° M °ṇâni samtrasamtâni dṛ° B °gataḥ ta°. — 8. BM °te tam paçya ° kiçalâni(B °ni ca) pralâpenti dṛ°. — 9. M °samkrâmta B °nto na°. — 10. M °ndito kamṭhe lagno bhûyo ca â ° kâni ca shajja ° chânâ ca pâ ° rûḍham tâm nâvâm âruhi âsati |.

13¹. M krîḍati nati°. — 13². BM °âçrame u° M °caramti. — 13³. B °pralâbhe°. — 14. BM °liniye pâṇi°. — 15. B °dati na vana sam° M °ḍati na va sam°.

17. BM so dâni tâye naliniye sârddham tâm nâvâm sâ° M °janim âçra° B °çramampadam° M °dam gato tâye ca mṛgîye mâtare e° B °mâtaramṛ° M °dṛṣṭo B °shṭaḥ sâ°. — 19¹. B °cchati pu°. — 19². M putra ka saha kim si°. — 20¹. M °vayasya âçra° B °vayasyâsya â°. — 20². M °vayasyo agnim ° kshiṇîkṛ° B °gṛhîtam ti ta°.

21¹. BM tasya dâ°. — 21². M khalu ° ro vayasya samjñâ° BM °tena te saha(M °sho) bhâryâ a° M °kshinîmkṛ ° pânigṛ°.

पुनरयमृषिकुमारो वयस्यं जानाति भार्या वा इयं च कन्या अयं च ऋषिकुमारो पुरुषोत्तमो एतेन तु एषा भार्या अग्निं प्रदक्षिणीकृत्वा उदकेन पाणिगृहीता भार्या लब्धा ति ॥ तत्र को मे ऋषिकुमारस्य एतमर्थं संबोधये यथा न एष ऋषिकुमारो काशिराज्ञो एषा धीता नलिनी नाम तव भार्या दिन्ना ति ॥ तत्र च साहंजनिस्य आश्रमपदस्य हेष्टा गंगाकूले प्रतिव्रतानां तापसीनां आश्रमपदं प्रविष्टो ऋषिकुमारो तापसीहि वारियति ॥ मा तुवं अत्र आश्रमपदे प्रविशाहि त्वं पुरुषो एषो च स्त्रीणां प्रतिव्रतानां ब्रह्मचारिणीनां आश्रमो ति न लभ्यं अत्र पुरुषेण प्रविशितुं ॥ सो दानि ऋषिकुमारो तां तापसीं पृच्छति ॥ को वा स्त्री पुरुषो वा ति ॥ तस्य ताये तापसीये स्त्रीधर्मो च आचिक्षिता न एष तव वयस्यो न एष ऋषि[307b]कुमारो एषा स्त्री नलिनी नाम राजकुमारी काशिराज्ञो धीता त्वं च पुरुषो मृगीतो उत्पन्नो ततो त्वं न जानासि एषा तव उदकेन भार्या दिन्ना त्वं च एतस्या पति नो लभ्या युष्माभिः अन्यमन्यं त्यजितुं ॥

सो दानि ऋषिकुमारो तासां तापसीनां श्रुत्वा नलिनीये सार्धं साहंजनिं आश्रमपदं पितुः काश्यपस्य ऋषिस्य सकाशं गतो पितुः पादां वन्दित्वा सार्धं नलिनीये एतां प्रकृतिं सर्वां आरोचयति ॥ ऋषिस्य एतदभूषि ॥ न शक्यति ऋषिकुमारो नलिनीये विना इह आश्रमपदे प्रतिवसितुं परस्परस्य एते बद्धसंजाता स्नेहसंजाता ॥ सो दानि तं पुत्रं एकशृंगं ऋषिकुमारं आह ॥ पुत्र एषा तव नलिनी राजकुमारी अग्निदेवं साक्षीकृत्वा उदकेन पाणिगृहीता दिन्ना । एषा ते भार्या त्वं च एतस्या पतिः । न लभ्या युष्माभिः परस्परस्य त्यजितुं । गच्छ एताय सार्धं वाराणसीं नगरं ॥ ते दानि ऋषिस्य पादां वन्दित्वा प्रदक्षिणीं च कृत्वा

3. BM °tra ko me ṛṣi° evam arthaṃ° yathā na me eṣa° ro kāçirājño° B °nāma tatra bhāryā dinnā |. — 4. M °haṃjaniye ā° B °gaṃgākule° M °gaṃgākule pativra° B °dāni gacchāma | tena dāniṃ tasu tāpasīnāṃ āçramapadaṃ gatā tatra ca tāpasīnāṃ āçramapadaṃ pravi° BM °hi vārayati mā°.

6. M mā bhuve a° BM °tvaṃ puruṣo eṣāṃ ca° M °strīṇāṃ pativra° cāriṇāṃ ā° B °bhyaṃ | a° M °puruṣeṇa praviçituṃ || B °taṃ so°. — 8². M °ro tān tāpa°. — 8³. B °sho vā yāti ta° M °sho vā pi ta°. — 9. M °sīyaṃ strīdharmā ca ācikṣati naiṣa tava vaya° B °çirājñā dhī° °nno tato taṃ na jā° M °dinnaḥ tvaṃ cāsyā°.

13. M °ro tāsāṃ tāpa° BM °çrutvā nalinīyaṃ(M °yata) sārdhaṃ sāhaṃjaniṃ āçra° B °pade pituḥ kāçya° BM °ṛṣisya sakā° M °nīya e° B °okāṃ pra° M °taṃ sarvaṃ āro° BM °ti ṛṣi°. — 15³. M °çakya ṛṣi° prativasituṃ paraspa° B °prativasituṃ° M °ddhasaṃjātāsnehasaṃjātā B °ddhasaṃjātasnehasaṃjātā |.

17¹. M °çṛṅga ṛṣi° °māraṃ āha |. — 17². BM °eṣā te° M °va nalinī° BM °devaṃ sā° °udakaṃ ca pā° M °dinnāḥ |. — 18. M etasyāṃ bhāryāṃ tvaṃ ° patir na la° B °patiṃ na°. — 19¹. M °labhya yu°. — 20. M °dāni vanditvā pra° BM °ṇāṃ ca nāta° M °sīṃ gato gatvā kāçirājño upasaṃkrāntā rā° B °ntā rā°.

मातरं च अभिवादेत्वा वाराणसीं गता गत्वा काशिराज्ञो उपसंक्रान्ता ॥ राज्ञा ऋषिकुमारस्य अनुरूपं गृहं दिन्नं परिवारं च उपस्तरणमल्याभरणं च सर्वाणि च उपभोगपरिभोगानि च युवराज्येनाभिषिक्तो ॥

सर्वे क्षयान्ता निचयाः पतनान्ता समुच्छ्रयाः ।
5 संयोगा विप्रयोगान्ता मरणान्तं पि जीवितं ॥

सो दानि काशिराजा कालधर्मेण संयुक्तो कालगतो एकशृङ्गेण वाराणस्यां राज्यं प्रतिलब्धं ॥

तेन दानि नलिनीये मूलातो यमकाला द्वात्रिंशत्पुत्रा जाता । अपराणां पि देवीनां मूलातो सातिरेकं पुत्रशतं जातं ॥ धर्मेण राज्यमनुशासयित्वा चिरं 10 दीर्घरात्रं ज्येष्ठपुत्रं राज्ये भिषिंचित्वा पुनः ऋषिप्रव्रज्यां प्रव्रजितो ॥ तेन दानि पूर्वरात्रापररात्रं जागरिकायोगसमनुयुक्तेन युज्यन्तेन घटन्तेन व्यायमन्तेन बाहितकेन मार्गेण चत्वारि ध्यानान्युत्पादितानि पंचाभिज्ञा साक्षात्कृता ॥ सो दानि कालधातुं समतिक्रमित्वा कायस्य भेदात् ब्रह्मदेवनिकाये उत्पन्नो ॥

भगवानाह ॥ यस्तेन कालेन काश्यपो ऋषिरेष स शुद्धोदनो अभूषि । या 15 सा मृगी एषा सा भिक्षवो महाप्रजापती अभूषि । यश्च काशिराजो भूदेष एव महानामो शाक्यो भूत् । यश्चैकशृंगको ऋषिकुमारस्तदाहं एव अभूव । या च नलिनी ना[308*]म राजकन्या एषैव यशोधरा अभूषि ॥ तदापि एषा आत्मानं अलंकृत्वा मम प्रलोभेति । एतरहिं पि एषात्मानं अलंकृत्वा मम प्रलोभेति ॥

नलिनीये राजकुमारीये जातकं समाप्तं ॥

1. M rājño ṛi° starasya pratyācaraṇaṃ° B °tyāvara°. — 4. B °yāntā vica° M °nicayā pa° BM °ochrayāḥ saṃ°. — 5. B °ṇānta hi ji° M °ṇānta hiṃ ji°.

6. B °rmeṇa saṃko kā° M °kto kāsagato rākaçṛiṃ° B °çriṃgeṇa vā° M °pratilaṃbdhaṃ ‖. — 8ᵃ. B °lāto — matmighā triṃ° M °yamapārā dvā °jātāḥ ‖. — 8ᵇ. M °eṣāṃ mūlāto sātire°. — 9. M °ṇa rājyaṃ anu° B °ṇa rājyaṃṃ anu° M °ayi ciraṃ° BM °jyeshṭapu° M °jye 'bhi ° shipravrajito ‖. — 10. M °yugam anuyuktena pūjya °vyāyamañtena vā° B °vyāyapantena vā° M °sākshikṛtā ‖.

12. M °dhātu sama ° bhedād brāhmaṇa de° B °brāhmo de° M °tpannaṃ ‖. — 14ᵃ. M °tena tena samayena kāçyapo nāma ṛiṣhiḥ eṣha° ‖. — 14ᵇ. M mā sā mṛigī evā sā bhi° B °pati gau° M °gautami°. — 15. B °rājño bhūd e° M °d eshaivaṃ ma ° çākya 'bhūt ‖ B °çākyā bhūt ‖.

16ᵃ. M °çriṃgo ṛi ° evaṃ bu°. — 16ᵇ. B °rājakaññyā°. — 17. M °eshā ātmaṃ a°. — 19. M iti çrīmahāvastuavadāne nali°.

भिक्षू भगवन्तमाहन्सु: ॥ पश्य भगवन् यथेयं यशोधरा राज्ञा शुद्धोदनेन अननुयुंजित्वा अपर्यवगाहित्वा अनपराधी वध्या ति वोसृष्टा ॥ भगवानाह ॥ न भिक्षव: एतरहिमेव एषा यशोधरा राज्ञा शुद्धोधनेन अननुयुंजित्वा अनपराधी वध्या वोसृष्टा । अन्यदापि एषा यशोधरा इमिना राज्ञा शुद्धोदनेन अननुयुंजित्वा अपर्यवगाहित्वा अनपराधी वध्या वोसृष्टा ॥ भिक्षू आहन्सु: ॥ 5 अन्यदापि भगवं ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥

अतीतमध्वाने अनुहिमवन्ते महावनखण्डे तत्र माण्डव्यस्य ऋषिस्य आश्रमपदं चतुर्ध्यानलाभिनः पंचाभिज्ञस्य महाभागस्य मूलोपेतं फलोपेतं पुष्पोपेतं पत्रोपेतं पानीयोपेतं मृगपक्षिशतसहस्रेहि निषेवितं ॥ अथ खलु भिक्षवो माण्डव्येन ऋषिणा ग्रीष्माणां पश्चिमे मासे शुद्धपाकेहि फलेहि परिभुक्तेहि बहुतरेण च पानीयेन 10 पीतेन अभिष्यन्देहि धातुहि उत्पलकुण्डके सशुक्रं प्रस्रावं कृतं ॥ अथ खलु भिक्षवो अन्यतरा मृगी ऋतुमती तृषायां श्रान्ता पानीयसंज्ञाय ततो उत्पलकुण्डकातो तमृषिस्य सशुक्रं प्रस्रावं पीतं । अशुचिम्रक्षितेन च मुखतुण्डकेन स्वकं योनिमुखं परिलेहति । अचिन्त्यो सत्वानां कर्मविपाकः । ताये मृगीये तं शुक्रं रुधिरं च संमूर्छित्वा कुक्षिं प्रतिलब्धं ॥ सा दानि तस्यैव आश्रमपदस्य परिसामन्तेन चरति 15 परिभ्रमति च ॥ सा दानि कालेन च समयेन च दारिकां दर्शनीयां अपुत्रा-वक्षाग्रां परमया शुभवर्णपुष्कलतया समन्वागतां गौरीं नवनीतपिण्डसंनिभां प्रसूता ॥ सा दानि मृगी तां दारिकां प्रसूता च तेन च ऋषिणा तं द्रव्यं दृष्टं ॥ तस्यैतदभूषि ॥ कुतो इमस्यातिरश्चानगताये मृगीये मानुषं अपत्यन्ति ॥ समन्वाहरित्वा ऋषिणा पंचाभिज्ञानां ज्ञानं प्रवर्तेति ॥ सो दानि ऋषि माण्डव्यो 20

1¹. B bhikshu bha° M bhikshur bhagavantam âhu° B °ranta âhamsuḥ pa°. — 1². M °yu-jitvâ aparyâvagâhetvâ ana° B °jyitvâ parya° M °osrishto | aaṛadâ° (l. 4). — 3. B °yu-jitvâ ana°. — 4. M °pi evâ ya° dharâ etinâ° B °dharâ eminâ° M °nena ananuyuñjitvâ aparyya°. — 5. BM bhikshu â°.

6¹. M °gavan | . — 6². M °kshavaḥ B °kshavo a°. — 7. M atîtam adhvâne° B °hâvanashaṇḍe tatra maṇḍa° M °hâvanakhaṇḍe tatra maṇḍavya° B °mûlopetam | pha° M °gapakshigaṇaça°. — 9. B °vo maṇḍa° M °vo maṇḍavye ° shyandehi dha° B °shyande dhâ° M °utparakundake° B °ṇḍakehi sa° M °çukraprasrâvam°.

11. M °pâniyam samjñâya tataḥ utparakundakâto tam ṛishi° B °ṇḍakakâto° B °prasrâvam° M °prasrâvam tîtam. — 13. M °tuṇḍake° B °parilekhasi | M °parilekhesi. — 14¹. B acintyam sa° M acintya sa° pâke ta°. — 14². M toye mṛi° B °mṛigi tam° BM °rudhi° M °sammûrcchitvâ° B °kukshi pra°.

16. M °lena ca dâ° drâsakṣam pa° B °paramapâṇḍubha° M °abhavatayâ° BM °gauri nava° M °nîtapiṇḍasam° prasutâḥ | . — 18. M °kâm dvasutâm ca te° B °sûtâm ca tena ca rishi° BM °dravyena drishṭvâ ta°. — 19¹. M °aya tirecchâ° patyani ti B °a ti sa°. — 20. B °shi maṇḍa°.

पंचाभिज्ञो महाभागो समन्वाहरति ॥ इह मम [308^b] अत्र आश्रमपदे अन्यस्य पुरुषस्य प्रचारो नास्ति । एषा च मृगी इमहिं एव मम आश्रमपदे जाता संवृत्ता तथान्यान्यपि मृगपक्षिशतानि इह वनखण्डे संवृत्तानि नैव मम क्वचित् मृगो वा पक्षी वा अन्यवनखण्डं गच्छति न चान्यातो वनखण्डातो कोचित् मृगपक्षी इहा-
5 गच्छति । इह एते वनखण्डे मृगपक्षिगणा जाता च संवृत्ता च संवृद्धा च अभिरता च अमनुष्यचरितं च वनखण्डं । अमुककाले मया ग्रीष्माणां पश्चिमे मासे पक्वा-सुपक्वानि च फलफलानि परिभुक्तानि सुशीतलं च बहुतरं पानीयं पीतं । ततः मे भिष्यन्दीहि धातूहि उत्पलकुण्डके मशुकं प्रस्रावं कृतं एताये मृगीये तृषिताये तं मशुकं प्रस्रावं पानीयसंज्ञाये पीतं । ततो एताये मृगीये कुक्षिं प्रतिलब्धं । मम
10 एष अंगनिस्रावो ॥ तस्य ऋषिस्य माण्डव्यस्य तत्र दारिकाये अतिप्रेमं संजातं ॥ तेन सा दारिका वल्कलेन गृह्य आश्रममानीता । मातापि मृगी पृष्ठतो न्वेति ॥ तेन दानि ऋषिणा ताये दारिकाये तं नाभि फलशस्त्रकेण छिन्नं मानुषिकाये च नं केलायनाय केलायन्ती ताये वनमृगीये स्तनाचूषणं आसति । सो पि नं ऋषि क्षुद्रपाकानि फलानि मुखे पीडेति कालेन कालं तैलेनाभ्यंगेति सुखोद-
15 केन स्नपेति ॥ संवर्धमाना च सा दारिका ताये मृगीये तेन च ऋषिणा अतीव तं वनं शोभेति सा च नां माता जिह्वाये परिलिहति ॥ यत्र काले सा दारिका विवर्धमाना पादेहि पि चक्रमति ततो यत्र यत्र पादा निक्षिपति तत्र तत्र ताये दारिकाये पूर्वोपचितेन शुभस्य कर्मस्य विपाकेन पद्मानि प्रादुर्भवन्ति ।

1. B iha mama putra ° pracāra nāsti | . — 2. BM °imamhi evam mama ā° B °çramapadam jā° M °jātāḥ | saṁvṛitāḥ ta° BM °thānyānapi mṛi° M °naivam mama kva° B °go vā pakshi vā anyavanashaṇḍam° M °kshi vā anyavanakhaṁḍakam gacchati | tadānyato vana° B °ānyanto vanashaṇḍā° BM °to kvaci° M °t mṛigāpakshi i°. — 5. B °ete vanashaṇḍe° M °ete vanakhaṁḍe mṛi° tā ca abhi° BM °manu(B °nushya)carite ca vanakhaṇḍe mau°.

6. M °shmāṇām paçci° BM °lāni ca pari° M °hutalam pā°. — 7. M tato me bhishyandamāndehi dhā° B °shyantehi dhā° M °utpalakuṇḍake çaçukrapraçrāvam° B °ṇḍake maçukram prasrāvam kṛi° M °tṛishitāye °vam pīnīya°. — 9^a. B °kukshi pra°. — 9^b. B °nisrāvo ta°. — 10. B °shiṣya maṇḍa° M °shisya maṁḍavya°.

11^a. B °āçramapadam ā°. — 11^b. M °pṛishṭhato anveti | . — 12. M te dā° B °tam nālaphalam çastra° M °tam nālaphalaçastrakena ° mushikāye vaamanam keḷāyanakeḷāyanti | tā° B °nam keḷāyanāya keḷāyanti tā ° stanamūcanam ā° M °stanacuṁcanam āsati | . — 13. BM so pi tam ṛishi(B °shī) kshu° B °deti | kālena kā° M °kena snāpeti B °peti nam°. — 15. M samvaddhamānā° B °varddhamānā° M °ṛi atena ca ṛi ° tīvam tam vanam çobhati | sā ca tām mātā° B °çobhati sa ca nam mātā° BM °likhati ya°.

16. M °vivaddhamānā° B °mati | tato° M °mati | tataḥ yatra yatra pā ° ti tatra tatra tasyā dārikāyā pūrvopacitenā çu ° rbhavanti sa°.

ततो ततो समन्तेषु क्रमकेषु पद्मानि प्रादुर्भवन्ति । सापि दारिका तत एवन्तानि पद्मानि गृह्य स्वयं च आबन्धति तेषां च मृगपोतकानां पद्मानि आबन्धति ॥ एवं सा तेहि सार्धं क्रीडन्ती तहिं आश्रमपदे संवर्धते परस्परं विनापि न रमन्ति ॥ यं कालं सा दारिका विज्ञप्राप्ता ततो तमृषिस्य आश्रमं सिंचति शोधेति नाना-
5 प्रकाराणि मूलविकृतीनि आनेति पत्रविकृतीनि नानाप्रकाराणि आनेति पुष्पवि-कृतीनि नानाप्रकाराणि आनेति फलविकृतीनि नानाप्रकाराणि आनेति उदक-मानेति काष्ठं वा समिधानि वा आनेति । तं च ऋषिं तैलेनाभ्यंगेति स्नापेति । अग्निहोत्रं से पटिजागरेति तं च ऋषिं नानाप्रकारेहि मूलेहि च पत्रेहि च पुष्पेहि च [309b] फलेहि च परिविसति । नानाप्रकाराणि च फलपानानि आनयति । यतो
10 यतो च तत्राश्रमपदे गच्छति यतो यतो गच्छति मूलहारिका वा पत्रहारिका वा पुष्पहारिका वा फलहारिका वा ततो तेहि मृगपक्षीहि परिवारिता आगच्छति ॥

कदाचित्सा पद्मावती तेहि मृगपक्षीहि परिवारिता उदकहारिं गता का-म्पिल्लको च राजा ब्रह्मदत्तो बलाग्रेण सार्धं मृगव्यं अन्वन्तः तं प्रदेशं उज्झितो वातजवसमेन तुरंगेन मृगमनुजवन्तो । तेन मृगेन सो राजा ब्रह्मदत्तो वनखण्ड-
15 मुपनीतः ॥ यथोक्तं भगवता धर्मपदेषु ॥

गतिर्मृगाणां प्रवनं आकाशं पक्षिणां गतिः ।
धर्मो गतिर्विभावीनां निर्वाणं महती गतीति ॥

सो मृगो तत्र वनखण्डे नष्टो ॥ तेन राज्ञा ब्रह्मदत्तेन वनखण्डे तं मृगं मार्ग-

1. M sâ dârikâ tadâ evaṃ tâni padmâni gṛi° B °rikâ tataḥ e° BM °yaṃ ca âbandha-(M °badhnaṃ)ti | teshâṃ mṛi° bandheti | . — 2. B °krîḍanti ta° M °krîḍaṃti tehiṃ°. — 4. BM °çodheti | nânâprakârâṇi mû° neti(B °ti |) pushpavikṛitîni âneti phalavikṛitî-(M °tâ)ni nânâprakârâṇi âneti(M °ti ||) udakam â(M °dakâ)neti(B °ti |) kâshṭam vâ (M °shṭhâni vâ) sa°.

7. BM °ṛishi tai° M °bhyaṃgi snâyeti. — 8. BM °traṃ me paṭi(M °ti)pâkaroti (M °ti ||) taṃ° B °ṛishi nânâpra° M °ṛishiṇâ nânâprakârehi mûlehi ca phalehi ca patrehi ca pariviçati B °viçati | . — 9¹. B °pânâni vâ â° M °ni ca â°. — 9². B °çramapade° M °çrati yato yataḥ gacchati mûlahârikâ vâ pushpahârikâ vâ phalahârikâ vâ patrahârikâ vâ gacchati || tato° B °trahârikâri vâ pu° phalahârikâ vâ gacchati tato° mṛigapakshihi parivârito â° M °kshihi sparivârikâ â°.

12. M °sâ paramâ° BM °tehi mṛiga(B °ge)pakshihi pari° viṃgatâ kâ(M °tâ || kaṃ)-pilla° vyaṃ anvataḥ(M °to) taṃ° B °ujhitvâ vâ° tvâ° ujhivâtajavena° M °turagavegena mṛiga° B °raṃgeṇa mṛiga anu°. — 14. B °tto vanashaṇḍa° M °tto vanakhaṃḍam upanîto || . — 15. B tatho° BM °shu ga°.

16. M gatir mṛi° BM °plavanaṃ â°. — 17. B dharmâ gatir vibhâtî° M °rmo gati vibhâtî° mahatâṃ gatîti | . — 18¹. M °mṛigo tatra vanakhaṃḍe nashṭo° B °shṭo te°. — 18². M tatra

तेन तहिं उदककूले पद्मावती दृष्टा कृष्णाजिनेन निवस्ता उत्तरासंगिका च
उदककुम्भेन गृहीतेन पद्मेन च शोभनेन हस्तगतेन प्रासादिका दर्शनीया परमया
वर्णपुष्कलतया समन्वागता । यत्र यत्र च क्रमाणि निक्षिपति तत्र तत्र पद्मानि
प्रादुर्भवन्ति मनोरमाणि सुदर्शनीयानि । दृष्ट्वा च पुनर्मिथवो राज्ञो ब्रह्मदत्तस्य
पद्मावतीं ऋषिकुमारीं एतदभूषि ॥ अहो कन्यायाः रूपवर्णं अनुभावं यत्र 5
यत्र क्रमाणि निक्षिपति तत्र तत्र पद्मानि प्रादुर्भवन्ति अतीव बहुरमणीयानि
प्रासादिकानि दर्शनीयानि का नु खल्वियं भविष्यति देवकन्या वा नागकन्या वा
किन्नरकन्या वा मानुषी वा इयं भविष्यति अमानुषी वा । यं नूनाहं उपसंक्रम्य
परिपृच्छेयं ॥

अथ खलु मिथवो राजा ब्रह्मदत्तो येन पद्मावती ऋषिकुमारी तेनोपसंक्रमित्वा 10
पद्मावतीं ऋषिकुमारीमेतदवोचत् ॥ भद्रे का त्वं कस्य वासि ॥ एवमुक्ते
मिथवः पद्मावती ऋषिकुमारी राजानं ब्रह्मदत्तमेतदवोचत् ॥ अहं खलु ऋषि
पद्मावती नाम ऋषिकुमारी माण्डव्यऋषिस्य धीता मूलफलभोगिकस्य वनवा-
सिस्य ब्रह्मचारिस्य ॥ एवमुक्ते मिथवः राजा ब्रह्मदत्तो [310ᵃ] पद्मावतीं ऋषि-
कुमारीमेतदवोचत् ॥ केवरूपा ते भद्रे भोजनविधानानि उपवने निवसन्तीये 15
येनासि एवं उपचितशरीरा कीदृशानि ते वस्त्रविधानानि येन ते चैवं सुकुमा-
रवर्णनिभा ॥ एवमुक्ते मिथवो पद्मावती ऋषिकुमारी राजानं ब्रह्मदत्तमेतद-
वोचत् राज्ञो वस्त्राणि परामृशन्ती ॥ मूलफलानि यथाकाममाहारं अजिनानि
प्रावरणानि एवं सूक्ष्माणि यादृशानि इमानि न च अजिनानि ॥ एवमुक्ते मिथवः

tena ṛṣi ° itena vanakhaṇḍe taṁ ° kūle padmāvatī ° B ° dṛṣṭvā kṛ ° M ° ahaṃ kṛ ° nivastra
stta ° B ° nivasta utta ° M ° çobhanena hasta ° B ° bhanena ca hasta ° M ° nīyā paramāye pu-
shkalavarṇatāye samanvāgatāḥ B ° pushkarata °. — 3. BM ° yatra caṅkra ° M ° rbhavaṁ-
ti | manoramāni sa ° B ° ṇi sudarçanīyāni dṛ ° M ° rçanīyāni dṛ °. — 4. B dṛshṭvā
° ca | pu ° M ° puna bhi ° sya padmāvatiṁ rājakumārim eta ° B ° tiṁ rājaku °. — 5. M ° nyāyā
rūpavatiṁ ṛddhyānu ° B ° ntaṁ ṛddhyānubhā ° BM ° yatra yatra caṅkra ° M ° rbhavaṁti |
ati ° B ° nti | atīva ca cakshu ° teyaṁ bhavishyati | devakaññyā vā nā ° nnarakaññyā vā mā °
BM ° iyaṁ rūpaṁ bha ° B ° shyati | a ° M ° amānushā vā.

8. M yaṁ nūnāhaṃ ° . — 10. M ° yena padmāvatī nāma ṛṣi ° tvā padmāvatīṁ ṛṣi °
B ° tvā padumāvatī ṛṣi °.

11ᵃ. M ° sya vāpi e °. — 11ᵇ. M ° kahavo padmāvatī ṛṣi ° mā rājā ° tad ucdeṣa | . —
12. M ° ṇḍavyo ṛshisya dhītā mūlaphalabhogika °. — 13. M ° kahavo rā ° B ° hmadatto
padmāvatī ṛṣi °. — 15. M ° bhadre bho ° B ° santiye na yenāsi ° M ° nī yena yena si ° etro
kī ° caiva sukumāro varṇa ° B ° kumārā varṇṇa °.

17. M ° vā rājāna bra ° BM ° cat | rājño ° M ° vastrāṇi parāmṛçati B ° mṛçanti mū °. —
18. M mūla ° B ° prāvaraṇāni evaṁ sūkshmāni yā ° M ° māni na a °. — 19. M ° kahavo
rājā bra °.

राज्ञो ब्रह्मदत्तस्य एतदभूषि ॥ अविधिज्ञा इयं ऋषिकुमारी राज्ञो राजार्हाणां
वा वस्त्राणां नैव अस्य विशेषं अभिजानाति न राजानस्य नैव अजिनानां
विशेषं जानाति नापि राजार्हाणां वस्त्राणां विशेषं जानाति नापि मम तुरंगस्य ।
एषा च ऋषिकुमारी राजकन्या ममैषा भार्या अनुरूपा भवेया न शक्या मया
5 माण्डव्येन ऋषिणा अनभ्यनुज्ञाता पाणिनापि प्रष्टुं कुतो पुनरितो आश्रमातो
कम्पिल्लं नगरं नयितुं । माण्डव्यो ऋषि महाभागो शापेन मे सपरिवारं भस्मी-
करेय । यं नूनाहं पदुमावतीमृषिकुमारीमुपायेन प्रलोभयेयं ॥ पौराणानां च
भिक्षवो राज्ञां मृगव्येन गच्छन्तानां मधुसर्पिसंयुक्तानि सक्तूनि राजार्हाणि च मो-
दकानि च उक्कारिकानि च यमलकं पूरेत्वा अश्वपृष्ठे पल्लाणस्य पृष्ठतो बध्यन्ति
10 मा राजा अश्वेन एको अद्वितीयो वनेषु हृतो समानो क्षुधाय मरेय ॥ तेन
खलु पुनर्भिक्षवो समयेन राज्ञो ब्रह्मदत्तस्य मधुसर्पिसंयुक्तानि सक्तूनि मोदकानि च
उक्कारिकानि च यमलकं पूरेत्वा अश्वपृष्ठे पृष्ठतो पल्लाणबद्धेन बद्धमभूषि ॥ अथ
खलु भिक्षवः राजा ब्रह्मदत्तो यमलकातो मोदकं उद्धरेत्वा पदुमावतीये अदा-
सि ॥ हन्त भद्रे इमानि अस्माकं फलानि ॥ सा दानि आह ॥ जाने कतमानि
15 शोभनतराणि फलानि युष्माकं वा अस्माकं वा ॥ सा दानि तं मोदकं परिभु-
ञ्जित्वा आह ॥ भगवं शोभनानि इमानि युष्माकं फलानि मृष्टानि रसवन्तानि
अस्माकं पुनः फलानि कटुकषायाणि ॥ राजा आह ॥ एदृशानि अस्माकं आश्रमे
वृक्षेषु फलानि यदीच्छसि [310b] ईदृशानि परिभुंजितुं ततो तं मम आश्रमपदं
गच्छाहि ॥ एवमुक्ते भिक्षवः पदुमावती ऋषिकुमारी राजानं ब्रह्मदत्तमेतद्-

1. M °ri rājñā rājārhāṇāṁ vastrā° BM °shiṣya viçeshaṁ nābhijā(M °jña)nāti na M °naivaṁ ajināṇāṁ viçeshaṁ nābhijānāni na rājānasya naiva ajināṇāṁ ° turaṁgasya ‖. — 4. BM eshāṁ ca ṛshikumārī(M °rīṁ) rājakanyā mamesha bhā ° veyā ça° M °kyā mayā maṇḍa ° pāṇinā° BM °kuto pu ito āçra° M °raṁ napituṁ B °yituṁ ma°.
6. BM maṇḍa° M °raṁ bhasmi° BM °reyaṁ | . — 7¹. M °kumārīṁ upā° B° kumārīm upā° M °labheyaṁ | . — 7². BM paurāṇāṁ ca bhi° M °vyena gacchentānāṁ madhusarppisaṁyuktānāṁ madhusarpisaṁyuktānaṁ madhusarpisaṁyuktāni çaktukāni rājārhā° B °ntānāṁ madhusarppisaṁyuktānāṁ madhusarpiyuktāni çaktū ° rhāni ca mo° M °yamarakaṁ pū° BM °çvapṛshṭhapallā(M °lā)ṇasya° M °to baṁdhyati ‖ mā rā° B °ndhyati mā rā°. — 10. B °ktāni çaktū° M °ktāni çaktunu° B °ukaritāni yamala° M °kkārikāni yamarakaṁ rūpetvā ° to pallāço baddhena baddha° B °lāçabaddhatena baddha°.
12. M °yamarakāto modako u° BM °kkaṭṭetvā° B °ai ha°. — 14¹. B °imāṇi a ° lāni sā°. — 15. BM °dāni tato mo°.
16. B bhagavāṁ ço° M sarvaço ° punaḥ phalā° BM °ṇakāshā°. — 17². M etādṛçāni asmākaṁm āçra° BM °lāni icchasi idṛçā° B °tuṁ | tato° M °daṁ āgacchāhi ‖. — 19. M °kshavo yaimāṁvati ° dattaṁ eta°.

आनेथ पद्मावतीये वस्त्राणि चाभरणानि च याव च राजकुलं याव च उद्यानं तमन्तरं सर्वं अलंकारापेथ विततवितानं चित्रपुष्पपरिचित्रं ओसक्तपट्टदामकलापं धूपनधूपितं सिक्तसंमृष्टं मुक्तपुष्पावकीर्णं देशेदेशेहि गन्धतैलकलशलक्षकपाणिस्त्यंशोभिकाहिस्त्रलकवेलक्ष्वकनट्टधराणि उपस्थपेथ ॥

मनसा देवानां वचसा पार्थिवानां
नचिरेणाढ्यानां कर्मणा दरिद्राणामिति

वचनमात्रेण राज्ञो अमात्येहि यथा[3 1 1b]ज्ञप्तं सर्वं पटियागृतं ॥ अथ पद्मावती राजानं ब्रह्मदत्तमेतदवोचत् ॥ कहिं ते भगवं शरणं समिधा वा उदकोदकं कमण्डलु वा समयो वा मे अग्निहोत्रं जुहनाय ॥ अथ राजा ब्रह्मदत्तो पद्मावतीमाह ॥ आगमेहि मुहूर्तं सार्धं ते मूलानि अजिनानि आनीयन्ति ततः गंगायां स्नात्वा सहिता अग्निं जुहिष्यामः ॥ अथ राज्ञो अमात्यपारिषद्या तत्क्षणं तन्मुहूर्तं अन्तःपुरं तमुद्यानं आनयेन्सुः पद्मावतीये वस्त्राणि आभरणानि आनयेन्सु ब्राह्मणं च पुरोहितं राजाचार्यं आनयेन्सु श्रेष्ठिप्रमुखो च निगमो पि निर्यासि सार्थवाहप्रमुखो वणिग्ग्रामो निर्यासि सर्वाणि चाष्टादश श्रेणी निर्यान्सुः ॥

अद्राक्षीद्राज्ञो अमात्या पारिषद्या नैगमजानपदा च ब्राह्मणा च पुरोहितो च राजाचार्यो ब्रह्मदत्तस्य देवीं पद्मावतीं सर्वालंकारविभूषितां प्रासादिकां दर्शनीयां परमवर्णपुष्कलतया समन्वागतां । राज्ञा ब्रह्मदत्तेन सार्धं अग्निप्रदक्षिणीं करोति । यत्र यत्र च क्रमाणि निक्षिपति तत्र तत्र पद्मानि प्रादुर्भवन्ति प्रासादिकानि दर्शनीयानि । दृष्ट्वा च हृष्टा तुष्टा हर्षसंजाता राजानं ब्रह्मदत्तमामन्त्रयेन्सुः ॥ नास्माभिः महाराज कदाचित्कस्यचिदेदृशी अद्वी दृष्टा वा श्रुता वा

dhūpanadhūpitaṁ saṁktasaṁmṛṣṭaṁ° M °ṣyaṁ dhṛsidhi ca° BM °ṭilamallakṣṇiphaiṇa-ṣyāñṣa° B °bhiruhī° M °lātasaṁbhaṁlhastalakāvalaññdanaṭṭadharāṇi upathapetha |.

6. M °ṇnayāṁ dari° thānantaṁ sa° B °sarva pa° BM °ṭiyāhṛitaṁ |. — 7². M °padmāvatīye vā°. — 8. M karhi te bhavāṁ ṣa° B °gavāṁ ca° BM °unmolakaṁ° M °kamaṇḍalu vā samaya vā me° B °samaye vā me°. — 9. M °padmāva°. — 10. M apāme° sādhaṁ te mūlamāni aji° B °kāmāni aji° niyanti | ta° M °niyañti tato gaṁ° nhyāni |.

11. M atha rājā amātya° B °ṣyasya pāri° M °hurtta a° B °naṁ ānayetsuḥ padu° M °naṁ ānayetsuḥ | padmāvati° B °ṇāni cānayetsu brā° M °ṇāni cānayetsuḥ brāhmaṇapurohitaṁ ca rājācāryaṁ ānayetsuḥ çreṣṭhipramukhā ca nigamehi niryāsi sā° B °ryaṁ ānayetsu çreṣṭhipramukho ca nigamo bhiniryāsi sā° BM °mukhā vaṇi° B °cāṣṭhādaça çreṇī niryāṁsuḥ |. — 15. M °rohitā cā rājācāryya bra° devī padu° laṁkārabhūṣitaṁ prājādi° nīyaṁ paramavarṇadarçapuṣkaratayā sa° B °nvāgato |.

17. M rājā bra°. — 18. BM yatra yatra caṁkra° B °māni nikṣi° M °ṣidevaṁti pra°. — 19. BM °hṛṣṭā ca tu° M °dattaṁ āmaṁtrayetsuḥ B °yetsuḥ nā°. — 20. M °asmābhir

यथा इमस्या पदुमावतीये देवीये । साधु महाराज पदुमावती देवी पादेहि राजकुलं प्रवेशियतु ततो महाजनकायो देवीये इमां एवंरूपां ऋद्धिं दृष्ट्वा प्रीता भवेन्सुः ॥ अथ राजा ब्रह्मदत्तो सान्तःपुरः पदुमावतीये देवीये सार्धं अमात्य-पारिषद्यपुरस्कृतो महता जनकायेन सार्धं महता राजऋद्धीये महता राजानुभावेन
5 उद्यानातो राजकुलं प्रवेशि ॥ अद्राक्षीत्सो जनकायो यावन्तं उद्यानं यावन्तं राजकुलं पदुमावतीये पदवीतिहारायां उभयतो पदुमानि प्रासादिकानि दर्शनीयानि ॥ दृष्ट्वा पुनः महाजनकायो उदानं उदानेति ॥ कृतपुण्यो महाराजा ब्रह्मदत्तो यस्य इममेवंरूपं स्त्रीरत्नं प्रादुर्भूतं ॥ अथ राजा पदुमावतीये सार्धं उपरिप्रासादवरगतो पंचहि कामगुणेहि समर्पितो समङ्गीभूतः क्रीडति रमति
10 प्रविचारयति पदुमावती च देवी म[3।5']देहि अथेहि च गीतवाद्येहि च प्रीणेति तावदन्या देवीयो न समन्वाहरति पदुमावतीये प्रमत्तो । पदुमावती च राज्ञा ब्रह्मदत्तेन सार्धं संवसन्ती आपन्नसत्वा संजाता ॥

यत्र काले देवीप्रज्ञनवेला ततः राज्ञा ब्रह्मदत्तेन या अन्तःपुरिकायो कुब्जायो स्त्रीधर्मज्ञा ता आज्ञत्ता पदुमावतीमुद्दिश्य । राज्ञा च हिरण्यसुवर्णं अग्रतो
15 कृत्वा नानाप्रकाराणि च वस्त्राणि निक्षिप्तो ये मे निवेदयिष्यन्ति देवीये पदुमावती प्रजाता ति तेषां आच्छादं दास्यामि ॥ तासां पि देवीनामेतदभूषि । यदुपादाय पदुमावती आनीता तदुपादाय अस्माकं राजा न समन्वाहरति । अथ एषा प्रजायमानी अस्माकं अनयव्यसनमापादयितव्यं ॥ ता दानि तां पदुमावतीं

mahā° B °d edṛçāni riddhi dṛṣṭvā vā çru° M °ṛiddhiṁ dṛṣṭvā vā çrutvā ya° B °imasya pa° M °imasya padmāvatiye devīne B °vīye sā°.

1. M °hi rājakula praveçatu ‖ tadā ma° B °mahāṁ janakā° M ° imāṁm evarupā tam ṛiddhiṁ° B °pāṁ riddhiṁ dṛ° BM °vetuḥ ‖. — 3. M °ntaḥpuro padu ° abadyāpuraskṛto mahato janakā ° pradeśi ‖. — 5. M °ṣo yāvanca rājakulaṁ yāvanca udyānaṁ padmāvatī ° vīthihārā° BM °to padumāvatī prāsādikāṁ darçanīyāṁ dṛ°.

7¹. M °kāya udānaṁ°. — 7². M °m evarūpaṁ°. — 8. M °jā padmāvatīye sārddham upari ° guṇe samarpa° B °rpito samaṅgībhū° M °krīḍito ramati pravi° B °krīḍanti ramanti pravi° BM °yati padmā(B °dumā)vatī ca devī ca ādehi akehe ° çokhoti(M °çosbati) tāvadanya devī yena samāha° M °ti ‖ padmāva° BM °tto pa°.

11. M padmāvatiṁ ca° B °rddhaṁ samvasanti ā° M °sasanti ā ° jātāḥ B °jātā ya°. — 12. BM yatra kālaṁ devī prajānavelā° M °tato rājño bra° B °ttena yo a° M °ṇāṁ nāmājatā padmāvatīm anunathā B °tha vā°. — 14. B rājā va hi ° suvarṇan agra° M °sharṇnāye sa° BM °yiṣyati | kaha° M °ṇa padmāvatī prajānāni te° B °prajānāti te°.

16¹. B °bhiṣi pa°. — 16². B padupādāya samā° M yad upāya padumāvatī ā ° rājenaṁ sa°. — 17. M °smābhir sarva° B °yitavya | C °yitavyā |. — 18. BM te dā° M °rikānāṁ padmāvatiṁ pṛcchanti jā° B °pṛcchati jā°.

पृच्छन्ति ॥ जानासि कथं स्त्रियो प्रजायन्तीति ॥ सा दानि आह ॥ न जाना-
मीति ॥ ता दानि अन्तःपुरिका आहंसु ॥ स्त्रीये प्रजायमानीये अक्षीणि
पट्टकेन बध्यन्ति ॥ सा दानि आह ॥ मह्यं पि प्रजायमानीये अक्षीणि पट्टकेन
बन्धेथ ॥ तस्या दानि यं वेलं प्रजायिष्यतीति ततो अस्या अक्षीणि पट्टकेन बद्धा-
नि ॥ सा दानि द्वौ दारकौ प्रजाता प्रासादिका दर्शनीया ॥ तासां दानि 5
एतदभूषि ॥ अपुत्रा तावियं देवी राज्ञो ब्रह्मदत्तस्य इष्टा च बहुमता च आसि
किं पुनः सपुत्रा अपुत्रकेहि राजकुलेहि ॥ इमाये द्वौ दारका जाता ततो अधिमात्रं
राज्ञो ब्रह्मदत्तस्य प्रिया भविष्यतीति वयं च न समन्वाहरिष्यति ॥ ताहि दानि
अन्तःपुरिकाहि ते दारका तपनके तैलके उपचारित्वा तत्र प्रक्षिप्ताः ॥ तं तपनं
स्वपिहितं सुबद्धं कृत्वा राजकीयेन तापनीयेन तापयित्वा मुद्रयित्वा नदीये गंगाये 10
प्रक्षिप्ता ॥ पद्मावतीये च स्वकेन गर्भमलेन मुखं खचितं ॥ सा दानि पद्मावती
अन्तःपुरिकां पृच्छति किं मे जातन्ति ॥ ताहि पि अन्तःपुरिकाहि द्वे उल्ब-
काणि गर्भमलेन प्रम्रक्षयित्वा पद्मावतीये अल्लीपितानि ॥ इमानि प्रजातानि ॥
सा दानि आह ॥ मुञ्चथ एतानि किं एतेषां करिष्यामीति ॥ राजा दानि
ब्रह्मदत्तो पृच्छति ॥ किं देवी प्रजाता ति ॥ ता आहंसु ॥ महाराज द्वे दारका 15
प्रजाता प्रासादिका दर्शनीया ते [312b] च नं जातमात्रा ताये खादिता ॥
कुतो महाराज ब्रह्मचारिस्य ऋषिस्य अपत्यन्ति पिशाची एषा त्वया आनीता त्वं
दिष्ट्या जीवन्तो मुक्तो ॥ ताये पिशाचिनीये मूलातो आगच्छ पश्याहि तां यदि
यथार्थं न श्रद्दधासि ॥ सो दानि तां देवीं पश्यनाय प्रविष्टो पश्यति च पद्मावती

1². B °sí | ka° M °thaṃ striyo prajāyanti || . — 2². B te dā° M °antaḥpurikā āhaṃsuḥ stri°. — 3². M °kshiṇi pa° °dhyati. — 3³. M °akshiṇi pa° B °kena baṃdhetha | . — 4. B tasya dāni iyaṃ ve° M tasya dāni yaṃ° B °iti | tato asya akshiṇi pa° M tata 'sya akshiṇi pa°. — 5¹. M °jātāḥ pra° BM °nīyā tā°. — 5². B tāsāṃ dārikāni e° °ṃi a°.

6. M aputra tāva yaṃ° °ya dṛishṭā° BM °bahumatā° saputra aputrasmiṃ rāja° BM °kulasmiṃ i°. — 7. B °dārikā jātā | tato adhimā° M °dārakau jātāu tena adhimā° °priyo bha° B °iti | va°. — 8. B °dārakā tapanesu cai° M °dāraka tapanku tailakaṃm upalvaritā te dārakā tatra° B °upalvaritvā te dārakā tatra°. — 9. M °kena tāpanīyena dīpayitvā mu° B °dīpe gaṃ° M °kshiptāḥ taṃ°.

11². M padmāva° °rbhamale mu° BM °khaṃ prakshitaṃ | . — 11³. M °padmāva° jā° maṃ ti | . — 12. M °kāhi iva uddhānakā ga° B °uddhāranakā ga° M °lena praprakshapitvā padmāva° B °ullipitāni | . — 13². BM muñcatha° M °ni kim ete° B °ete ka°. — 13³. B °cchati kiṃ°. — 15¹. M devī° B °jātāni || . — 15². M °āhaṃsuḥ | . — 15³. M °jā te dā° °prajātāḥ pra° BM °yā tena taṃ jāta° B °mātreye khādito ku° M °mātraṃ ye khā°.

17. M °apatyaṃ ti pa° °esho tva° B °ahā | tva° M °nītāḥ tāṃ dṛishṭvāni° B °nītā tā dṛishṭvāni° BM °kto tā°. — 18. B °cinī° °hi taṃ ya° M °hi | taṃ ya°. — 19. M °vāṃ prayya° °vati ca° B °dhiraprakshi°.

रुधिरम्रक्षितेन यादृशी राक्षसी ॥ सो दानि तान्दृष्ट्वा भीतो संजातो ॥ अमा-
त्यानामाह ॥ गच्छथ तां घातयेथ मानुषिका ति कृत्वा एषा मयानीता यदि
एषा पिशाचिनी वा राक्षसी वा न मे ताये कार्यं ॥ सा दानि ततो राजकुलातो
निष्कासिता ॥

5 सा दानि तेषाममात्यानां पृच्छति ॥ कहिं मे नयिष्यथ ॥ ते आहंसुः ॥
राज्ञासि ब्रह्मदत्तेन वध्या ओसृष्टा ॥ सा दानि तेषां अमात्यानां पृच्छति ॥
किं मये राज्ञो ब्रह्मदत्तस्य अपराद्धं येनाहं वध्या ओसृष्टा ॥ ते अमात्या
आहंसुः ॥ त्वया द्वे दारका जनित्वा खादिता ततो राज्ञा पिशाचिनीति
कृत्वा वध्या ओसृष्टा ॥ सा आह ॥ न मे दारका जाता पृच्छथ अन्तःपु-
10 रिकां ता आहंसुः द्वे ते उल्लका जाता ते पि तथैव मेलिता नैव दारकानि
पश्यामि नैव खादामि ॥ ते दानि अमात्याः पण्डिता स्त्रीमायानां शाठ्यानां
चाभिज्ञाः ॥ तेषाममेतदभूषि ॥ इयं पद्मावती राज्ञो ब्रह्मदत्तस्य इष्टा च बहु-
मता च ध्यानं वियति यं एताहि अन्तःपुरिकाहि एषा पद्मावती अजानमानी
अनोकृता भवेय विप्रलब्धा वा ॥ ते दानि अमात्या तां पद्मावतीं पृच्छन्ति ॥
15 कथं सि प्रजाता ति ॥ सा दानि तेषां अमात्यानां तां प्रकृतिं विस्तरेण आचि-
क्षति ॥ ताहि मे अन्तःपुरिकाहि प्रजायमानीये अक्षीणि पट्टकेन बद्धानि नैव
दारकान्पश्यामि नैव खादामि । यं कालं च प्रजाता ततो पृच्छामि तानि अन्तः-
पुरिकानि किं मे जातं ति ताहि दानि मम द्वे उल्लका अल्लीपिता ते जाता
ति ॥ तेषां दानि अमात्यानामेतदभूषि ॥ इयं देवी अन्तःपुरिकाहि ईर्ष्याप्रकृतेन
20 विप्रलब्धा इयं च देवी ब्रह्मदत्तस्य इष्टा च बहुमता च सा पश्चाद्राज्ञा ब्रह्मदत्तो

1[1]. M °sa tāṁ dṛshṭvā°. — 1[2]. B amātyenā° M °tyā āha ‖. — 2. B gacchatha taṁ ghātāyetha mā° M gacchatha taṁ ghātāyetha mā° BM °nushikāni kṛ° M °tvā ekā mayā nītā | yadi yeshā pi °me tāya kāryyaṁ ‖. — 3. M °shkāsitā ‖ B °shkāsitā sā°. — 5[1]. M °teshām amā° B °shām asmākaṁ amā° BM °ti ka°. — 5[2]. M °hiṁ te me na°. — 5[3]. M °āhaṁsuḥ ‖.

6[1]. BM °sa vadhvā o° M °sṛshṭāḥ |. — 6[2]. B °amātyasmātyā° ti kiṁ°. — 7[1]. B °aparāddhaṁ | ye° M °aparāddhaṁ ye° BM °vadhvā o°. — 8. M tvayā dve dā°. — 9[1]. B °ha na°. — 9[2]. M °cchāmi ‖ antaḥpurikā te ā° B °kāni | te ā° M °suḥ ‖ dave te udduka° jā° B °dudve te udvanikā jā° BM °melitvā naiva dā° M °naivaṁ khā° B °khādāmi te°.

11. M °amātyā paṁḍitā strī° °çākyānāṁ cā° B °çāṭhyānāṁ cā° M °jñās teshā°. — 12[1] B °shā iyaṁ°. — 12[2]. B °nthāna vidya° M °dyati ‖ yam etāni antaḥ° B °etāni antaḥ°. — 14. M °tyā nāṁ padmāva° BM °cchati ka°. — 15[2]. BM °nāṁ tāṁ prakṛ°.

16. M °akshiṇi pa° °naivaṁ dārakāṁ paçyāmi naiva ravādāmi | B °dārikān pa°. — 17. M °mi tāni aṁtaḥpu° °ve udduinakā ullayitā te jānāti te° B °ve udvānakā ullapitā | te jānāti te°. — 19[1]. B °hi irshyā° M °ayu dṛshṭā° BM °yakeṇa ca glainānyaṁ°.

इमीये पद्मावतीये बलदेन विप्रतिसारी भवेय शोकेन च मैनात्यं पतेय । तेहि [3.3'] दानि अमात्येहि सा देवी पदुमावती स्वके गृहे गोपिता राज्ञो ब्रह्मदत्तस्य निवेदितं घातिता देवीति ॥ ता दानि देवीयो घातिता पदुमावतीति श्रुत्वा तस्य राज्ञो ब्रह्मदत्तस्य चटुलायन्ति घृतं च परिषिपन्ति सर्षपाणि च अग्नौ प्रक्षिपन्ति चतुर्दिशं च बलिं निष्कासयन्ति शान्तिं च करोन्ति दिष्ट्यासि महाराज 5 जीवन्तो मुक्तो राक्षसीहस्तातो ॥ तं मुहूर्तं राजा स्नातो विलिप्तो निष्पुरुषेण नाटकेन प्रक्रीडितो । तावदन्तःपुरिकायो काचिद्वीणां प्रवादिता काचित्सुघोषकं काचिन्मृदंगं काचिद्वेणुं काचित्प्रनृत्यन्ति काचिद्गायन्ति ॥

अथ खलु भिक्षवो अन्यतरा देवता मातङ्गस्य ऋषिस्य अभिप्रसन्ना वैहायसमन्तरीक्षे स्थिहित्वा राजानं ब्रह्मदत्तमेतदुवाच ॥ दुःश्रुतन्ते महाराज अपरिज्ञातं 10 ते महाराज अविज्ञातन्ते महाराज यो त्वमननुयुञ्जित्वा अपर्यवगाहित्वा अनपराधी पदुमावतीं वध्यामवसिरसि तादृशस्य महाभागस्य ऋषिस्य वचनं न समनुस्मरसि ॥ अथ राज्ञो ब्रह्मदत्तस्यान्तःपुरिका देवताये अन्तरीक्षगताये तं घोषं श्रुत्वा भूयतरं गायन्ति वादेन्ति च यथा राजा ब्रह्मदत्तो एताये देवताये अन्यनीये न शृणेयाति ॥ अथ राजा ब्रह्मदत्तो अन्तःपुरिकां निवारेति आगमेथ 15 तावद्यावच्छृणाम किमेषा देवता अन्तरीक्षगता भणतीति ॥ सा दानि अन्तःपुरिका राज्ञो वचनेन तूष्णीभूता संजाता देवता राज्ञो ब्रह्मदत्तस्याह ॥ दुःश्रुतन्ते महाराज यो त्वमननुयुञ्जित्वा अपर्यवगाहित्वा अनपराधी पदुमावती देवी वध्या वोसिरेसि तादृशस्य महाभागस्य ऋषिस्य संदेशं न समनुस्मरसि ॥ राजा दानि

1. B °taṁ pahitā devīti | M °taṁ pahitāṁ devīti | . — 3. M °ghātitā padmāva ° sya catilāpeti ghṛi° B °sya catillāpeti ghṛi° M °parikshipaṁ sarshapāni ca agnau prakshipeṁti catu ° nishkāsayaṁti || diṭṭhiyāsi mahā° B °ṃhuti ca karoti dṛishṭvāsi mahā° BM °kshasīto ha° B °nāto taṁ°.

6. M muhūrta rā° B °vilupta° BM °nishpurushena ° dito tā°. — 7. B °kaṁ | kācit tupi° M °gaṁ kāci dardaraṁ kācid ve° B °naṁ kācin pra° kācit gāyanti || M °tyaṁti kācit gāyanti || . — 9. BM °tā mamgha° M °sthitvā rā°. — 10. B duçruta° M duçrutaṁ me mahārāja aparijñātan te mahārāja avijñātaṁ te mahārāja yo tvaṁ ananu° B °taṁ te mahārāja abhijñātan te mahārāja yo tvaṁm ananu° BM °hetā anaparādhiṁ padumā(M °dmāva-tiṁ vadhyā° B °smarati | .

13. M °tasyāntaḥpurikāye de° B °purikā de° M °rikshe ga° B °mahyataraṁ° M °gāyaṁti vādyenti ca yathā ° ito ye kāye de°. — 15. M °purikā nisiha ° kim eshya de° B °kshagato ja° M °lpantīti || .

16. B °rema tushṇi° M °jātāḥ de ° syāhuḥ | . — 17. B duçruta° M duçrutaṁ te mahā ° yo tvaṁ ananu° B °yo tvaṁ ananu° M °hitvā anaparādhiṁ padmāvatiṁ deviṁ vadhyā josiresi || tā°. — 19. M °kāye pṛi°.

ञ्या आशयेन प्रभूतं खादनीयभोजनीयं प्रतिजागरित्वा वस्त्राणि च प्रणयप्रणीतानि
मोदकानि वर्णगन्धरसोपेतानि प्रतिजागरित्वा तस्यैव रात्र्यात्ययेन स्वकं निवेशनं
सिक्तसंमृष्टं कारापितं श्रोसक्तपट्टदामकलापं मुक्तपुष्पावकीर्णं विततवितानं भगवतो
महार्हासनप्रज्ञप्तिः कृता यथोपन्नं च भिक्षुसंघस्य ॥

5 अथ खलु भगवां तस्यामेव निवासयित्वा पात्रचीवरमादाय भिक्षुसंघपरिवा-
रितो ऽन्तःपुरं प्रविशति ॥ अथ खलु यशोधरा राहुलमाता नानाप्रकारैर्हि
वस्त्रैर्हि चामरैर्हि चात्मानमलंकृत्वा भगवन्तं परिविशति मोदकेन च भगवन्तं
प्रलोभयति यथैव नाम आर्यपुत्रः अगारमध्यावसेया न च भगवतो चित्तस्था-
न्यथात्वं ॥ अथ भगवां यं कालं भुक्तो धौतपाणिरपनीतपात्रो भिक्षुसंघो च ततः
10 भगवता राजा शुद्धोदनो महाप्रजापती गौतमी यशोधरा च राहुलमाता सप-
रिवारा धर्म्यया कथया . . . . संदर्शयित्वा समादापयित्वा समुत्तेजयित्वा संप्र-
हर्षयित्वा उत्थायासनातो प्रक्रामि ॥

भिक्षू दानि भगवन्तमाहन्सु: ॥ पश्य भगवं कथं यशोधरा सर्वालंकारविभूषिता
आत्मानमलंकृत्वा भगवन्तं परिविशति मोदकेन च भगवन्तं प्रलोभयति न च
15 चित्तस्यान्यथाभावो ॥ भगवानाह ॥ न हि भिक्षवः एतरहिमेव अन्यदापि एषा
यशोधरा सर्वालंकारविभूषिता आत्मानं अलंकृत्वा परिविशति मोदकेन च प्रलो-
भयति अथान्तरे एकशृंगजातकं पुनः कर्तव्यं ॥

भगवाननुत्तरं सम्यक्संबोधिमभिसंबुद्धित्वा तत्रैव बोधिमूले तृणसंस्तरके निषण्णो
पर्यङ्कमभिन्दन्तो प्रीतिसुखेन सप्ताहं आयति ॥ इह मया बोधिद्रुमे अयता प्राप्ता

M °ktamśrishtam° B °rāpitam | 6° M °tam āsaktapaṭṭa ° pam yuktapu° B °chānnaḥ pra°
M °jñapti kritā natopakam° B °tā tatopakam°.

5. M °garan kāya° B °kālasyai° M °ghaparivrito ntaḥpuram praviçati || B °ram pari-
viçati || .

6. M °hulasya nai° B °tmānam alam° M °trā bhagavantam pari° kena ca bhaga-
vantam pralobheti || apye° B °lobhayati | apya° M °putro agā ° seyo na ca°. — 9. B °vām
yan kālam° M °vām yat kālam° BM °bhuktam dhau° B °pir apanītapātra° M °nītapātryo
bhikshusangho ca || tato bhaga ° jāpati gau ° vāre dharma° B °vārā dharmā ka° BM °tha-
yā samda° M °tteyayitvā utthāyāsanāto prakrami bhi° B °krāmi bhi°.

13¹. B bhikshu dā° M bhikshuḥ dānim bhagavantam ā° BM °hamsuḥ || . —
13². M °vam kathan ° lamkārabhū ° trā bhagavantam pari ° gavantam pralobheti || na
ca° BM °nyathābhāvo || . — 15². M na bhikshavo etarhi evam anya° BM °dāpi eṣā yaço°
B yati yo atrā° M °lobheti ca atrāntare°.

18. M atha bha ° ttarā samya ° traiva bodhimule samstarike bhindyanto pri° B °ni-
sharṇṇo paryyamkam abhindanto pri°. — 19. M °drume anavarāgrasya jāti° B °gratām
prāpto saptā° BM °maraṇagrahaṇakāntā(M °kāmtā)rasya° M °paryyamkam kri°.

सप्ताहं पूर्णो संबोधिं बुधित्वा जातिजरामरणगहनकान्तारस्य पर्यन्तं कृतं । इह मया क्लेशमारो भग्नो देवपुत्रमारो भग्नो इह मम अपरिमितमसंख्येयप्रतिष्ठिता प्रणिधि समृद्धा । एकाहं बोधिद्रुमे अनवराग्रस्य . . . . . . .

[सप्ताहपूर्णं संबुद्धो बोधिं बुधित्व] उत्तमां ।
आसन्नातो न उत्थेसि सर्वलोकस्य चेतियो ॥
देवकोटीसहस्राणि गगनस्मिं समागता ।
पुष्पवर्षं [356a] प्रवर्षेन्सुः सप्तरात्रमनूनकं ॥
उत्पलं पदुमं दिव्यं पुण्डरीकं मनोरमं ।
सहस्रपत्रं रुचिरं तत्र देवा प्रवर्षन्ति ॥
मारस्य दुर्मना आसि काष्ठेन लिखते महीं ।
जितो स्मि देवदेवेन शाक्यसिंहेन तायिना ॥
त्रयस्त्रिंशा च यामा च तुषिता ये च निर्मिता ।
परनिर्मिता देवा च कामधातुप्रतिष्ठिता ॥
लोहितं चन्दनं दिव्यं अगुरुं तत्र चम्पकं ।
दिव्या च पुष्पवर्षाणि अन्तरीक्षातो ओकिरे ॥
दिव्यं च रत्नचूर्णं अन्तरीक्षातो ओकिरे ।
अक्षमात्राहि धाराहि बुद्बुदं स्फटी इमं ॥
ब्रह्मकोटीसहस्राणि गगनस्मिं समागता ।
वर्षन्ति सूक्ष्मं चूर्णं हि दिव्यं लोहितचंदनं ॥
भूम्यां देवां उपादाय शुभाभासां स्वयंप्रभां ।

1. M °vinita saṃ°. — 3. M °drume agrahaṃ prāpto saptāhaṃ pūrṇaṃ saṃbodhi buddhitvā uttamo ā° B °grasya uttamā ā°. — 5. BM °nāto (M °nāno) utthesi sarvasya lo° M °cetiyo || B °tiye de°.
6. M °koṭisahasrāṇi gaganasmiṃ samāgatāḥ B °māgatā pu°. — 7. B °ṣetsuḥ | sa° M °ṣetsuḥ sa° trāṃ anunakaṃ || B °kaṃ u°. — 8. M utpalā padu° B °ramāṃ sa°. — 9. B °srapatrāṃ° M °patrā ruci° B °pravarṣetsuḥ | . — 10. M °āsi kaṃṭhena likhitaṃ mahīṃ | B °likhitāṃ mahīṃ | .
11. BM jitosmiṃ deva° M °siṃhasya tāyina || . — 12. B trayastriṃśā° M °yāmāśca tu°. — 13. BM parinirmitāde° M °vāśca kāma° B °tiṣṭhitā || . — 14. M °taṃ caṃda° tha caṃpakaṃ | . — 15. M divyāśca puṣpavarṣaṃ ca aṃtarikṣato ocire || B °ṣpavarṣāṃ anta°.
16. M °ca ratnacūrṇaṃ ca aṃtarikṣa ca ocire || . — 17. M °mātrehi dhārehi bu° B °dhārehi bu° trāṃ sphaṭi° M °sphaṭikaṃ imaṃ || . — 18. M °koṭisahasrāṇi gaganasmiṃ samāgatāḥ || . — 19. B °cūrṇaṃ di° M °ti puṣpacūrṇaṃ hi di° °lacandanaṃ || . — 20. BM bhūmyā devām upā° M °prabhāṃ || .

एषा परंपरा आसि देवताहि परिस्फुटा ॥
छत्रध्वजपताकाहि अन्तरीक्षं परिस्फुटं ।
करोन्ति पूजनां श्रेष्ठां संबुद्धस्य श्रिरीमतो ॥
आभा च विपुला मुक्ता बुद्धक्षेत्रं परिस्फुटं ।
5 भवाग्रलोकधातूयो अग्निशुभ्रा व तिष्ठति ॥
प्रशान्ता निरया आसि बुद्धरश्मिभि सर्वशो ।
प्रीतिभूता च अंगानि सर्वे च सुखिता अभूतु ॥
येषां नैरयिकं दुःखं परिक्षीणं तदनन्तरं ।
निरयेषु अविलाम देवेषु उपपद्यिषु ॥
10 संजीवे कालसूत्रे च तपने च प्रतापने ।
प्रशान्तो रौरवे अग्निर्लोकनाथस्य रश्मिभिः ॥
अवीच्यामथ संघाते प्रत्येकनिरयेषु च ।
प्रशान्तो सर्वशो अग्निर्लोकनाथस्य रश्मिभिः ॥
यावन्ता लोकधातुषु प्रत्येकनिरया अभूतु ।
15 प्रशान्तो सर्वशो अग्निर्लोकनाथस्य रश्मिभिः ॥
ये च तिरश्चानयोनीयं मांसरुधिरभोजना ।
मैत्राय स्फुट बुद्धेन न हिंसन्ति परस्परं ॥
छत्रध्वजपताकाभिः बोधिवृक्षो अलंकृतो ।
कूटागारेहि संछन्नो देवपुत्रेहि निर्मितो ॥
20 खण्डकान्तारका पि च शर्करसिकता पि च ।
समन्ता बोधिमण्डातो हेष्टा भूमी प्रतिष्ठिता ॥

1. B eshâṁ paraṁ° M eshâṁ paraṁparâm âsi de° BM °vatehi pari° B °sphuṭâ |. — 2. BM °rikshe pari° B °sphuṭaṁ |. — 3. M karoṁti jalatâṁ çre° B °nti jalenâṁ çreshṭâṁ maṁbuddhasya çrimato | M °sya ca çrimatâ ||. — 4. B âbhâya vi° BM °pulo mukto bu° B °sphuṭaṁ |. — 5. B °agniṁ çuṁgâ va tishṭetauḥ | M °agniṁ çaṁyâ va ti°.
6. B praçânta ni° M praçaṁta nilayâ âsi buddha°. — 7. B °aṁgânâṁ sa°. — 8. M °nairupikaṁ ° tadaṁtaraṁ |. — 9. B °dyiṭauḥ |. — 10. M °lasutre ° pratâpane || B °pratapane |.
11. B praçânta rau° M praçaṁtâ rau ° agniṁr loka° B °agniṁ loka°. — 12. M °ghâṭe pra°. — 13. M praçaṁtâ sa° B °agni loka°. — 14. M yâvaṁto lo° B yâvatâ lo° M °dhâtûshṭhu pra° B °abhûḥ |. — 15. M praçaṁto sa° B °agni loka°.
16. M °maruvirabhojanâḥ |. — 17. BM maitryâya° B °ddhena na hisanti° M °hiṁsaṁti pa°. — 18. M °kâmiḥ yodhivṛkshe alaṁkṛtâ ||. — 19. B kṛtâ° M °mitâḥ ||. — 20. B khâṇḍakakaṇḍarakâ pi ca çarkaraçikatâ° M khâṇḍakakaṇṭhakâbhiç ca çarkarâsikṛtâ pi ca |.
21. M samaṁtâ bo°.

ततोमुखा संस्थिहंसु येन बोधि महर्षिणो ॥
ये चाप्याभरणा दिव्या विशिष्टा रत्नामया ।
आवद्धा आसि देवानां सर्वे ततोमुखा अभू ॥
नागानां अथ यक्षाणां पिशाचराक्षसान च ।
5 अभू आभरणा सर्वे येन बोधि निरिंगिता ॥
देवानामथ नागानां यक्षाणां राक्षसान च ।
ततोमुखा विमानाभू येन बोधि महर्षिणो ॥
नूपुरा वलया चैव ये च वा पारिहारका ।
बोधिप्राप्तस्य बुद्धस्य येन बोधि निरिङ्गिता ॥
10 वर्णांजिता च निष्कानि कण्ठे हारा च शोभना ।
आवद्धका मनुष्याणां येन बोधि निरिङ्गिता ॥
मुक्ताहारा च आवद्धा चित्रा च मणिकुण्डला ।
अंगुष्ठिका मुद्रिका च येन बोधि निरिंगिता ॥
यावन्ति बुद्धक्षेत्रस्मिं सत्वधातू अचिन्तिया ।
15 जानन्ता च अजानन्ता येन बोधि निरिंगिता ॥
वाता च शीतला वाये मंजुगन्धा मनोरमा ।
समन्ता बोधिक्षेत्रस्मिं बोधिप्राप्तस्य तायिनो ॥
एकपुत्रस्मिं यं प्रेमं शुश्रूषा च प्रतिष्ठिता ।
मातापितॄणां इष्टस्मिं एवं आसीदनन्तरं ॥
20 यावन्ति बुद्धक्षेत्रस्मिं देवा नागा च मानुषा ।
असुरा च किन्नरा यक्षा सर्वे पश्यन्ति नायकं ॥

1. BM *mukharo saṁsthihensu (B *sthahaṁsi) ye* M *rshiṇâ ‖. — 2. B *çishṭo rata*, M *çishṭhâ ratanâyayâ ‖. — 3. M omet les lignes 3-10. B *nâṁ gâ sarve tena mukhâ abhâshi |. — 4. B *piçâcârâkshasânâṁ |. — 5. B câbharaṇâ * dhi liniṁriṁgitâ |.
6. B *kshânâṁ râkshasânâṁ |. — 7. B *rshiṇâ |. — 8. B *varayâ*. — 9. B *nilîṅgitâ |. — 10. B âcaraṁjano ca hastâ ca kaṁṭha hastâ ca çocanâ |.
11. M *manushyâ * nilîṁgitâ | B *nilîṅgitâ |. — 12. BM muktihâ* M *hârâçca â* ṇikuṁḍalâ |. — 13. BM aṁgushṭikâ bhadri* M *bodhiṁ nilaṁgitâḥ ‖ B *nilîṁgitâ |. — 14. M yâcaṁta buddhakshetresmi satvadhâtu aciṁtiyâ |. — 15. M jânaṁtâ ca ajânaṁtâ ye * nilîṁgitâḥ ‖ B *nilîṁgitâ |.
16. B vâtâya çîtala vâye maṁjâga* M *maṁjugaṁdhâ ma*. — 17. M samaṁtâ buddhakshetresmiṁ bo* B *smiṁ buddhaprâ* M *yinâ ‖. — 18. M *putresmiṁ yaṁ premaṁ çruçushâ* B *mnaṁ çruçushâ*. — 19. B pitṛṇâṁ ishṭasya e * âsica tada* M pitṛṇâ ishṭasya e * âsnaṁ tadanaṁtaraṁ ‖. — 20. M yâcaṁti buddhakshetresmiṁ * gâçca mânushâḥ ‖ B *gâ manushyâ |.
21. M *paçyaṁti tâyinâ ‖.

येहि च दृष्टो संबुद्धो बोधिमण्डे प्रतिष्ठितः ।
पूजितश्च महावीरो ते श्रुत्वा तुष्ट पण्डिता ॥
शीलस्कन्धेन अच्छिद्रा ये च भिक्षू प्रतिष्ठिता ।
तेषां श्रुत्वा इदं सूत्रं महाहर्षं जनेष्यति ॥
5 भद्रकर्षान्तिसौरभ्यसंपन्ना अदीनमानसा ।
अर्थिका बुद्धज्ञानेन तेषां तुष्टिर्भविष्यति ॥
ये हि आराधिता सत्त्वा मोचेष्यामि उपद्रुता ।
बुद्धित्वमुत्तमां बोधिं तेषां तुष्टिर्भविष्यति ॥
येहि ते पुरिमा बुद्धा सत्कृता द्विपदोत्तमा ।
10 ते इदं सूत्रं श्रुत्वान तेषां तुष्टिर्भविष्यति ॥
हर्षिता येहि ते सत्त्वा अन्नपानेन तर्पिता ।
ते पीदं सूत्रं श्रुत्वान बुद्धे काहिन्ति गौरवं ॥
येहि ते अधना सत्त्वा धनेन अभिच्छादिता ।
ते इदं श्रुत्वान सूत्रं बुद्धे काहिन्ति गौरवं ॥
15 येहि च पूर्वबुद्धानां चैतिया मापिता शुभा ।
उद्दिश्य वरप्रासादा ते खु भविष्यन्ति प्रीणिता ॥
येहि मनुष्यन्तो सद्धर्मो लोकनाथान धारितो ।
त्यक्त्वा लाभसत्कारं ते खु भेष्यन्ति प्रीणिताः ॥
ये ते असंस्कृतायुध दण्डकर्मेहि वर्जिता ।
20 उरसा लोकनाथस्य ते खु भेष्यन्ति हर्षिता ॥

1. M ehi ca dṛ° B yehi ca tehi saṁ° M °shṭhitā ‖. — 2. BM pūjitāçca° M °hāciro° tushṭimaṁḍitāḥ |. — 3. B sīla° M sīlaskandhena° BM °bhikshu pra° M °shṭhitāḥ |. — 4. M °daṁ sutraṁ° BM °shyasi |. — 5. B °drakaṁ kaba° M °ka kāhāṁti° mādīnamā° B °dīnamanasā naca |.

6. M akā bu°. — 7. M ye hi açrāhitā sarva mo°. — 8. B °māṁ buddhi te°. — 9. BM tehi° B °purimāṁ bu° M °purimāṁ loke buddho satkṛto dvi° °ttamāṁ ‖. — 10. M °daṁ sutraṁ çrutvāna tushṭā bhavi°.

11. BM °hi te kṛpaṇā satvā° B °nnapānu tarppitā |. — 12. BM °daṁ çrutvā su- (M °sutraṁ su° M °buddho kāhiṁti gau°. — 13. BM ye pi te° nena te bhi° — 14. M °na sutraṁ buddho kāhiṁti°. — 15. M ye pi te pūrva ca buddhānāṁ yo pi yānarthāni çubhā ‖ B °cetiyāni pārthi satāā |.

16. B uddhiddhā cetaprāsādā te khu bha° M udvi — raçprasādā tena prāsādā te bhavishyaṁti prīṇitā ‖. — 17. B °lukyanto° M °jyate saddharmā lo° BM °nāthena dhārita (M °ritā) |. — 18. M °tvā lābhasatkāra teshu bheshyaṁti prīṇitāḥ ‖ B °tkāreṇa teshu bhe°. — 19. BM °asatkṛtā paççādaṇḍa° hi tarjitā |. — 20. B °teshu bhe° M °teshu bheshyaṁti°.

ये ते मैत्रेयं संबुद्धं पश्चिला द्विपदोत्तमं ।
काहिन्ति विपुलां पूजां तेषां हर्षो भविष्यति ॥
ये ते सिंहं महानागं पश्चिला लोकचेतियं ।
काहिन्ति विपुलां पूजां तेषां हर्षो भविष्यति ॥
तिष्यस्य लोकनाथस्य ये करिष्यन्ति पूजनां ।  5
अर्थिका बुद्धज्ञानेन तेषां हर्षो भविष्यति ॥
प्रद्योतस्य च बुद्धस्य ये करिष्यन्ति पूजनां ।
अर्थिका बुद्धज्ञानेन तेषां हर्षो भविष्यति ॥
ज्यो[351b]तीषरं च ये बुद्धं पश्चिला अपराजितं ।
महती पूजां काहिन्ति तेषां हर्षो भविष्यति ॥  10
मुनेश्च लोकप्रद्योतं दृष्ट्वा ये सत्कारिष्यति ।
अर्चमानाय पूजाय तेषां हर्षो भविष्यति ॥
द्वौ बुद्धौ कुसुमनाम्नौ लोकनाथौ तथागतौ ।
ये दृष्ट्वा सत्कारिष्यन्ति तेषां हर्षो भविष्यति ॥
मेरुं च द्विपदश्रेष्ठं संबुद्धं वदतां वरं ।  15
ये दृष्ट्वा सत्कारिष्यन्ति तेषां हर्षो भविष्यति ॥
पुष्यं ये चाग्रसंबुद्धं पश्चिला द्विपदोत्तमं ।
काहिन्ति परमां पूजां तेषां हर्षो भविष्यति ॥
चतुर्णां च नरेन्द्राणां ये संघं सत्कारिष्यति ।
इमस्मिं भद्रकल्पस्मिं ते उदग्रा भविष्यति ॥  20
ये दृष्ट्वा चामसत्कारे जिह्वाविज्ञाननिश्रिता ।
बह्विच्छा ते सुगितलाभ तेषां चामो भविष्यति ॥

1. M *maitrañya saṁbodhiṁ pa* B *maitreya saṁ*. — 2. M kāhiṁti vi*. — 3. M ete siṁha mahānāgā pa* B ye te siṁha ma* cetiyā |. — 4. M kāhiṁti vi*. — 5. B *ṣya lokanā* M *riṣyaṁti pūjanaṁ |.
6. M *ti | ca (L. 11). — 7. M omet les lignes 7 et 8. B pratyotasya bu*. — 9. Dans M les lignes 9 et 10 sont transposées entre les lignes 14 et 15. M *tīsaraṁ ca*. —
10. B *pūjanāṁ kā* M *pūjā kāhiṁti te*.
11. M *netralokapradyoto satpūjitvā satka* B *dyota dṛishtvā ca satka*. — 13. M *kusuma nāmau* B *nāmo lo*. — 14. M *riṣyaṁti te*. — 15. B *preshṭha saṁ*.
16. M *riṣyaṁti te*. — 17. M pushpaṁ cā tatra saṁ* B pushpaṁ cāgrasaṁ* M *devatamaṁ |. — 18. M kāhiṁti pa*. — 19. M *narendrā* B *ndrāṇāṁ ye* BM *ye saṁghaṁ satka*. — 20. M *kalpasmiṁ*.
21. BM *ākāsa(B *ra)jihvāsi*. — 22. B bahvecchā te gru* M bahvecchā tena gṛutitvā te*.

एवं विरजा अनन्तगुणबोधिं ।
ये च व्रतं चरन्ति अप्रमत्ता
जिनवरज्ञान स्पृशित्वा तुष्ट भोन्ति ॥

अथ खलु भगवां सप्ताहस्यात्ययेन सिंहासनातो उत्थाय बोधिद्रुमं नागविलो-
कितेन विलोकयन्तो अनिमिषाये दृष्टीये प्रीतिसुखेन द्वितीयं सप्ताहं अनाहारो 5
अस्थासि बोधिद्रुमं अनिमिषाये दृष्टीये निरीक्षन्तो इह मम बोधिद्रुमे अनवरा-
ग्रस्य जातिजरामरण[354a]संसारगहनकान्तारस्य पर्यन्तं कृतं इह मम क्लेशमारो
भग्नो मृत्युमारो भग्नो स्कन्धमारो भग्नो देवपुत्रमारो भग्नो इह ममापरिमितमसं-
ख्येयप्रणिहिता प्रणिधि समृद्धा इहाहं बोधिद्रुमे लोके अग्रतां प्राप्तः लोके श्रेष्ठतां
प्राप्तो सत्वसारतां प्राप्तः ॥ 10
भगवां सप्ताहं प्रीतिसुखेन बोधिद्रुमं अनिमिषाये दृष्टीये निध्यायित्वा तृतीयं
सप्ताहं प्रीतिसुखेन दीर्घं चंक्रमं चंक्रमे ॥ तेन खलु पुनः समयेन मारो पापीमां
भगवतो अविदूरे संनिषण्णो अभूषि दुःखी दुर्मनो विप्रतिसारी काष्ठेन भूमिं
विलिखन्तो श्रमणो मे गौतमो विषयातो उपातिवृत्तो श्रमणो मे गौतमो विष-
यातो उपातिवृत्तो ति ॥ अथ खलु तन्ती च मारधीता अरती च मारधीता 15
येन मारो पापीमांस्तेनोपसंक्रमित्वा मारं पापीमं गाथाये अध्यभाषति ॥

कामं त्वं दुर्मनो तात पुरुषं आनयाम्यहं ।
रागपाशेहि बंधित्वा अरण्यादिव कुंजरं ।
प्रलम्भित्वान आनेमि वशिको ते भविष्यति ॥

2. BM °taṃ carati(B °ti |) a° M °çrutvā tuṣṭo bhonti ||. — 4. M °siṃhāsanāto utthā° M °kayanto° B °yanto animiṣā° BM °prītisukhaṃ dvi° M °sthāsi || bo° sthye nirīkṣyanto iya ma° BM °saṃsāragrahaṇakāntā(M °kāṃ)tā° M °ryantaṃ° BM °kṛtaṃ | iha° B °çamāro bhagnā mṛ° M °çamāro bhagno devaputramāro bhagno || iha mama saṃkhye ° gratāṃ prāpto lokaṃ çre° B °çreṣṭhatāṃ prāpto° M °shatāṃ prāptāṃ ||.
11. M bhagavān saptā ° sthāya dṛ°. — 12. M °kha punaḥ ° to abhidūraṃ saṃniṣa-ṇṇo abhū° B °ṣu | duḥkhaṃ durma° M °ramaṇā vipra ° ri kaṣṭhena bhū ° BM °li-khanto çramaṇā me gautta(M °khanto çravaṇo gautamo vi ° çramaṇo me(M °çrava-ṇo) gautamo° M °upātivṛttāti ||. — 15. M atha taṃci ca māradhītare aparati° B °tri ca māradhītā aparati° M °ṇā māro pāpimāṃ gāthā adhya° B °raṃ pāpimaṃ gā°.
17. M kāma tvaṃ° B kāma tva du° B °tāta yadi puruṣo ānayāmasiṃ | M puruṣo āna°. — 18. M pāçapā° B °kuñjalaṃ pra°. — 19. M prabandhitvāna ānema vaçika° B °ānema vaçikto bha°.

अथ खलु मारो पापीमां धीतरो गाथाये प्रत्यभाषति ॥

अरहां सुगतो लोके न रागेण सुवानयो ।
विषयो मे अतिक्रान्तो तस्माच्छोचाम्यहं भृशं ॥

अथ खलु ता मारधीतरो पितुर्मारस्य वचनं अकरित्वा येन भगवांस्तेनोपसं-
5 क्रमित्वा भगवन्तं चंक्रमन्तमनुचंक्रमेन्सु । पादानि भगवन्परिचरेम्ह पादानि सुगत
परिचरेम्ह ॥ भगवां ता न चित्रीकारये यथापीदं अनुत्तरे उपधिसंक्षये सम्यक्सु-
विमुक्तचित्तो ॥ अथ ता मारधीतरो एकान्तमुपसंक्रम्य मन्त्रं मन्त्रयेन्सु उच्चा-
वचं पुरुषाणां छन्दो उच्चावचं पुरुषाणां छन्दः यं नूनं वयं सय्यथापि नाम पंचद-
शवर्षदेशिका वा षोडशवर्षदेशिका वा एवंरूपा एवंरूपाणां एकशतं एकशतं आत्मा
10 अभिनिर्मिणित्वा येन श्रमणो गौतमस्तेनोपसंक्रमित्वा श्रमणं गौतमं चंक्रमन्तमनु-
चंक्रमेन्सु । पादानि भगवं परिचरेम्ह पादां ते सुगत परिचरेम्ह । न च तानं
भगवां चित्रीकारये यथापीदं अनुत्तरे उपधिसंक्षये सम्यक्सुविमुक्तचित्तो ॥ अथ
खलु ता मारधीतरो एकमन्तमुपसंक्रम्य मन्त्रं मन्त्रयेन्सु उच्चावचं पुरुषाणां छन्दो
उच्चावचं पुरु[355a]षाणां छंदो यं नूनं वयं सय्यथापि नाम एकप्रसूता वा द्विप्र-
15 सूता वा एवंरूपा एवंरूपाणां एकशतं एकशतं निर्मिणित्वा येन श्रमणो गौतम-

2. M °gena sa ānaye° B °ṇa sa āneye vi°. — 3. M °tikrānto ta° B °nto | ta °cāmahaṃ°. — 4. M °lu tāṃ māra° B °tān māra° M °yena bhagavāṃstena° BM °tvā bhagavantaṃ(M °taḥ caṃ)kramaṃ(B °maṃ)taṃ caṃkramatoḥ |. — 5. M pādāṃ te bhagavan paricaraṃha yāda pādaṃ na su° B °n paricaraṃhe pāha pādan te su° M °ribaraca bha° B °haṃ bha°.

6. M bhavan tāṃ na citrikāreye ya° B °vān nānaṃ citrikāleye ya° BM °thādipaṃ anu° M °kṣhayaṃ sa° B °kṣaye saṃmyakmuri°. — 7. BM atha tāṃ māradhi° M °ro ekāntam upasaṃkramā maṃtrā maṃtrayetuḥ uccāvaca purusho echaṃde uccāvanaṃ purushāṇāṃ echaṃda yaṃ nū° B °ntrayetuḥ uccāvaca purusha echande uccāvaca pu° ndaḥ ayaṃ nū° M °yaṃ ‖ nayyathīdaṃ nā° BM °paṃcadaçavarshaṃ deçikā vā sho° B °varsha de° M °ṇāṃ ekaçatam ekaçataṃ ṛddhyā abhinirmitvā yena çramaṇo gautamo teno° B °çataṃ ṛddhyā abhi° ṇo gauttamas te° M °mitvā çramaṇaṃ gau° B °naṃ gauttamaṃ° M °kramantam anucaṃkrameyaṃ B °ntam aṇucaṃkrameye |.

11¹. M pādāṃ te bhagavan paricaremhe ‖ B °vaṃ paricarehma pādāṃ ° rehe na°. — 11². M °gavān citrikareyaṃ | ya° B °vāṃ citrikaraye | ya° BM °ttareṃ u° M °pabhisaṃ° kasuvipukraviçaḥ ‖. — 12. M °lu tāṃ māradhi° B °lu tān māradhi° M °kamaṃtam u° mya maṃtro maṃtraṃyetuḥ ‖ uccāvaca purushāṇāṃ echaṃda yaṃ nūnaṃ vayaṃ sayya° B °ntrayetuḥ uccāvacaṃ puruṣāṃ echando | uccāvaca pu° nānaṃ vayaṃ sayya° M °nāma ekaprasutā vā dviprasutā vā evaṃ ° rūpāṇāṃ ekaçatam ekaçatābhiḥ nirmi° yena çramaṇaṃ gautamas tenopa° B °ṇāṃ ekaḥ çataṃ ekaḥ çataṃ sa nirmi ° ṇo gauttamo teno° M °tvā çramaṇa gautamaṃ caṃkramantam anu° BM °mentuḥ |.

कथंध्यायी बहुली कामसंज्ञा
परिबाहिरो भवति अलब्धगाधा ॥

अथ खलु भगवां तन्त्रीं मारधीतरं गाथाये प्रत्यभाषति ॥

अज्ञाय धर्मं अवितर्कध्यायी
नो रज्यते नो स्मरतीह थीनं ।
एवंविहारी बहुलीह भिक्षु
पंचोघतीर्णो तरतीह षष्ठं ॥
प्रश्रब्धकायो सुविमुक्तचित्तो
स्मृतिमानकोप्यो अपनीतमानो ।
एवंध्यायी बहुली कामसंज्ञा
परिबाहिरो भवति अलब्धगाधा ॥

अथ खलु अरती मारधीता भगवन्तं गाथाये अध्यभाषति ॥

[353a] शोकाभितुन्नो च वनस्मिं ध्यायसि
वित्ताय जीवं अभिप्रार्थयन्तो ।
ग्रामाय ग्राम्या न करोषि साख्यं
कस्माज्जने न करोषि साख्यं ॥

अथ खलु भगवां अरतीं मारधीतरं गाथाये अध्यभाषे ॥

शोकस्य मूलं परिखन्य सर्वं
सर्वं प्रहाय भवलोभजल्पं ।

1. B °hulāṁ kā° M °li kāyasaṁ° B °paribāhiro bha° M °parivāro bhavaṁti a° BM °gādhaṁ ‖. — 3. B °vāṁ mantria māra° M °vāṁ taṁtri mā° taraṁ gāthāya pra°. — 4. BM anyāya dharmaṁ avita(M °tarkaṁ)kāyaṁ dhyāyino rājyatino sarutina thinaṁ(M °tina thīnaṁ) ‖.
6. M °lha vihāriha bhikṣuḥ paṁcāhati° B °cohati°. — 8. M °pyo aparetvamāno ‖ B °pyo apareptkamāno ‖. — 10. BM °hulāṁ kā° °vibāhiro bha° B °gāho ‖ M °gāḍha ‖.
12. B °lu alati° M °gavaṁtaṁ gā° B °ti so°. — 13. M çokābhitunno vacana° B sokābhitunḍo vacana° cittā ca ... jīvaṁ abhi° M °cittāva jīvaṁ ca abhiprārthayaṁto. — 15. BM °grāmyā(B °mya) na karomi saṁkhyāṁ kasmā° comi saṁkhyāṁ ‖.
17. B °lu arati māradhitā bhagavantaṁ gā° M °dhitaraṁ gā° bhāṣati ‖. — 18. BM °mūlaṁ pali(M °mūlā parikhaniyāṁ na sarve(M °rveṇa) sarvāṁ pra° lobhajalpaṁ(M °lpaṁ ‖) a°.

सो जितं मूर्छित्वा प्रपतिष्यद्दा उष्णं वास्य शोणितं मुखतो आगच्छे तेनैव च आबाधेन कालं अकरिष्यत् चित्तक्षयं वा प्रापुणे श्रमणो पुनर् तात गौतमो अर्हो विगतरागो विगतदोषो विगतमोहो अभिभूय भूतो ॥

अथ मारो पापीमां येन भगवांस्तेनोपसंक्रमित्वा एकान्ते अस्थासि । एकान्तस्थितो मारो पापीमां भगवन्तं गाथाये अध्यभाषे ॥

इहागता हर्षयन्ती तन्त्री च अरती रती ।
ता प्रणुदे महावीरो तूलं भ्रान्तं व मारुतं ॥

इत्युक्त्वा च मारो पापीमां दुःखी दुर्मना विप्रतिसारी तत्रैवान्तरहाये ॥

यदा भगवां प्रवृत्तप्रवरधर्मचक्रो भिक्षू भगवन्तमाहंसुः ॥ कथं भगवं मारधीतरो भगवन्तमुपसंक्रान्ता अवतारार्थी अवतारं गवेषी अलभंता च अवतारं निर्विद्य प्रत्यवक्रान्ता ॥ भ[353b]गवानाह ॥ न भिक्षवः एतरहिमेव एता मारधीतरो मम उपसंक्रान्ता अवतारार्थी अवतारं गवेषी अलभंता च अवतारं निर्विद्य प्रत्यवक्रान्ता । अन्यदापि एते उपसंक्रान्ता मम अवतारार्थी अवतारं गवेषी अलभंता च अवतारं निर्विद्य प्रत्यवक्रान्ता ॥ भिक्षू आहंसुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥

भूतपूर्वं भिक्षवः अतीतमध्वानं नगरे वाराणसी काशिजनपदे धर्मलब्धो नाम वाणिजो अभूषि ॥ स समुद्रयात्रिको सार्थवाहो महासमुद्रमवतरति सिद्धयानपात्रो च आगच्छति ॥ तस्य ततो वाराणसीतो पंचमात्रा वाणिजशता उपसं-

na sa° M °çyishya so jitaṁ murcchi° B °çyiṣya so jidaṁ mū° BM °patishyaṁ vā u° M °shṇaṁ vā sravaçoṇita mu° BM °karishyaṁ citta(M °cita)kshayaṁ(B °kshapaṁ) vā° M °prâpuṇa çravaṇo punas tâta gau° B °bhibhûya abhibhûto ‖ .

4². M °gavâṁ teno °ekâṁte a°. — 5². M ekâṁtasthi° B °mâra pâpi° M °gavaṁtaṁ gâ°.

6. M °gato harshayaṁtî taṁtrî ca a° B °arati rati ca°. — 7. B ca puṇu ° vîra tulâṁ bhrâtasvamâ° M ca pramude ca mahâvira mulâṁ bhrâṁtasvamârutam a°. — 8. B itthaṁ catvâra mâro° M itthaṁ catvâra mâro° B °ri tantraivâ° M °ri tatraivâṁtarahâya ‖ . — 9¹. M athâ bhagavâṁ °rmacakraḥ ‖ bhikshur bhagavaṁtam âhatsuḥ ‖ B °bhikshu bha°. — 9². M katham bhagavan mâradhi ° gavaṁtam upasaṁkrâṁto avatârârthî avatâraṁ gaveshi alabhaṁtâ ca târam ni° B °saṁkrânto ‖ ava° M °tyavakrâṁto ‖ .

11². B °vaḥ etarahimim eva etân mâradhi° M °vaḥ etarhi saha me tâṁ mâradhitaro bhagavaṁtam upasaṁkrâṁtâ avatârârthi a ° veshi alabhaṁtâ ca târaṁ ni° B °saṁkrâtâ ‖ avatârâ ° tyakrâtâ ‖ M °tyakrâṁtâ ‖ . — 13. M °pi upasaṁkrâṁtâ mamâvatârârthi ° veshi nirvi ° vakrâṁtâ ‖ . — 14¹. B bhikshu â° M bhikshu âhatsuḥ. — 14². M °van bhaga°. — 15². M °dâ bhi° BM °vo bhû°.

16. M °kâçija° BM °nâma vaṇi° M °bhûshiḥ. — 17. M samudrajâ° B °rati ‖ si° BM °cchati ta°. — 18. M °nasito paṁ ° saṁkrâṁtâ vayam api ° shyâma ‖ .

कान्ता वयं पि त्वयैव सार्धं महासमुद्रमवतरिष्यामः ॥ धर्मलब्धो आह ॥ न
यूयं शक्यास्तेन मार्गेण गन्तुं येनाहं गच्छामि ॥ अहं राक्षसीद्वीपस्य मध्येन गच्छा-
मि । ताओ च राक्षसीयो वाणिजानि उपायशतेहि लोभेन्ति । तत्र बहूनि
वाणिजशतानि राक्षसीहि लोभिता अनयव्यसनमापद्यन्ति । न शक्यं युष्माभिः
मया समानं गन्तुं ॥ सो दानि धर्मलब्धो सार्थवाहो तेषां पंचानां वाणिजशतानां 5
न करोत्यवकाशं । मा तत्र राक्षसीहि लोभिता अनयव्यसनमापद्येय ॥ ते दानि
पंच वाणिजशतानि संनिपतित्वा आहंसुः ॥ अयं धर्मलब्धो वाणिजको क्षेमेन
मार्गेण महासमुद्रं गच्छति क्षेमेन गच्छति क्षेमेनागच्छति लघुं चागच्छति सिद्धपात्रो
च आगच्छति । अस्माकं च न किंचिदवकाशं करोति गमनाय । भवन्तो यादृ-
शको एषो धर्मलब्धो वाणिजको पुण्यवन्तो पुण्यं संगृह्णाति तादृशकं यूयं पि संगृ- 10
ह्णथ यं वेलं एष इतो वाराणसीतो प्रतिष्ठति तं वेलं वयं पि प्रस्थास्यामः ॥ तेहि
सर्वेहि यादृशं धर्मलब्धो पुण्यं संगृह्णाति तादृशं तेहि पि पंचहि वाणिजशतेहि पुण्यं
संगृहीतं यत्र काले च धर्मलब्धो वाणिजको समुद्रं प्रस्थितो तत्र काले ते पि पंच
वाणिजशता संप्रस्थिता धर्मलब्धेन सार्थवाहेन सार्धं गच्छन्ति ॥ ते कालेन तं देशं
प्राप्ता यत्र ताओ राक्ष[354ᵃ]सीयो ततो धर्मलब्धेन सार्थवाहेन सर्वे ते पंच 15
वाणिजशता शब्दापियान उच्यन्ति ॥ भवन्तो इमे सर्वे पंच वाणिजकशता मया
सार्धं वाराणसीतो संप्रस्थिता इमं च तं राक्षसीभवनं अस्माभिरनुप्रापुणितव्यं ।
ताओ च युष्माकं राक्षसीयो बहुप्रकारं प्रलोभयिष्यन्ति अन्या रूपेहि प्रलोभयि-

1². M °çaktāḥ tena mārgeṇa gamituṁ ye° B °ntuṁ | ye°. — 3¹. M °nijāti u° lobhaṁ° BM °tā [illegible] || . — 3². B °bahuni vāṇijaçatani° sīhi pañca vaṇijahi lo° M °sīhi lohitā° BM °tā [illegible] siddhayānapātra(B °tro) ca ā(M °ā)gacchati lahitā ana(M °naya)vya° M °dyanti na° B °nti na ça°. — 4. M °naṁ gamituṁ || . — 5. M so dāni dha° B °çatāni ca karo°.
6¹. M °kāsaṁhi° B °lohitā° M °nayavya° B °m āpyatha || . — 6². M tadā paṁ° hatanti || .
7. B °siddhayātro° M °siddhayānapātrāto ā°. — 9¹. M °d avakāçaṁ ka° BM °ahya bha°. — 9². B bhagavanto | yā° M bhavanto yā° ayavanto pu° BM °ayaṁ saṁgṛhṇāti (M °ti || ) tādṛçaṁ(B °çakaṁ) yūyaṁ pi saṁgṛhṇatha° M °eṣo i° BM °sito pratyasthāsyāmaḥ(M °shyaṁ || ) te°.
11. M °labdhaṁ pu° BM °saṁgṛhṇāti | (B °hnāti) tā° M °çaṁ tehi puṇyaṁ saṁ-gṛhṇantīti tādṛçaṁ tehi pi pañcahi vāṇijakaçatehi pu° B °çaṁ tehiṁ pi paṁ° BM °yatra kālaṁ ca dharma° M °druṁ prasthitaḥ | tatra kālaṁ tehi pañcahi vāṇijaçatāni saṁpra-sthitāni || dha° B °tatra kālaṁ tehi pañcahi vāṇi° M °gacchantī || B °nti yaṁ°. —
14. B °siyo | tato° M °siyo tataḥ dha° bauddhyantī || B °nti bha°.
16. M bhavanto ime° sīhā saṁprasthitā || imaṁ° B °asmābhir ça anu° M °puṇitavyaṁ tā°. — 18. B °naṁ pralobhayiṣyanti | anyā rū° M °naṁ pralobhayiṣyantī || anyo rūpāhi

यन्ति अन्या शब्देहि अन्या गन्धेहि अन्या रसेहि अन्या स्पर्शेहि तत्र मार्गे विवि-
धानि नानाप्रकाराणि कामकल्याणानि अभिनिर्मिणिष्यन्ति आपणां च मार्गेषु
प्रसारितं अभिनिर्मिणिष्यन्ति । यत्र तु सो कोचित्कामकल्याणं तत्र न पतिष्यथ ।
तत्र युष्माभिर्न केनचित्क्षोभं कर्तव्यं न केनचित्किंचिद्गृहीतव्यं न केनचित्किंचित्प्रार्थि-
5 तव्यं । वृक्षसहस्राणि नानाप्रकाराणि पुष्पफलोपेतानि अभिनिर्मिणिष्यन्ति मदनपु-
ष्पेहि च मदनफलेहि च भरितानि मूलतो उपादाय यावत्पुष्पं पत्रफलभारभरिता-
नि पुष्पं वा फलं वा न आनयितव्यं । पुष्करिणीयो च नानाप्रकाराणि अच्छानि
शुभानि शीतलजलानि सुवर्णवालिकासंस्तृतानि उत्पलपद्मकुमुदपुण्डरीकसौग-
न्धिकसंछन्नानि सुखोपतीर्थानि अभिनिर्मिणिष्यन्ति । तत्र भवन्तेहि न केनचिद्-
10 दीपितव्यं न च ततो केनचित्पुष्करिणीहि उदकं वा पद्मं वा उत्पलं वा पुण्डरीकं
वा बिसमृणालं वा खादयितव्यं ॥ अन्यानि च नानाप्रकाराणि रत्नरतनानि
अभिनिर्मिणिष्यन्ति । तत्र च युष्माभिर्न केनचित्कहिंचिल्लोभो उत्पादयितव्यः ।
यो युष्माकं तत्र लोभमुत्पादयिष्यति सो न भूयो जंबुद्वीपं गमिष्यति । तत्रैव
वनयातो व्यसनमापद्यिष्यति । यो च ततो राक्षसीभवनातो सर्वतो निरपेक्षो
15 अभिनिष्क्रमिष्यति सो सिद्धयात्रो स्वस्तिना पुनः आगतो स्वदेशं गमिष्यति ॥

पुर्व समुद्रामिलाष जम्बुद्वीपातो वाणिजा ।
महासमुद्रं प्रस्थिहिंसुः यं धनरतनाकरं ॥

pralobhayishyaṁti || anyā çabdehi anyā gaṁdhehi || anyā rase° B °yishyanti | anyā ça° M °ṇi kāmakalāṇāni abhinirmiṇishyaṁti || ā° B °ṇāni abhinirminishyanti ā° M °ṇishyaṁti | .

3. B yatra na so ko° M yatra na so kvacit kāmakalāṇaṁ ta° B °lyāṇāyaṁ ta°. — 4. BM °kenacid gṛi° M °hītavyaṁ na kenaci prāçi° B °kiṁcin prāçi°. — 5. M °kāraṇi āyushpa° °ṇishyaṁti || yatra madanapushpe° B °shyanti | madanapushpe° M °tāni mulāto upādāya yāvatpatraṁpushpaṁ phala° B °pushpaṁ patraṁ phala°.

7. M °ṇīye ca° BM °rāṇi āgacchati çu° M °çitalāni ca suvarṇavālukāsaṁstṛināni utpalapadmaku° °saugaṁdhikasaṁ° °ṇishyaṁti | . — 9. M °ca tataḥ kenaci pushkari° BM °bisamṛiṇālaṁ vā sodāyitavyā | .

11. M °tanāni ca abhi°. — 12. B tatra vaḥ yushmābhir na ke° M tatra va yushmābhiḥ na kenacit karhicillobho utpādayishyati | so na° (l. 13) B °hiṁcillābho u° °vyaḥ yo°. — 13¹. B °lobha utpādayishyati | so° BM °dvīpe ga° M °mishyaṁti | . — 13². M tatraivānapāto° B °traiva napāto° °padyeshyanti | M °shyati | . — 14. M °bhavanānāṁ sarva° B °sarvato° M °peksha abhi° B °peksho abhikramishyati | so siddhayātro° M °ddhayānapātro° °punaḥ svade°.

16. BM °netvā ja° M °pānu vā° BM °jā ma°. — 17. BM °draṁ prārthayetsuḥ (M °suḥ ||) dha° M °ratnāka° BM °raṁ ta°.

तेन चाभिरुहित्वान ओगाहेत्वान सागरं ।
द्वीपेषु रतनं गृह्य स्वस्तिना पुनरागता ॥
तेषामासि सार्थवाहो पण्डितो अर्थचिन्तको ।
धर्मलब्धो ति नामेन सो तेषां अनुशासति ॥
इहास्ति वाणिजा मार्गे राक्षसीयो भयानिका । 5
[354b] खड्गीये वशितां प्राप्ता मायाचारे च शिक्षिता ॥
यस्तासु काहिति छन्दं बालो दुष्प्रजातिको ।
न सो पुनर्जम्बुद्वीपं गमिष्यति आत्मनो घरं ॥
यो च खु तासु अनपेक्षो भविष्यति इह वाणिजो ।
स्वस्तिना सो जम्बुद्वीपं गमिष्यति आत्मनो घरं ॥ 10
ते मार्गं प्रतिपद्येन्सुः यत्र राक्षसियो अभू ।
ता च तानुपलोभेन्सुः यथाधिमुक्तवाणिजां ॥
रूपेहि अथ शब्देहि स्पर्शगन्धरसेहि च ।
सुविचित्रेषु कामेषु उपलोभेन्सु वाणिजां ॥

तत्र ये रूपाधिमुक्ता वाणिजा ते रूपेहि लोभिता ये शब्दाधिमुक्ता वाणिजा 15
ते मनोज्ञगीतवादितशब्देहि लोभिता ये गन्धाधिमुक्ता वाणिजा ते नानाप्रका-
रेहि सुमनोज्ञगन्धेहि लोभिता ये रसाधिमुक्ता वाणिजा ते पि नानाप्रकारेहि
रसाग्रेहि लोभिता ये स्पर्शाधिमुक्ता वाणिजा ते नानाप्रकारेहि स्पर्शेहि लोभि-
ता ॥ सर्वे पंच वाणिजशता आसक्तुः ॥ यथार्थाय वयं रात्रिं वा दिवा वा

1. BM tena ca(M °ca a)bhi° ruhi dvi°. — 2. M °gata B °gato | . — 3. M °ko pa-
ṇḍito arthacintako B °ko dha°. — 4. M °nāma anuçā°. — 5. B °kā ṛi°.
6. M ṛiddhiye° BM °ptā | (M °ptā) mayācārye ca çi°. — 7. M °su bhūtirchandaṃ
bā° B °ko na°. — 8. M na so putra ja° mishyanti ā° BM °nogharaṃ | : — 9. M omet
*les lignes 9 et 10.* B °jo sva°. — 10. B °ti | ā° rañ to°.
11. B °mārgo pra° M °mārge pra° BM °dyetaṃ yu° M °tra ca rākshasī abhūt |
B °kshasī abhū tā°. — 12. M tāvad yathā upalabhetaṃ rūpehi vi° B tāvanupalabhetaṃ
yathā vimuktiṃ ai vāṇijaṃ rū° M °ṇijā | . — 13. M atha sparçaça° B rūpehi | atha
sparçaça° BM °lehi asparçagandh° M °sehu ca | B °sehi ca su°. — 14. M °citrakāyeshu
u° B °tre | shu° M °bhetaṃ vā° B °bhetaṃ vāṇijaṃ ta°. — 15. BM °pehi lobhitā(M °lo-
bhinā) ye çabdādhimuktā(B °ktā |) vāṇijā(M °ṇiṇā) te manojñagī° lobhi lobhitā | ye
gandhā(M °bhinā yi gandhā) ° jñagandha(M °gandhe)hi lobhitā | ye ra(M °ye ra)sādhimu-
ktā vāṇijā te(B °te pi) nānāprakārehi rasāgrehi lobhitā(B °lobhitā) | ye sparçā(M °sparçā)-
dhi° B °prakāre sparçe°.
19a. B °ṇijā ça° M °kataṃ | . — 19b. BM °kshayantaṃ na(M °nāna)ntapra° M ka-

परिक्रिडमाना नानाप्रकारां कर्मान्तां अनुतिष्ठेयेम तान्यकामिरिहानुप्राप्ता च पञ्चाद्भुतमत्स्यरसभ्रष्टा । इमाहिमेव वयं क्रीडियाम अभिरमिष्यामः न भूयो जंबुद्वीपं गमिष्यामः ॥ धर्मलब्धं सार्थवाहं संदिशन्ति ॥ अस्माकं वचनेन जम्बुद्वीपे मित्रज्ञातिसालोहितानां [आरोचेथ] पृच्छन्ति एते इमाहिमेव वयं अभिरमि-
5 ष्यामः ॥ सार्थवाहो तानाह ॥ भवन्तो न एता मानुषिका राक्षसीयो एता । तं मया युष्माकं आदित एवोक्तं । एते वयं सुखे तं राक्षसीभवनमतिक्रमिष्यामः ते च युष्माकं राक्षसीयो बहुप्रकारं लोभयिष्यन्ति । तत्र भवन्तेहि लोभं न कर्तव्यं । यदि इच्छथ क्षेमेण स्वदेशं गन्तुं मा भवन्तो राक्षसीहि मानुषिका ति चित्तं उत्पादेथ मा सर्वे अनयातो व्यसनमापद्यिष्यथ ॥ ते दानि धर्मलब्धेन सार्थवाहेन
10 बहुप्रकारं वुच्चन्ता न शृण्वन्ति मोहेन मोहिता ॥

ततः धर्मलब्धो सार्थवाहः स्वकेन परिवारेणातिक्रान्तो च तं सर्वं राक्षसीनिर्मितानि भवनानि अन्तरहितानि स्वप्नं च प्रतिभायेन्सुः ॥ ततो पंच वाणिजशतानि पंचहि राक्षसीशतेहि सर्वे खादिता अस्थीन्यवशेषितानि ॥ पंच वाणिजकशतानि भक्ष[355b]यित्वा सर्वं तं राक्षसीगणं संनिपतितं । संनिपतित्वा
15 आहन्सुः ॥ अयं धर्मलब्धो सार्थवाहो पुनर्पुनः इमेन मार्गेण महासमुद्रमवतरति लब्धलाभो च पुनःपुनर्क्षेमेण स्वदेशं गच्छति अन्यानपि वाणिजकां विसर्जेति मा एतेन मार्गेणागच्छथ मा राक्षसीहि खज्जिष्यथ । का उत्सहति एतं धर्मलब्धं लोभेत्वा भक्षयितुं ॥ तत्र एका राक्षसी बहुमाया प्रविष्टा याये बहूनि यानि-

ramaṇīṃtā avatiṣṭhaye gatāṃ ‖ yasyāhi° B °etāṃ avatiṣṭhiyena tāṃya ° yā | rā° M °ça-bdaṃgaṃdhara°.

2. B imehi mo vayaṃ° M imaṃhi evaṃ vayaṃ krīḍiṣyāmaḥ | abhiramiṣyāmaḥ dha°. — 3[1]. M °diçanti a°. — 3[2]. M °jambudvī° BM °nāṃ pṛ° M °cchati ‖ ete imaṃhi yaraṃ vayaṃ° B °imaṃhi e°. — 5[1]. M °tām āha ‖. — 5[2]. M bhavaṃto° BM °etāṃ mā ° śiyo etena°. — 5[3]. BM etena ma° M °ditam eva°.

6. M etena vayaṃ çuceta rākshasībhava ° yāmiyaṃti | . — 7. M °bhavaṃtehi° B °bhavantehi lo°. — 8. BM yadi gaccha° M °kshemaṃ na svadeçaṃ gaṃtuṃ mā bhavaṃto rākshasī mānushikāni ci° B °çaṃ gantu mā bha ° detha māṃ sarve° M °payishyatha ‖. — 9. M °dāniṃ dha ° vucyaṃtā na çṛṇvaṃti mohaivamohitā ‖ B °nti mohevamohitā ‖.

11. M °rthavāho svake ° yātikrāṃto vayaṃ rāksha ° nāni aṃtarhitāni sva ° yetsuḥ | B °yetsuḥ ta°. — 12. B tato tāni paṃcahi rāksha ° ashinya° BM °çeshitāni paṃ°. — — 13. M °jaçatā° B °sarve taṃ rā° M °yitvā sarvāvaṃtaṃ rā ° taṃ saṃnipa° BM °tā-taṃ saṃ°. — 14. M °hatsuḥ | B °nsuḥ a°. — 15. M °imena mārgeṇa māsaaaaa ° naḥ punaḥ kshemena svadeçaṃ gacchati | a ° etena mārgeṇā ° khajjatha kā°.

17. B kā usaha° M °ti ‖ evaṃ dha°. — 18. B °vishṭhā yā° M °vishto jāṃye bahū° B °kshitā sā°.

कशतानि उपलोभित्वा खादिता । सा तानि राक्षसीहि उत्साहिता । धर्मलब्धं लोभेहि तव भक्षो भविष्यति ॥ सा तक्षाभिरूप्यां स्त्रीमात्मानं अभिनिर्मिणित्वा धर्मलब्धस्य गच्छन्तस्य पृष्ठतो अनुबद्धा तस्य सार्थवाहस्य दर्शनपथेन पुनःपुनो अभिक्रामति न च सार्थवाहस्य तत्र स्त्रीयं मनं गच्छति ॥ सार्थवाहः तं पुष्ठं समुद्रपत्तनमवतरित्वा नानाप्रकाराणि रत्नानि गृह्य समुद्रातो क्षेमेण जंबुद्वीपं 5 प्रत्युत्तीर्णो । सा राक्षसी तेन स्त्रीरूपेण तक्षाभिरूपेण सार्थवाहस्य धर्मलब्धस्य बहुप्रकारं प्रलोभेन्ती पृष्ठिमेन पृष्ठिमं अनुगच्छति ॥

यं वेलं धर्मलब्धो क्षेमेण वाराणसीं जानपदं प्राप्तः तत्र राक्षसी धर्मलब्धस्य सार्थवाहस्य सदृशं दारकं अभिनिर्मिणित्वा सार्थवाहस्य उपनामेति । यदि त्वं मम उज्झित्वा गच्छसि इमं पुत्रकं गृह्णाहि को एतं त्वया गतेन वर्धेष्यति ॥ सार्थ- 10 वाहो आह ॥ न एषो मम पुत्रो नापि मे त्वं भार्या अहं च मानुषो त्वं च राक्षसी बहूनि वाणिजकशतानि ये युष्माभिः लोभिता अनयातो व्यसनमापादि ॥ सा ग्रामेहि च नगरेहि च निगमेहि च जानपदेहि च महाजनस्य गर्हति ॥ एषो मे धर्मलब्धो अस्मकातो पत्तनातो प्रियशब्देहि आनेत्वा इह मे छर्देति । इमं पि पुत्रं न गृह्णाति ममापि न वर्धेति ॥ सो दानि सार्थवाहो महाजनेन स्त्रियाहि 15 च पुरुषेहि च उपलभ्यति । सा सार्थवाह एतां स्त्रियं समुद्रपत्तनातो आनेत्वा इमहिं छर्देसि एषो ते पुत्रो तव सदृशो ॥ सार्थवाह आह ॥ न एषो मम पुत्रो नाप्येषा भार्या मम राक्षसी एषा बहूनि वाणिजकशतानि एताहि राक्षसीहि लोभेत्वा खादिता ॥ नापि राक्षसी तस्य जनस्याह ॥ एदृशा [355a] एते धर्मलब्धा पुरुषा यं वेलं स्त्रिय अनुरक्ता भवन्ति ततो गुणशतानि भाषन्ति यं 20

1. BM °sahitā dha°. — 2. M °lobhehi taṁ bhaksho° B °tava bhakto bhavi° M °shya- tha ‖. — 2. BM °ṇābhirū(M °ru)pāṁ strī ātmānaṁ abhinirmiṇitvā sā dharma° M °naṁ punar akrā° B °ca sārthavāhasya ‖ tatra° M °hasya tata strī° manaṁ na gacchati ‖ B °ccchati sā°. — 5. M °vāhas taṁ pu° drapaṭṭanevatari° B °ttanaivatari° M °ṇi ratnāni° kshemena jaṁ°.

6. B °strīrūpeṇa taru° lobhanti pṛishṭhimena prishṭimanti° M °lobhantī ‖ pṛishṭimam anugacchanti ‖. — 8. M °kshemanāṁ vā° BM °jānapado prā° B °meti ya°. — 9. M °ko ekaṁ tva°.

11. M °me tva bhā° vijaṇa° tā ‖ anayāto vasanāto pāditā mānī° B °sanam āpādi sā°. — 12. B mā grā° M māni grā°. — 13. B °labdhāto ano° M °priyaṇatehi ānetvā ime- hi° (l. 17) B °me chhaḍḍeti ‖. — 14. B °gṛihṇāti°. — 15. B so dā ni° lbhyati mā°.

16. BM °imehi mille° M °putrā tava sadṛiço ‖. — 17. B °tro nāpya° M °tro na pya- shāṁ bhā° B °bahuni vā° M °vijaṇa° khāsi lo°. — 19. M yedṛi° BM °rthalabdhā° M °anuraktāḥ bhavanti ‖ ta° B °anuraktā bhavanti ‖ tato° M °bhāshanti yaṁ° bhavanti taṁ° BM °alpā ca kriyaṁ(M yāma) rikshu° M °tena ca kramanāmaḥ ‖.

येन विरक्ता भवन्ति तं येन पिशाचनीयो च क्रियाओ राक्षसी च स्ववर्णशतेन चाङ्कुशाम्‌ः ॥ एवं राक्षसी तं श्रमकायं पत्तीययन्ति ॥ एवं सार्थवाहो धर्मलब्धो क्षेमेण वाराणसी स्वगृहमनुप्राप्तो ॥

ततो च वाणिजा आहु: सार्थवाहं निरन्तरं ।
यस्यार्थाय वयं घट्टाम रात्रिंदिवमतन्द्रिता: ।
कथं रूपानधिगच्छेम ते नो याधिगता इह ॥
आरोग्यं वार्यं वदेसि जम्बुद्वीपस्मि ज्ञातयो ।
इह एवं रमिष्याम नास्ति आगमनं तर्हि ॥

सार्थवाह आह ॥

न खलु स्मृतिर्वो अस्ति विपर्यस्ताहो मारिष ।
राक्षसीनां तव भया नचिरेण भविष्यथ ॥
त्वचं वसां च मांसं च पीत्वान रुधिरं च वो ।
तुष्टा राक्षसी भविष्यन्ति आहारेण समर्पिता ॥
यो मे न काहिति वचनं पश्चात्तापी भविष्यति ।
अपरे वाणिजा आहु: सार्थवाहं तदन्तरं ॥
यस्यार्थाय वयं घट्टाम रात्रिंदिवमतन्द्रिता: ।
कथं शब्दानधिगच्छेम ते नो अधिगता इह ॥
आरोग्यं वार्यं वदेसि जम्बुद्वीपस्मि ज्ञातयो ।
इहैव वयं रमिष्यामो नास्ति आगमनं तर्हि ॥

2[b]. M °yaṁ yattiyo yattiyati ‖ B °yaṁ pattimāpayati | . — 2[b]. M °kalcurena vā ° prāptah | . — 4. BM °jā eke sārthavāham āha nirantaraṁ (M °raṁtarayaṁ | . — 5. M °vayaṁ dātena vā° B °ghaṭṭena vā° M °m atandritā ‖ B °tāḥ ka°.

6. M kathaṁ rupān a ° ena taṁ sopādhigajān iha ‖ B °rūpāni adhigachema te no dyā° ha ā°. — 7. M āroggā vārya° B ārojñā vārya° M °si jaṁbudvīpediyaṁ jñā° B °pasmiṁ jñā° BM °yo i°. — 8. M iham evaṁ ° shyāmima nāsti gamano tahiṁ ‖ B °sti gamanā tahiṁ ‖ . — 10. M na khu mati vacanaṁ paçcāttāpi bhavishyati ‖ apare pi vāṇijā āhuh na ca smṛti° B naṁ khu smṛti nāsti | vi° M °ti nāsti vi° BM °sta vā°.

12. M tvacaṁ vartase ca māṁsaṁ ca pītvā ca ru° B tvacaṁ vasaṁ ca māṁ° BM °co tu°. — 13. BM °siyo bha° M °vishyaṁti ā°. — 14. M yo maṁ na kāhisi tāṁ vacanaṁ paçcāttāpi bhavishyati ‖ sā° B yo mama kāṁhisi tāṁ va°. — 15. M sārtha °danaṁtaraṁ.

16. M °rthāya ca vayaṁ ghaṭṭāma rā° B °ghaṭṭāma rā° M °dritā ‖ . — 17. B kaṁ ça° BM °ma tenāpyadhi°. — 18. BM °gyaṁ vārgyā ca (B °gyaṁ vārya va)desi jñātayo (B °yo ‖). — 19. M °shyāmo nā° B °shyāmi nā ° gamanā tahiṁ ‖ M °gamanaṁ tarhi ‖ .

अपरे नु वाणिजा आहुः सार्थवाहं तदनन्तरं ।
यस्यार्थाय वयं घट्टाम रात्रिंदिवमतंद्रिताः ।
कथं गन्धानधिगच्छेम ते मं अधिगता इह ॥
आरोग्यं वादं वदेसि जंबुद्वीपस्मि जातयो ।
इहैव वयं रमिष्याम नास्ति आगमनं तहिं ॥ 5
अपरे खलु वाणिजाहुः सार्थवाहं तदनन्तरं ।
यस्यार्थाय वयं घट्टाम रात्रिंदिवमतंद्रिताः ।
कथं रसानधिगच्छेम ते नो अधिगता इह ॥
आरोग्यं वाचं वदेसि जंबुद्वीपस्मि जातयो ।
इह एव रमिष्यामो नास्ति आगमनं तहिं ॥ 10

सार्थवाह आह ॥

तं खलु वो न करथ विपर्यस्ताहो मारिष ।
राक्षसीनां तथ भया नचिरेण भविष्यथ ॥
त्वचं च वसां च मांसं च पीत्वान रुधिरं च वो ।
तुष्टा राक्षसी भविष्यन्ति आहारेण समर्पिताः ॥ 15
यं मे न कुर्वथ वचनं पश्चात्तापी भविष्यथ ।
अपरे नु वाणिजा आहुः सार्थवाहं तदनन्तरं ॥
यस्यार्थाय वयं घट्टाम रात्रिंदिवमतन्द्रिताः ।
कथं स्पर्शानधिगच्छेम ते मं अधिगता इह ॥

1. BM °re khalu vā° M °āha | sā° B °huḥ ‖ sā° M °vāha taranantaram B °ram ya°. — 2. BM °ghaṭṭāma rā° M °vasam ataṁdritā ‖. — 3. M °tham gandhān adhiga- cchāma te°. — 4. B ārogyaṁ cārya vede ° dvīpasmiṁ jā° M °gyaṁ cāryya vadesi jaṁbudvīpasmiṁ jātayo i°. — 5. M ihaivaṁ vayaṁ ° ṣyāmi nā° BM °gamanā tahiṁ ‖.
6. M °ṇijā āha ‖ sā° B °huḥ ‖ sā° BM °vāha tadanantaṁ(M °nanda)raṁ ya°. — 7. B °ghaṭṭāma rā° M °ghaṭṭi rātriṁ° M °taṁdritā ‖. — 8. M °rasāṁ adhigaccha° BM °ma tenāpya°. — 9. B °gyaṁ cārya vade° M °gyaṁ cārya vadesiṁ jaṁbūdvīpasmiṁ jā° B °dvīpasmiṁ jā°. — 10. M °evaṁ ramiṣyāmaḥ nā° B °ṣyāmi nā° BM °gamanā tahiṁ ‖.
12. BM taṁ khu vo° M °riṣā B °riṣaḥ rā°. — 13. B °tha bhakṣā rā° M °ṣyasi ‖. — 14. B tvacaṁ ca vartmaṁ ca māṁ° M tvacaṁ vartma ca māṁ° B °ve ta°. — 15. BM °ṣya bha° M °ṣyanti ā° rpitā ‖.
16. M yan me na ° ptāpi°. — 17. BM °re ahu rā° huḥ ‖ sārthavāha tada° M °naṁ- taraṁ. — 18. M yasyāya vayaṁ ghaṭṭe rā° B °ghaṭṭāma rā° ma ataṁdri° M °m ataṁ- dritāḥ ‖.

आरोग्यं सार्थं वदेसि [356a] जंबुद्वीपस्मि ञातयो ।
इहमेव रमिष्यामो नास्ति नो गमनं तहिं ॥

सार्थवाह आह ॥

तं खु न स्मृतिर्वो अस्ति विपर्यस्ताहो मारिष ।
5 राक्षसीनां तद भक्षा अचिरेण भविष्यथ ॥
त्वचं च वसां च मांसं च पीत्वान रुधिरं च वो ।
तुष्टा राक्षसी भेष्यन्ति आहारेण समर्पिताः ।
यं मे न कुर्वथ वचनं पश्चात्तापी भविष्यथ ॥
ततो च वाणिजका सर्वा राक्षसीयो भयानिका ।
10 आयसे नगरे घोरे प्रतितिष्ठे तदनन्तरं ॥
ता राक्षसीयो समागत्वा मतिं कुर्वन्तु तावता ।
अयं वाणिजको एको आगत्वान पुनर्पुनः ।
स्वस्तिना तरन्न पारं न तं शक्यति खादितुं ॥
ततो च राक्षसी एका पण्डिता अर्थचिन्तिका ।
15 बहुयो वाणिजा ताय उपलोभेत्वान खादिता ॥
सा च तां अवच सर्वा मांसभक्षा सुदारुणां ।
अहं तं लोभयिष्यामि मम भक्षो भविष्यति ॥
वाणिजको सागरं तीर्णो सापि उत्तीर्ण राक्षसी ।
पृष्ठतो अनुबन्धेति अनुबद्धा पदंपदं ॥
20 अयं ते दहरो पुत्रो तव शोकेन मरिष्यति ।
गृह्ण त्वं किम्ह उज्झसि औरसो आत्मनो तव ॥

1. B °gyaṁ cārya vade° M °gyaṁ cāryya vade ° dvīpasmiṁ jñā° B °dvīpesmi°. — 2. M ihaiva ca ra° BM °shyāmi nāsti vo ga°. — 4. B °khu na smṛtirtha nāsti° M °khu na svaratha nāsti vipa ° ho māstrisha(?) rā° B °risha rā°. — 5. BM °nāṁ tava bha° B °kshya ci° M °shyati ‖.

6. M tvacaṁ carmaṁ ca māṁsaṁ ca rudhiraṁ ca pitvā vo B °caṁ ca varṇaṁ ca mā° vo tu°. — 7. M °sīyo bhavishyati ‖ ā °rpitā ‖. — 8. M °kurvetha va° B °paçyāttā° M °tāpi bha°. — 9. B °vānikā sa° yānikā ‖. — 10. M °ghora patishṭhe tadanantaraṁ ‖.

11. BM tāṁ rā° mati ku° M °kurvetsu tāvatā° B °nsu tāgatā ‖. — 12. M °tvā ca punaḥ punaḥ ‖ B °rpunaḥ sva°. — 13. BM °çaknoti°. — 14. M °eko paṁḍitā artha-ciṁtikā ‖ B °ntitā ‖. — 15. M °jā tāye upalobhaṁtu khā°.

16. BM sā ca taṁ ava° B °ca sarvāsāṁ māṁ° M °ruṇā ‖. — 17. BM ahaṁ na lo° M °mi mama kshā bhavishyatha ‖. — 18. M vāṇija sāga° B °rṇo sa pi u°. — 19. M °nubaṁdheti anubaṁdhā padaṁ° B °ti anubandhā padaṁ°. — 20. M °çoke ma°.
21. B gṛhetva ki° M gṛhna iva kiṁ u — si āuro ātmanaṁ ta° B °ujhyasi o°.

तस्य निवेदितं ॥ [356ᵃ] महाराज धर्मलब्धेन महासार्थवाहेन समुद्रपत्तनातो स्त्री आनीता प्रासादिका दर्शनीया परमेण रूपेण समन्वागता समानरूपा न जायति ॥ धर्मलब्धो केनचि कारणेन नैव भार्यां इच्छति नैव तं पुत्रं ॥ राज्ञा अमात्या आणत्ता ॥ शब्दापयथ धर्मलब्धं सार्थवाहं ॥ सो दानि अमात्यैः राज्ञो सकाशं शब्दापितो शब्दापिता अपि सा स्त्री ॥ राज्ञो ब्रह्मदत्तस्य तां स्त्रियं पश्यित्वा अभिरूपां दर्शनीयां उत्तमेन रूपेण समन्वागतां राज्ञो तत्र स्त्रियं अत्यर्थं अनुरागो उत्पन्नो ॥ सो दानि तं सार्थवाहं आह ॥ यदि तव एताये स्त्रिये नार्थो मम तां देहि ॥ धर्मलब्धो आह ॥ मा महाराज प्रमादं करोहि न एषा मम भार्या न ममैष पुत्रो । एषा समुद्रातो उपलोभेन्ती मम पृष्ठेन पृष्ठिमं समनुबद्धा प्रलोभनार्थं । न एषा स्त्री राक्षसी एषा मा महाराज अत्र मनं करोहि ॥ सो दानि राजा तत्र स्त्रियं अनुरक्तो तावत्केन रूपेण च धर्मलब्धस्य न शृणोति । यथोक्तं भगवता ॥

रक्तो ह्यर्थं न जानाति रक्तो धर्मं न पश्यति ।
अन्धतमसदा भवति यं रागो सहते नरः ॥

तेन राक्षसी अन्तःपुरं प्रवेशिता ॥ ताये सार्धं राजा ब्रह्मदत्तो क्रीडित्वा रमित्वा प्रविचारयित्वा शयितो ॥ ताये राक्षसीये सर्वस्य राजकुलस्य ओस्वापनं कृतं । सपुत्रिकाये राजा खादितो ॥ राजानं भक्षयित्वा सो पुत्रः तत्र राक्षसीनां मूलं प्रेषितो । आगच्छथ शीघ्रं इमं राजकुलं भक्षयितव्यं ॥ आमुहूर्तस्य सो तं राक्षसीगणं गृह्यागतो ॥ ताहि ताये रात्रिये सर्वं तं राजकुलं साभ्यन्तरबाहिरं

1. M °dike da ° paramarupeṇa° BM °gatá sagarbharúpá°. — 3¹. BM °labdhena kena kára° M °ṇena malabdharthavábhena naivaṁ bháryám icchati naivaṁ taṁ°. — 3². M °tyá ágatya ṇa° B °ttá ṇa°. — 4¹. M °bdhaṁ ealaṁ ‖. — 4². M so dániṁ amátyo rá° B °ṇaṁ ṇabdápito apito | api sá° M °ṇaṁ ṇabdápitaḥ api sá° BM °strí rá°. — 5. BM °eya taṁ striyaṁ pa° B °táṁ rájñá tatra striyo atya° M °jño na striyo atya ° tpannaṁ ‖.

7¹. BM °di távad etá ° rtho(B °rtho |) mama taṁ dehi ‖. — 8². B °prasádaṁ° M °esho mama bhá° B °eyá tava váne na eshá mama bháryá na mamai°. — 9. B eshaṁ samu° M °palobhentí mama pṛishṭhe° B °ntí mama pṛishṭena pṛishṭenaṁ sa°. — 10. B °sí e má mahá° M °sí yashá má°.

11. M °dániṁ rá ° striyaṁ anuyukto°. — 12. BM °vatá ra°. — 13. M dakto hya° B raktá hya ° jánáti rakto dha°. — 14. BM °ndhatamas ta° BM °bhavati(M °vani) yo rágaṁ eva sa° M °naro te°. — 15¹. M °sí antaḥpu°. — 15². M °brahmadatto krí°.

16. BM °sápanaṁ° B °taṁ sa°. — 17¹. BM °to rá°. — 17². M °putra ta ° múle pre° BM °to á°. — 18². M °gṛihvága° BM °to te°. — 19. BM tehi tá° M °sábhyantare-báhira sadri° B °ntaraṁ báhiraṁ° M °mhasvi sáṇya jáṇe rá ° ditaṁ | asthikaraṅkáni avaçeshitáni pra° B °kalaṅká vaçeshikṛi°.

च बाहिरराजकुलद्वारं प्रविष्टा: पश्यन्ति च हस्तिबाहिरीये हस्तिकरंकानि अश्व-
बाहिरीये पि करंकान्यवरोपितानि तेषां हस्तिमेण्ठानां अश्वमेण्ठानां पि अस्थी-
न्यवरोपितानि । यथा श्मशानं एवन्तं बाह्यतो राजकुलं भयभैरवदुर्गन्धं ॥
अभ्यन्तरतो पि राजकुलद्वाराणि मुंचित्वा द्वारं प्रविष्टा तथैव राज्ञो पि देवीनां
5 पि अस्थीन्यवरोपितानि । एवन्तं राजकुलं अभ्यन्तरबाह्यतो श्मशानभूतं भयभै-
रवदुर्गन्धं ॥

ततो तेहि अमात्येहि च नैगमेहि च महाजनकायं संनिपातेत्वा तं राजकुलं
साभ्यन्तरबाहिरं शोधापितं सिक्तसंमृष्टं कारापितं धूपनधूपितं तस्य राज्ञो देवीनां
च सर्वेषां शरीरे पूजा कृता समन्ततो नगरस्य गुप्ता स्थापिता चतुरंगबलकायं
10 निवेशितं हस्तिकायं अश्वकायं रथकायं पत्तिकायं ॥ एवन्तं नगरं सजनपदं
रक्षीयति मा कोचि राजा अपराध्येयाति ॥ ते दानि अमात्या च नैगमा च
जानपदा च संनिपतित्वा मन्त्रं धारेन्ति परस्परं संमन्त्रेन्ति ॥ भवन्तो को इह
अस्माकं वाराणसीये राजा भविष्यति यो शक्येय इमं राज्यं धर्मेण परिपालयितुं ॥
तेषां सर्वेषां राजामात्यानां नैगमजनपदानां च एतदभूषि ॥ अयं राजा योग्यो
15 वाराणस्यां स्थापयित्वा धर्मलब्धं सार्थवाहं । एषो पुण्यवन्तो चाप्रमत्तो च ।
यक्षराक्षसा अपि न शक्नुवन्ति अवतारमधिगन्तुं । तत्र विप्लुत्तं महासमुद्रं
अवतीर्णः सिद्धयात्रो च सर्वकामं क्षेमेण प्रत्यागतो ॥ तेहि सो धर्मलब्धो सार्थ-
वाहो सर्वसौवर्णमहासिंहासने निषीदापेत्वा राज्ये अभिषिक्तो ॥

भगवानाह ॥ स्यात्खलु पुनः भिक्षवः युष्माकमेवमस्यादन्यः स तेन कालेन

3. M °çānam evaṃ bāhya° BM °rājakulasya bha° M °durgandhaṃ B °ndhaṃ a°. — 4. M abhyantarato pi rājakuradvārāṇi muci° BM °viṣṭo taṃ sarve(M °saiva)rājño pi devī-nāṃ pi asthi(B °sthīni)nya° M °varopitāni | B °tāni e°. — 5. M evaṃ taṃ rājakulaṃ abhyantara° çānaṃ bhūta bha° evaṃ durgandhaṃ ||.

7. M °tyehi tam° pātetvā° abhyantara° raṃ sodhāyitaṃ si° B °dhāpitaṃ | sikta-saṃmṛṣṭaṃ° M °saṃmṛṣṭa kārāpitaṃ dhūpanadhūpitaṃ° B °dhūpakadhū° M °devīna sarve° B °vikāya sarve° BM °çarīraṃ pū° M °samantāntāntaro naga° B °catulaṃgavarakāyaṃ° çitaṃ | hastikāyam açva° M °tikāyam açvakāyaṃ e°. — 10. M evaṃ taṃ na° BM °raṃ sa ja° M °mā kvacid rājā aparadhya yā te° B °aparadhya yāto |.

11. M °trā mantraṃ dhārenti parasparaṃ samaceti || B °mantreti |. — 12. M bhavanto iha° eṣyati | yo çakoya imaṃ° rimālayatuṃ te° B °pālayatuṃ ||. — 14ᵃ. M teṣāṃ rājā°. — 14ᵇ. M °rājā yogyaḥ vā° sthāpetvā°. — 15. M °çyavanto ca apramato ca.

16ᵃ. M °kalaha api° kenacīti ava° dhigantuṃ |. — 16ᵇ. M tatra kṣīṇabuddhyayatiryo siddhayātrā° tyāga tehi°. — 17. B °he sarvaṃ° M °ho sarvarṇa aṃ° dāyetvā rājyābhi° B °bhiṣikto ||. — 19ᵃ. M °punar bhikṣu°.

आत्मानमधिकृत्य भगवां एतमर्थं वियाकरेत् ।
अनवराग्रस्मिं संसारे यत्र मे उषितं पुरा ॥
धर्मलब्धो अहं आसि वाणिजको अर्थचिन्तको ।
मारधीतरो राचमी एवं धारेथ जातकं ॥
5 एवमपरिमितं बहुदुःखं
उच्चनीचं चरितं पुराणं ।
विगतज्वरो विगतशोको
भगवां भाषति भिक्षुसंघमध्ये ॥

धर्मलब्धस्य सार्थवाहस्य जातकं समाप्तं ॥

10 कालो नागराजा तहिं चु महाचंक्रमे भगवन्तं उपसंक्रान्तो ॥ सो दानि भगवतः पादौ शिरसा वन्दित्वा एकांशीकृतो प्रांजलीकृतो भगवन्तमेतदुवाच ॥ मम भगवं भवनो पुरिमकेहि सम्यक्संबुद्धेहि परिभुक्तो ककुच्छन्देन भगवता कोनाकमुनिना काश्यपेन साधु भगवानपि मम भवनं परिभुंजतु अनुकंपामुपादाय ॥ तथापि भगवां कालस्य नागराजस्य भवने चतुर्थं सप्ताहं प्रीतिसुखेन वीतिनामेति ।
15 ततो पि भगवां कालस्य नागराजस्य भवनातो चतुर्थस्य सप्ताहस्यात्ययेन उत्थितो ॥
मुचिलिन्दो नागराजः पुरिमबुद्धदर्शावी भगवतः उपसंक्रान्तो ॥ सो पि भगवतः पादौ शिरसा वंदित्वा एकान्ते प्रांजलीकृतो भगवन्तं याचति ॥ मम भगवं भवनो पुरिमकेहि सम्यक्संबुद्धेहि परिभुक्तो भगवता ककुच्छन्देन कोनाकमुनिना काश्यपेन साधु भगवां पि मम भवनं परिभुंजतु अनुकंपामुपादाय ॥
20 भगवां मुचिलिंदस्यापि नागराजस्य भवने पंचमं सप्ताहं मुनिराहारः प्रीतिसुखेन

1. B ātmānam° M °gṛtya eta° B °etham vyāharet | M °etham vyāhare a°. — 2. M °varāgresmi saṃ° tra u° B °tra me tuṣita purā dha°. — 3. B °labdho 'haṃ° M °aham āsi vā° arthacintako |. — 4. M °sī etaṃ dhārayā jā°. — 5. B °yaṃ vi°.

7. M °bhagavān bhāṣa°. — 9. M iti çrīmahāvastuavadāne dharma° B °sya sāthavā° M °sārthajā° saptaṃ |. — 10¹. M atha kā° BM °hiṃ kumarim caṃ(B °caṃkra° B °nto ss°. — 10². M °ni bhagavato pā° B °çilasā °ekāṃçī°.

11. M mama bhagavan mavano ° bhuktehi kra° B °bhukto kra° M °nāma bhagavato ko° BM °bhuñjatu°. — 14. M °tasya nāgarasya bhavane caturtha sa° khena vītinā°. — 15. M °syātyayena utthitaḥ.

16¹. M mucilindo nāgarājo pu° vi bhagavato pādau° B °nto ss°. — 16². M °vanditvā° B °ti mama°. — 17. M mama bhagavan bhavanāto pu° B °caṃ bhavanāto pu° M °kto bhagavato kra° BM °bhuñjatu°. — 20. M bhagavān muci° BM °nirāhāra pri° M °sthinā°.

तेजानुभावेन ॥ तस्य दानि अजपालस्य न्यग्रोधपोतं श्रोमाग्रप्राप्तं प्रासादिकं
प्रसादनीयं दृष्ट्वा अतिरिव चित्तं प्रसीदति ॥ सो दानि तेन चित्तप्रसादेन च
कुशलमूलेन च कायस्य भेदात्त्रयस्त्रिंशद्देवनिकाये उपपन्नो न्यग्रोधो नाम देवपुत्रो
महर्द्धिको महानुभावो । सो पश्चादुपपन्नो समानो अन्यां पूर्वोत्पन्नांस्त्रयस्त्रिंश-
5 कायिका देवपुत्रां दिव्येहि पंचहि कामेहि अभिभवति दिव्येनायुषा दिव्येन वर्णेन
दिव्येन सुखेन दिव्येनैश्वर्येण दिव्येन परिवारेण ॥ तस्य समनन्तरोपपन्नस्य एत-
दभूषि । किं मया मनुष्यभूतेन कुशलं कर्म कृतं उपचितं कस्य कर्मस्य विपाकेन
इह त्रायस्त्रिंशभवने उपपन्नो हं ॥ सो दानि न्यग्रोधो देवपुत्रो कुशलमूलं सम-
न्वाहरन्तो पश्यति भगवन्तमुद्दिश्य न्यग्रोधं नदीये नैरंजनाये तीरे रोपितं ॥ सो
10 दानि न्यग्रोधो देवपुत्रो अनेकदेवपुत्रसहस्रेहि परिवृतः अभिक्रान्तवर्णो अभिक्रा-
न्तवर्णेन केवलकल्पं मुचिलिंदस्य नागराज्ञो भवनं उदारेण वर्णेन ओभासेत्व येन
भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा एकान्ते अस्थासि ॥
एकांशीकृतो प्रांजलीकृतो भ[358b]गवन्तमेतदुवाच ॥ मया भगवन्मनुष्यभूतेन
अजपालेनाजानि पालेन्तेन एषो न्यग्रोधो रोपितः भगवन्तमुद्दिश्य तेनाहं कुशलमू-
15 लेन मनुष्येषु च्यवित्वा भगवन्त्रायस्त्रिंशे देवनिकाये उपपन्नो । साधु भगवानेतं
न्यग्रोधं परिभुंजतु अनुकंपामुपादाय यथा मे महाफलतरं भवेया ॥ अधिवासते
भगवां तस्य देवपुत्रस्य तूष्णीभावेन ॥ अथ खलु सो देवपुत्रो तूष्णीभावेनाधिवा-
सनां विदित्वा तुष्टो हृष्टो आत्तमनो प्रीतिसौमनस्यजातो भगवतः पादौ शिरसा
वन्दित्वान त्रिष्कृत्वो प्रदक्षिणं कृत्वा तत्रैव अन्तरहाये ॥

20 भगवान्मुचिलिंदस्य नागराज्ञो भवनातो उत्थिहित्वा षष्ठं सप्ताहं निराहारो
प्रीतिसुखेनाजपालन्यग्रोधमूले वीतिनामेसि ॥ ततो अजपालस्य न्यग्रोधमूलातो

1. M °japārasya nya° BM °dikaṁ prāsāda° B °ttaṁ prasīdanta so° M °sīdanti ‖. — 2. M °cittapra° bhedā trayastriṁçe de° B °bhedāt trayastriṁçā de° BM °so so°. — 4. M °d upapannaḥ sa° anāṁ trayastriṁ° paṁcahi kāmehi abhi° BM °ti ‖ divyenāyu° varṇe(M °rṇe)na divyena çikhena divyenai° M °ryena di° BM °ṇa ta°.

7. M °striṁçe bha°. — 8. M °nyagrodha de° BM °gavanto u°. — 9. M °trasahasraihi pari° BM °taḥ atikrāntavarṇo(M °rṇo) atikrāntavarṇe(M °rṇe)na kevalaṁ kalpaṁ° M °cilindasya° jño bhavanam udā° yena bhagavāṁstena° gavato pā° B °sāo āsi v°.

13[1]. B °prāṁjalikṛto bha°. — 13[2]. M °jāti cārante° B °jāni cārante° M °ropito bhagavanta° B °upanno sā°. — 15. BM °bhuṁjatu° dāya | yathā° M °phalaṁ bhaveyo.

16. M °gavān tasya de° BM °bhāvenā ‖. — 17. BM °viditvā citta hṛ(M °tto tuṣṭo° M °prītisoma° gavato pā° ditvā triṣkṛ° B °ditvā ca tri° M °kṣiṇīkṛtvā tatraivānta-rahāya ‖. — 20. M °cilindasya° to utthihitvā° japāranyagrodhamule vītinā°.

21. M °pārasya nya° B °grodhamū° kāsanakhaṇḍe° devajako so° B °eti | ya° M °vi-thinā°;

षष्ठस्य सप्ताहस्यात्ययेन क्षीरिकावनषण्डे बहुदेवतके चैतिये निराहारो प्रीतिसु-खेन सप्तमं सप्ताहं वीतिनामेसि ॥ एवं भगवां सप्तसप्ताहं एकूनपंचाशद्दिवसां निराहारो ॥

उत्तरापथे उक्कलं नामाधिष्ठानं । ततो उक्कलातो अधिष्ठानातो त्रपुसो च भल्लिको च नाम सार्थवाहा आढ्या महाधना महाभोगा पुण्यवन्तो महापरिवारा दक्षिणापथातो पंचहि धुरशतेहि तेन मार्गेण आगच्छन्ति ॥ तेषां सर्वधुर्यानां बलीवर्दानां पुंगवा एको सुजाताये नक्षत्रे जातको अपरो कीर्तिके । तेषां एवं नक्षत्राणां नामेन सुजातकीर्तिकनामेन ज्ञायन्ति ॥ सर्वस्य सार्थवाहस्य पुरतो सार्थवाहस्य यानकं वहन्ति । यत्र मार्गे किंचिद्भयो भवति सिंहभयो व्याघ्रभयो द्वीपिभयं वा गण्डकभयं वा हस्तिभयं वा वनदेवभयं वा उदकवाहभयं वा चोर-भयं वा तत्र ते न गच्छन्ति ततः ते वाणिजका जानन्ति भयं भविष्यतीति तथा संहरित्वा चतुर्दिशं प्रधावन्ति समन्तेन अवलोकित्वा ॥ ते दानि बलीवर्दा सुजा-तकीर्तिका तहिं क्षीरिकावनषण्डं अनुप्राप्ता । अत्र त्रपुसभल्लिकानां च वाणि-जानां पूर्वज्ञातिसालोहितेहि देवभूतेहि तहिं क्षीरिकावनषण्डे ऋद्धिये निगृहीता न शक्नोन्ति गन्तुं ॥ तेहि स्थितेहि सर्वे ते पुरुषा सार्थातो भीता तत्र संनद्धा ॥ तेषामन्ते देवता पूर्वज्ञातिसालो[359a]हिता अन्तरीक्षगता घोषमुदीरयेन्सुः शब्द-मनुश्रावयेन्सुः ॥ मा भायथ वाणिजा त्ति न भवति वो उपद्रवं । एष बुद्धो भगवानिह वनषण्डे प्रतिवसति सप्तहि असंख्येयकल्पेहि प्रादुर्भूतः बहुजनहिताय बहुजनसुखाय लोकानुकंपाय महतो जनकायस्यार्थाय हिताय सुखाय देवानां च

2. M °gavān sapta° °haṃ ekunapañcā°. — 5¹. M °tho khalaṃ°. — 5². M tataḥ u° BM °trapuṣā ca bha° BM °vāho āḍhye mahādhano mahābhogo pu° °rivāro da° M °ṇāpa-thāto paṃcahi dhūraṇa° B °paṃcahi puraṇa°.

6. M °rddānāṃ puṃgalā° B °puṃgalā° M °ye nakshetriyena jā° B °kshatriyena jā° BM °ke te°. — 7. B °jātaṃ ki° BM °rttināme ° ntī as°. — 8. M °purato yāna ° vāhati | B °vāhati ya°. — 9. B °rge kiñcid bhavā bhavati | siṃ ° tyākabhayaṃ vā hasti ° caura-bhayaṃ vā | tatra° M °cchanti | tato te° BM °iti | tathā° M °saṃharitvā caturdiçaṃ saṃpra°.

12. M °prāptāḥ atra°. — 13. B atra ḍapu° M °pusabhallikāyānāṃ ca° B °llikānāṃ ca vāṇijāyānāṃ pū° BM °devabhūte tahiṃ° M °ṛddhi nigṛhī° B °çakno gantuṃ te° M °knoti gantuṃ te°. — 15. B °bhītāto | tatra° M °tra saṃnaddhāḥ te° B °ddhā te°.

16. M teshāṃ ta de ° nirohita antarikshāga° B °hito antarikshāgata ghe ° yetsuḥ ça° M °yetsuḥ ça° BM °vayetsuḥ mā°. — 17¹. BM °ṇijānti(B °nti |) na vā iti na vā u°. — 17². M saha bu ° vanakhaṇḍe° BM °saptahi a° M °khyehi kalpe ° rbhūto ba ° te janakāyārthā ° okanupaṃcā° BM °çaddi(M °çadi)vasam anāhāreṇa taṃ u°.

मनुष्याणां च तस्यापि सप्तसप्ताहं एकूनपंचाशदिवसा अनाहारस्य । तमाहारेण
प्रतिमानेथ ततो वः अप्रमेयं कुशलमूलं भविष्यति ॥ तेहि दानि त्रपुसभल्लिकेहि
वाणिजेहि तासं देवतानां वचनं श्रुत्वा मधुसर्पिसंयुक्तं तर्पणं गृहीतं । ते देवता
तेषां वाणिजकानां पुरतो गच्छन्ति । इतो आगच्छथ ॥ ते दानि वाणिजा तेहि
5 देवतेहि भगवतो सकाशमुपनीता ॥ ते तं मधुतर्पणं गृह्य भगवन्तमुपसंक्रान्ता ।
इमं भगवन्मधुतर्पणं परिभुंजतु अस्माकमनुग्रहार्थं ॥ अथ खलु भगवतो एतदभू-
षि ॥ किं नु खलु पुरिमका सम्यक्संबुद्धा भाजनप्रतिग्राहका उताहो पाणिप्रति-
ग्राहका भाजनप्रतिग्राहका सम्यक्संबुद्धा ति ॥ सह चित्तोत्पादेनैव भगवतः
चत्वारि महालोकपाला चत्वारि सुवर्णपात्राण्यादाय भगवन्तमुपसंक्रान्ता रतन-
10 पात्रा ति कृत्वा न प्रव्रजितसारूप्याणि भगवां न प्रतिगृह्णाति ॥ ते दानि रूप्या-
मयानि पात्राण्यादाय भगवन्तमुपसंक्रान्ता । तानपि भगवां रतनपात्राणीति
कृत्वा न प्रतिगृह्णाति ॥ एवं मुक्तामयानि वैडूर्यामयानि स्फटिकमयानि मुसार-
गल्वमयानि लोहितिकामयानि तानपि भगवां रत्नपात्राणीति कृत्वा न प्रव्रजित-
सारूप्याणीति कृत्वा न प्रतिगृह्णाति ॥ ते दानि चत्वारो शैलपात्राणि आदाय
15 भगवन्तमुपसंक्रान्ता ॥ अथ खलु भगवतः एतदभूषि । यदहमेकस्य लोकपालस्य
पात्रं प्रतिगृह्णीष्यामि त्रयाणां भविष्यति चित्तस्यान्यथात्वं ॥ भगवता सर्वेषां
चतुर्णां लोकपालानां चत्वारि पात्राणि प्रतिगृह्णित्वा अंगुष्ठेन आक्रान्ता एकपात्रो
च अधिष्ठितो । ते दानि चत्वारो पात्रा एकं पात्रं सं[355b]जाता सर्वेषां चतुर्णां
पात्राणां चत्वारि पात्रकोटीनि दृश्यन्ति । तत्र भगवता त्रपुसभल्लिकानां वाणि-
20 जानां मधुतर्पणं परिभुक्तं ॥

1. B tam anibā° M °mānetha ‖ tato vo apra° B °meyaṁ aku° M °çalamulaṁ°. — 2. B °ni ḍapusbe bha° M °trakusha° BM °devānaṁ va° B °hitaṁ te°. — 4¹. B °echatha te°. — 4². BM °vāṇijā(B °jāṁ) tehi devatehi bha° B °nitā te°. — 5. M taitaṁ ma° B °krānto |.

6¹. B °smākaṁm a°. — 7. BM °rimakā saṁmyaksaṁbuddha bha(M °bhāṁ)janapratigrāhakā(M °hatā) u° ṇipratigrahato bha(B °hakā bhojanapratigrāhakā saṁmyaksaṁbuddhā(M °ddho) ti saha°. — 8. B °tpāde deva(M °vaṁ) bhagavataḥ(M °vato) catvāri mahā° B °pāle catvāri su° °saṁkrāṁtaḥ ra° M °ntā ratanapātrāṇi kṛitvā na pravra° B °trā hi kṛi° BM °gṛihnāti |. — 10. B °krāntān api°.

11. B aapi bha° M °gavān ratnapā° B °trāṇi ti kṛi° BM °gṛihnāti |. — 12. B °ryamayāni sphāṭi° °sālagalva° M °sāgalva° bhagavān ratna° BM °gṛihnāti |. — 14. M ta dāni°. — 15¹. M °gavato e°. — 15². B °ham etasya lo°.

16. M °ṇi pratipratigṛihitvā° B °gṛihnitvā °gushṭena akrā° M °gushṭena apakrā°. — 18. B °ro pātri e° M °ro pātro ekapātraṁ° BM °jātaṁ sarva°. — 19. BM °bhuktaṁ bha°.

भगवां दानि त्रपुषभल्लिकानां वाणिजकानां मधुतर्पणं पीत्वा प्रत्ययप्रीतिवर्ण-गन्धरसोपेतं दक्षिणामादिशति ॥

अनेकाकारसंपन्नं तर्पणं मे प्रयुच्छति ।
वर्णेन चैव संपन्नं गन्धेन च रसेन च ॥
प्रत्ययं च प्रीतिं च एषणीयं च कल्पियं । 5
तर्पणं प्रथमं शास्तु अदेंसु त्रपुषभल्लिका ॥
मधुसर्पिसंयुक्तं तं पिबे च पुरुषोत्तमः ।
तेहि संतर्पितो वीरो प्रतिसंलानवुत्थितो ।
तर्पये धर्मवृष्टीये देवगन्धर्वमानुषां ॥
दिशे सोवस्तिकं दिव्यं मंगल्यं चार्थसाधकं । 10
यं श्रुत्वा सुमना सर्वे सर्वार्थां साधयिष्यति ॥
स्वस्ति वो द्विपदे भोतु स्वस्ति वो तु चतुष्पदे ।
स्वस्त्यस्तु व्रजतां मार्गे स्वस्ति प्रत्यागतेषु च ॥
स्वस्ति रात्रौ दिवा स्वस्ति स्वस्ति मध्यंदिने स्थिते ।
सर्वत्र स्वस्ति वो भोतु मा च पापं समागमत् ॥ 15
श्रिरी वो दक्षिणे स्कन्धे श्रिरी वामे प्रतिष्ठिता ।
श्रिरी वो अंगमंगेषु नाभीव सुप्रतिष्ठिता ॥
भद्रं वो भद्रश्रिरी वो वाणिजा भद्रमस्तु वो ।
येन केनचित्कार्येण गच्छथ पूर्विमां दिशां ॥
नक्षत्राणि वो पालेन्तु ये तां दिशामधिष्ठिता । 20
कृत्तिका रोहिणी चैव मृगाद्रा च पुनर्वसु ॥
पुष्यं च वरनक्षत्रं अश्लेषा भोन्ति सप्तमा ॥

1. M °gavān dāni tra° tṛpaṇapaṇi° B °rasagandhāra° M °rasagandhāra° B °diçanti |. — 3. M anekakāra° °varṇati | B °ṇati va°. — 4. M °calvaṃ saṃ° °nikhana va ca° B °sa-mna ca pra°. — 5. M °lpitaṃ |.

6. BM °adeṃsuḥ tatra trapuṣa° M °śāsjabhallikā (M °llikā) |. — 7. M °be puruṣotta-maḥ |. — 8. BM te ca saṃ° M °tarppeto vīraḥ pratisaṃlānu u°. — 9. B °vṛṣṭiye de°. — 10. BM diçāṃ so° M °tthitaṃ di° BM °sādhikaṃ |.

11. M °ṣyatha |. — 12. B °bhontu sva vo stu° M °bhontu svasti bhontu catuṣpade |. — 14. M °trau svasti divā°. — 15. M °bhontu mā ca°.

16. BM çiri ya da° °ndhe çirī vā° B °tiṣṭhitāṃ | M °tiṣṭhitā |. — 17. M °tiṣṭhitā | B °tiṣṭhitā |. — 18. M °çirī vāṇi° B °çarī vā vāṇi°. — 20. B °diçā dhi°.

21. M °caivaṃ mṛgaçiraścā ca pu° B °gādrā ca pu°. — 22. B °trāṃ ca aśleṣā bhonti sa° M °bhonti saptamaḥ |.



IMPRIMERIE NATIONALE

इत्येते अष्ट नक्षत्रा लोकपाला यशस्विनः ।
आदिष्टा पुरिमे भागे एतेषां पुरिमा दिशा ॥
एते वो अभिपालेन्तु भूमीये भवनेन च ।
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमे ।
लब्धार्था च निवर्तेथ तेहि नक्षत्रेहि रक्षिता ॥
पुरस्तिमे दिशोभागे अष्ट देवकुमारिका ।
भद्रोत्तरा नन्दिसेना नन्दिनी नन्दिरक्षिता ॥
जयन्ती विजयन्ती च सिद्धार्था अपराजिता ।
तेषामधिपती राजा धृतराष्ट्रो ति नामतः ॥
गंधर्वाधिपती राजा देवेहि स च रक्षितः ।
सो पि वो अभिपालेतु भूमीये भवनेन च ॥
क्षेमा च वो दिशो भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ सर्वदेवेहि रक्षिता ॥
पुरिमस्मिं दिशोभागे चापलं च नाम चैतियं ।
नित्यं ज्वलति तेजेन नित्यं सत्योपयापनं ।
सो पि वो अभिपालेतु भूमीये भवनेन च ॥
[360*] क्षेमा च वो दिशो भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ सर्वचैतियसुरक्षिता ॥
येन केनचिदर्थेन गच्छथ दक्षिणां दिशं ।
नक्षत्राण्यभिपालेन्तु ये तां दिशामधिष्ठिता ॥
मघा चोभे च फाल्गुन्यौ हस्ता चित्रा च पंचमा ।

1. B °pālo ya°. — 2. B adi° M adiṣṭo purime° BM °diçām | . — 5. BM kshemā ca sadi°.

6. B °rikām | . — 7. B naṁdurānandine° M mandurānandinandinandirakshitā | . — 8. B omet cette ligne. M nandirānandivarddhitā ca siddhā °jitā | tā pi ca adhipālentu bhumiye bhavanena ca | kshemā ca vo diço bhontu mā gamo pāpam āgami | labdhāthā ca nivartatha devakanyāhi rakshitā | te° (l. 9). — 9. M °dhipati rājā dhṛitarāshṭroti° B °dhṛitarāshṭrena nā°. — 10. M gandharvādhipati rājā devehi ca rakshitā | B °hi sa ca rakshatah | .

11. BM °pi to a°. — 12. B kshemā ca vo di° M °gami | . — 13. BM °sarva de° kshitam | . — 14. M purimasmiṁ° B °diçobhoge cāpālam° M °ge pālam ° cetiye | . — 15. M °jvarati° BM °nityā satye(B °sasyo)payā°.

16. BM °leti bhūmi(B °bhūri)ye°. — 17. B kshemā ca vo pā° M °gami | B °mi | la°. — 18. M °rthāya ni° BM °vartatha°. — 19. BM °kshiṇā di°. — 20. M °nta etāṁ dim adhi°.

21. B °ghā cābhe° M °ghā vobhe ca phārgunyau°.

रक्षन्तु वो भिपालेन्तु ये तां दिशमधिष्ठिता ॥
अनुराधा च ज्येष्ठा च मूलश्च दृढवीर्यवान् ।
उभे आषाढे अभिजिच्च श्रवणा भवति सप्तमी ॥
ते पि वो अभिपालेन्तु भूमीये भवनेन च ।
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ तेहि नक्षत्रेहि रक्षिता ॥
पश्चिमस्मिं दिशोभागे अष्टौ देवकुमारियो ।
अलंबुषा मिश्र[366b]केशी अरिष्टा सुप्रभायका ॥
. . . . . . . . कृष्णा शुक्ला च द्रौपदी ।
ता पि वो अभिपालेन्तु आरोग्येन शिवेन च ॥
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ देवकन्याहि रक्षिता ॥
नागानामधिपती राजा विरूपाक्षो ति नामतः ।
स वो नागाधिपो राजा यशसेन सह रक्षतु ॥
सो पि वो अभिपालेतु भूमीये भवनेन च ।
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ सर्वनागेहि रक्षिता ॥
पश्चिमस्मिं दिशोभागे अस्तो नामेन पर्वतो ।
आवर्तो चन्द्रसूर्याणां अस्तो अर्थं ददातु वो ॥
सो पि वो अभिपालेतु भूमीये भवनेन च ॥
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्था च निवर्तेथ सर्वे अस्तेन रक्षिता ॥
येन केनचिदर्थेन गच्छथ उत्तरां दिशां ।

1. B °dhishṭitā | M °shṭhitāḥ | . — 3. M °ákhaḍhe abhikahicca gravaṇe bha° B °çravaṇe bha° M °ptami || . — 5. M °diça bho°.

7. B pacchimasmiṁ diçobhāge ashṭaṁ de° M paçcimasmiṁ ° ashṭa de ° riyaṁ | B °riye | . — 8. BM alaṁvarsha mi° M °rishṭo suprabhāvarah | . — 9. BM ekāna (B °naṁ) vātavanikā kri° M °çuklamodopati | B °çukrama opati | . — 10. B °rogena çi° M °rogyaṁna çi°.

12. M °labdhārthāṁ ya ni ° devakaṁnyā° B °kshitā | . — 13. M °virupākaho°. — 14. M sarvanāgā° B sarvarājādhipo nāgā vara°. — 15. M °vo adhipā° BM °bentu bhū°.

16. M °gami | . — 17. M °rthāya ni° B °sarvanāmā°. — 18. M paçcimasmiṁ° B °diçabhā° M °ashṭanāme°. — 19. M °ndrasuryyāṇāṁ asto a° B °çāṁ asto arthaṁ dadā bhavo | M °dadatu me | . — 20. M °adhipā° BM °bentu bhū°.

22. M °rthāya ni ° kshitāḥ | . — 23. BM ye keneci ° ttarā diçāṁ (M °çaṁ) | .

नक्षत्रा वो भिपालेन्तु ये तां दिशमधिष्ठिता ॥
धनिष्ठा शतभिषा चैव उभौ प्रोष्ठपदा पि च ।
रेवत्यश्विनी चैव भरणी भवति सप्तमी ॥
ता पि वो अनुपालेन्तु भूमीये भवनेन च ।
क्षेमा च वो दिशो भोन्तु मा च वो पापमागमी । 5
लब्धार्थाश्च निवर्तेथ तेहि नक्षत्रेहि रक्षिता ॥
उत्तरस्मिं दिशोभागे अष्टौ देवकुमारियो ।
इला देवी सुरा देवी पृथिवी पद्मावती ॥
आशा श्रद्धा हिरी च श्री. . . . . समागता ।
ता पि वो अभिपालेन्तु भूमीये भवनेन च ॥ 10
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्थाश्च निवर्तेथ देवकन्याहि रक्षिता ॥
तासामधिपती राजा कुबेर इति नामतः ।
सर्वयक्षाधिपो राजा राक्षसेहि सह रक्षतु ॥
सो पि वो अभिपालेतु भूमीये भवनेन च । 15
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्थाश्च निवर्तेथ यक्षराक्षसरक्षिता ॥
उत्तरस्मिं दिशोभागे कैलासो नाम पर्वतः ।
आवासो यक्षसंघानां राक्षसानां निवेशनं ॥
सो पि वो अभिपालेतु भूमीये भवनेन च । 20
क्षेमा च वो दिशा भोन्तु मा च वो पापमागमी ।
लब्धार्थाश्च निवर्तेथ यक्षराक्षसरक्षिताः ॥
अष्टाविंशति नक्षत्रा सप्तसप्त चतुर्दिशं ।

1. B °dhishṭitā |. — 2. M dhanesṭa ca° B dhanishṭa ça° BM °proshṭapa° B °pi cā |. 3. BM °thāçvajā caiva bha(B °caiva ta)raṇī° M °ptamā ||. — 4. M °ve adhipā°. — 5. BM °bhonti mā° M °gamī |.
6. M °rthā ca ni° kshitāḥ |. — 7. M uttaresmiṃ° BM °sabhāde° °riye |. — 8. B hirīṇī devī su° M hirī devī su° madvatī ||. — 9. M āsā çraddhā ahirīva çlāṃ upi samāgato | B °hirī çirī tā pi°. — 10. M mā ca vo a° bhūmiye°.
11. M °gamī |. — 12. M °rthā ca ni° devakaññyā°. — 14. M °sihi sarakshitā ||. 15. BM °pālentu bhū°.
16. M °diçe bho°. — 17. M °rthā ca ni° kshitāḥ |. — 18. M uttaresmiṃ° B °diçā-bhā° BM °kailāço nā°. — 20. M °pālentu bhū°.
22. B labdhāç cārthā ni° M °kshitā |. — 23. B nakshatrāṇi° M °trā ca sapta sa°

सह चन्द्रसूर्येहि विमानेभि अनून[36₁*]कं ॥
द्वात्रिंशद्देवकन्यायो अष्ट अष्ट चतुर्दिशं ।
चत्वारश्च महाराजा लोकपाला यशस्विनः ।
गच्छमानयोनि रक्षन्ति ते चतुर्दिशं ॥
5 अष्ट श्रमणा ब्राह्मणा अष्ट जनपदेषु क्षत्रिया ।
अष्ट सहद्धका देवा सदा रक्षां करोन्तु वः ॥

तेषां दानि भगवता त्रीणि शरणगमनानि दिन्नानि । गच्छथ बुद्धशरणं गच्छथ धर्मशरणं गच्छथ अनागतं च भगवतो श्रावकसंघशरणं ॥ ते दानि बुद्धशरणं गता धर्मशरणं गता संघशरणं गता ॥ ते दानि आहन्सुः । वयं भगवं वाणि-
10 जका देशदेशानि च राज्यानि च चराम । साधु नो भगवां किंचिदेव धातुं यं वयं पूजयेम ॥ भगवता दानि तेषां शीर्षातो पाणिना केशानि ओतारित्वा दिन्नानि इमं केशस्तूपं कारयेथ नखानि च ओतारित्वा दिन्नानि इमं नखस्तूपं कारापेथ शिला च आगमिष्यन्ति तां च शिलां प्रतिष्ठापेथ ॥ तेहि दानि यत्र केशस्थाली नाम अधिष्ठानो तहिं केशस्तूपं कारापितं । वालुक्षो नाम नगरं तहिं
15 नखस्तूपं कारापितं । शिलुक्षं नामाधिष्ठानं तत्रापि शिला प्रतिष्ठापिता सा भगवता ऋद्धीये पाणिना क्षिप्ता ॥

भगवता दानि सप्तसप्ताहेहि एकूनपंचाशद्दिवसानि निराहारेण अपुष्पाह्नि-

1. M °manuṣya ° bhoti anunakaṃ |. — 2. M °devakañnyā vā aṣṭa a°. — 3. M °pāla ya°. — 4. M °jvalamānā ° nti ca caturdiçaṃ | B °nti catuçaṃ |. — 5. BM purimā(B °makāṃ) diçāṃ dhṛtarāṣṭro paçcimāṃ(M °çime ca) virupākṣo(M °kṣaḥ) dakṣiṇāṃ ca virūḍhako kuvero u(M °ro ca)ttarāṃ(B °rā) diçaṃ | aṣṭa çramaṇa(M °çrava)ṇā aṣṭa brā° M °deṣu ca | kṣatriyo a° B °ṣu kṣatriyā |.

6. B °dā rakṣā karantu° M °nto va |. — 7¹. M °dināni | B °nnāni ga°. — 7². B gacchatha | buddhaṃ çaraṇaṃ gacchatha dharmaçaraṇaṃ gacchatha | anā° M °dharmaçaraṇaṃ gacchatha saṃghaçaraṇaṃ anā° BM °bhagavatā çrā°. — 8. BM °buddhaçaraṇaṃ gatā saṃgha°. — 9¹. M °hansuḥ |. — 9². B °bhagavāṃ vā° M °bhagavan vāṇijakā deçadeçā° — 10. M °sādhu kiṃci° B °sāṃ kiṃci° BM °d darçanahetu(M °heto) yaṃ vayaṃ pūje(B °yujaye)ma |.

11. BM ° pāṇi(M °nā)nā keçāni otāritvā dinnāni | imaṃ(M °anāni idaṃ) ke° rayetha | na ° nnāni | i° M °kārāpetha çira ca āgamiṣyanti tāṃ° B °tāṃ ca çilā pra°. — 13. B °dāni keça° M °dāni keçasthāni nā ° dhiṣṭhānāto tahiṃ ° paṃ kārayetha kārāpitaṃ | B °taṃ çi°. — 14. *Omis par* B. M ° kārāpitaṃ |. — 15. M çilujaṃ nāmādhiṣṭhānaṃ tatrā° B çilakṣaṃ nāmā ° naṃ | tatrā° M °ṣṭhāpitā so bha ° riddhi pā°.

17. M atha khalu bhagavān dā° B bhagavāṃ dā° M °ptāhehi ekunapaṃ ° çaddivasikānāṃ vā ° ppataṃ tiraṃ tena bha° B °rpanam pitena bha° BM °gavato tathā abhicchandità(M °ndinā) |.

लोकं लोकासेति ॥ गंभीरो अयं मम धर्मः अभिसंबुद्धो निपुणो सूक्ष्मो दुरनु-
बोधो अतर्कावचरो पण्डितवेदनीयो सर्वलोकविप्रत्यनीको । आलयारामो खलु
पुनरयं आलयरतो आलयसमुदितो आलयारामायां च प्रजायां आलयरतायां
आलयसमुदितायां दुर्दृशमिमं स्थानं यदिदं हेतु इदंप्रत्ययः प्रतीत्यसमुत्पादः सर्वो-
5 पधिप्रतिनिःसर्गो पूर्वसंस्कारसमथधर्मापच्छेदः तृष्णाक्षयो विगतरागो निरोधो
निर्वाणं अहं च न परेषां देशयेयं परे च मे न विभावयेन्सुः सो मे स्या विघातः ॥
यं नूनाहं एको अरण्यपर्वते तूष्णीभूतो विहरेयं । इमा च गाथायो भगवतो
तायि वेलायि प्रतिभायेन्सुः ॥

प्रतिस्रोतगामिनं मार्गं गम्भीरं दुर्दृशं [मम] ।
10 न रागरक्ता द्रक्ष्यन्ति अलं दानि प्रकाशितुं ॥
कृच्छ्रेण मे अधिगतो अलं दानि प्रकाशितुं ।
अनुस्रोतं हि उह्यन्ति कामेषु ग्रसिता नराः ॥

भगवां उरुविल्वायां विहरति नैरंजनायास्तीरे अजपालन्यग्रोधमूले अचिराभि-
संबुद्धो ॥ अथ खलु भगवतो एकस्य रहोगतस्य प्रतिसंलीनस्य अयमेवरूपश्चेतसः
15 परिवितर्को उदपादि ॥ अधिगतो यदयं मया धर्मो गम्भीरो निपुणो सूक्ष्मो
दुरनुबोधो अतर्कितो अतर्कावचरो पण्डितवेदनीयो सर्वलोकविप्रत्यनीको अहं
चे परेषां देशयेयं परे च न आजानेन्सु सो मे स्या परमं विघातं । यं नूनाहं

1. M gambhīra ayaṃ dharma samabhisaṃbuddho parimaṇḍhu° B °dho atakira° M °rkāvacarā paṇḍi ° ye sarve loke pra° B °loke pratyanīya a°. — 2. BM ālayarā(M °ye ... khalu punar ayaṃ ālayato ālaya(M °ālmacārato āra)samuditā ālayārāmāyaṃ ca prajāyāṃ ālaya(B °yāṃ ārayara)tāyāṃ ālayasamuditāyāṃ du° M °sthānaṃ yam idaṃ hetuṃ imaṃ pratya ° tpādo sarve praṇidhiḥ pratiniḥ pūrva° B °dhi pratiniḥ pūrna° BM °ccheda kṛ° B °gataraṃ° M °haṃ ca taṃ pareṣāṃ° BM °yaṃ pareṣu me na ° vayetsuḥ so me (M °ma) syā vighātaḥ(M °ghāto) | .

7[1]. M °aṇyaparvate tū° BM °reya i°. — 7[2]. BM imāṃ ca gāthā(M °thāṃ) ca bha° B °gavatā tāye ve° BM °bhāshetsuḥ | . — 9. M °gnaṃ nastriraṃ du° B °durdṛśaṃ na° M °ṣaṃ ca rā°. — 10. BM °taṃ kṛ°.

12. M °srotehi ubyati kā°. — 13. M atha bhagavān ura° BM °yāṃ hare nai° M °janāyā tire ajapālaya grodhamule ° buddhā | . — 14. BM °pratisaṃlayanasya ° m evarū(M °rū)pa cetasaḥ°. — 15. M °dhigataṃ yad a° BM °mbhīro nipuṇo sūkshmo duranu(B °ranu)bodho atarkito(M °avitarko) atakāvacaro paṇḍi° M °lokavitarkaṇīya a° BM °haṃ ca pare ° yaṃ pareṣu(M °shu ca ca naṃ ājāneyu(M °nsuḥ) | so° M °syā pareṣu vacanaṃ vighātaṃ B °ghātaṃ | .

17. M yan nunā°.

सम्यक्संबुद्धानां दर्शावी तेन हि मारिष महाब्रह्मा याचे भगवन्तं स्वयमेव धर्मचक्र-प्रवर्तनाये ॥ अथ खलु महाब्रह्मा एकांसमुत्तरासंगं कृत्वा येन भगवां तेनाञ्जलिं प्रणामयित्वा भगवन्तं गाथाये ध्यभाषे ॥

उत्थेहि विजितसंग्राम पूर्णभरो त्वं अनृण विचर लोके ।
5 देशेहि सुगत धर्मं आज्ञातारो भविष्यन्ति ॥

अथ भगवां तूष्णी अभूषि ॥ अथ खलु महाब्रह्मा शक्रो देवानामिन्द्रो सुयामो च देवपुत्रो संतुषितो च देवपुत्रो निर्मितो च देवपुत्रो वशवर्ती च देवपुत्रो चत्वारो महाराजा अनेकयक्षशता अनेकयक्षशतपरिवारा भगवतो अनधिवासनां विदित्वा धर्मचक्रप्रवर्तनाय दुःखदौर्मनस्यजाता भगवतः पादौ शिरसा वन्दित्वा भगवंतं
10 प्रदक्षि[363b]णीकृत्वा तत्रैवान्तरहायेन्सु ॥

एवमेतं श्रूयति ॥

भगवां उरुविल्वायां विहरति नद्या नैरंजनाया तीरे अजपालन्यग्रोधमूले अचिराभिसंबुद्धो ॥ अथ खलु महाब्रह्मा अतिक्रान्तवर्णो अतिक्रान्ताये रात्र्यां केवलकल्पं अजपालन्यग्रोधमूलं वर्णेनावभासयित्वा येन भगवांस्तेनोपसंक्रमित्वा भग-
15 वतः पादौ शिरसा वन्दित्वा भगवन्तं प्रदक्षिणीकृत्वा एकान्तस्थितो महाब्रह्मा भगवन्तं गाथाये अध्यभाषि ॥

उत्थेहि विजितसंग्राम पूर्णभरो त्वं अनृण विचर लोके ।
देशेहि सुगत धर्मं आज्ञातारो भविष्यन्ति ॥

अथ खलु भगवान्महाब्रह्मां गाथाये प्रत्यभाषे ॥

20 प्रतिस्रोतगामिको मार्गो गम्भीरो दुर्दृशो [मम] ।
रागरक्ता न द्रक्ष्यन्ति अलं मे प्रकाशितु ॥

2. M °ekâṃsaṃ u° B °kâṃçaṃ u° M °aṃjaṃ kṛtvâ yena bhagavâṃs tenâñjaliṃ kṛtvâ praṇâ° thâye adhya°. — 4. B °jinaṃ° BM °pûrṇa (M °ṛṇaṃ) bhâro tu anṛṇa (M °aṇṛṇaṃ) vica° M °loka da° B °ke de°. — 5. M daçehi°.

6°. M °gavâṃ tuṣṇi°. — 6°. M °ndro supâmâ ca devaputro saṃtuṣitâ ca devaputro nirmito ca devaputrâ vaça° hârâjâno anekayakshaçatâ anekayakshaçataparivâro bhagavato adhivâ° B °rivâro bhaga° M °jâtâ bhagavato pâdau° bhagavantaṃ pra° M °traivântarhâyaṃ || B °hâyaṃsu ||.

11. BM °çruyati bha°. — 12. M °gavân uru° ti | nadyâṃ nai° yâ tîre° haya nya°. — 13. B °kevalaṃ kalpaṃ° M °kevalaṃ aja° mûlaṃ varṇenâbhibhâsayitvâ yena bhagavâṃs tenopa° mitvâ bhagavatâ pâ° ekânte asthâd ekântasthi°.

17. B °rṇabhâro tû anṛṇa vica° M °rṇabhârato aruṇa vica° BM °ke de°. — 18. M °dharma âjñâtârâ bha°. — 19. B °bhâbrâhma gâ° M °brahmâ gâ°. — 20. BM °r-dṛçyo aṃmâga°.

21. M °rakto na dra° B °kto na ukahya°.

मोचो कदा भेष्यति तिर्यग्योनिषु ॥
इमं विकृतसंदेहं दृष्ट्वा दुःशीलसंभवं ।
अप्युक्तो अदन्तो पि को शीलं न समाचरेत् ॥
स वै प्रमोदेषु रतो न .....
भवे सुशीलेष्वचलो ऽचलोपमो ।
व्याकर्षं त्वं अर्थदृशो मतीमां
मैत्रेयगोत्रो भवरागसूदनो ॥

नालको कात्यायनो भगवतः पादौ शिरसा वन्दित्वा भगवन्तमेतदुवाच ॥

पुरोहितो मह्यं पिता तोणेहारस्य राज्ञिनो ।
उत्पादेषु विद्यायुक्तो नक्षत्रेषु गतिंगतो ॥
तम्मे पिता अववासि अर्थकामानुकम्पको ।
बुद्धो खु पुत्र उत्पन्नो गच्छ प्राचीन प्रव्रज ॥
सो हं भगवन् अनुप्राप्तो साधु त्वं प्रव्रा[386b]जेहि मां ।
वैशारद्येहि संपन्नां भाषां भाषे तथागतो ॥
कात्यायनं ब्राह्मणं च एहि भिक्षूति आलपे ।
सा एतस्य प्रव्रज्या हि अभू च उपसंपदा ॥

आयुष्मां कात्यायनो आह ॥

अज्ञासि एतं वचनं असितस्य यथातथं ।
त्वां तु गौतम पृच्छामि सर्वधर्माण पारग ॥

2. B °kṛitaṁ saṁde° vaṁ s°. — 3. BM °pi kā ç(M °çi)laṁ na çubhācaret |. — 4. BM sa ca pramodo parato na(M °na yaṁ) bha° B °ve svaçīlashvalabalabalopamo | M °vet svaçīleshu calācalopamo |.

6. B °rshato tvatha dṛi° M °rsha tvarthadṛi° B °matimāṁ maitreya ° dana |. — 8. B °no bhagavaḥ pā° M °no bhagavato pā°. — 9. M °hitā mahya pi° B° mahya pi° M °tonihā° BM °no n°. — 10. M °tpādeshu vineyuko na° B °vinayukto° M °tiṁgataḥ | B °to ta°.

11. M taṁ me pi° BM °avacai° M °nukaṁpako |. — 12. M buddhesha tram utpa° B °ccha yāci ° vrajā so° M °vrajo |. — 13. M °bhavān anu° B °gavān anu° M °prāpto sādhu ca prajāhi māṁ | B °dhu pravrajāhi°. — 14. BM °saṁpanno vā°. — 15. M °tyāyanaṁ brā° B °ṇaṁ e° M °lapo |.

16. B °vrajyā abhū° M °bhūvanupa°. — 17. BM °yano atyā°. — 18. BM anyāsi e° M °vaṇanaḥ asi° BM °thātathā tvaṁ°. — 19. BM tvaṁ tu° B °gautame pṛicchāmi | sarve dha° M °gautamaṁ pṛicchasi | kātyāyanaṁ brāhmaṇānāṁ sarvadharmeṇa pāragaḥ | B °gaḥ asi°.

अनगारं उपेतस्य भिक्षाजीवं चिकीर्षतो ।
मुनि प्रव्याहर धर्मं मौनेयं उत्तमं पदं ॥

भगवानाह ॥

मौनेयं च पृच्छसि नाम दुःकरं दुरभिसंभुवं ।
हन्त ते तं च वक्ष्यामि संस्तम्भस्व दृढो भव ॥ 5
समानभावं कुर्वासि ग्रामे आक्रुष्टवन्दितं ।
मनोप्रदोषं रक्षेसि शान्तो चानुन्नतो भव ॥
उच्चावचा निश्चरन्ति दावे अग्निशिखा इव ।
नारी मुनिप्रलोभाये ताव त्वं मा प्रलोभये ॥
विरतो मैथुना धर्मा हित्वा कामं परोवरं । 10
अविरुद्धो असंरुद्धो ये सत्वा त्रसस्थावराः ॥
यथात्मनो तथान्येषां यथान्येषां तथात्मनो ।
आत्मानं उपमां कृत्वा नैव हिंसे न घातये ॥
हित्वानिह अनिच्छां पि अनिच्छो भोति निर्वृतो ।
त्यज इच्छां च लोभं च यत्र सक्ता पृथग्जनाः । 15
पण्डितो प्रतिपद्येय सो तरे नरकं इमं ॥
ततो रात्रिविवासातो ग्रामं पिण्डाय ओतरे ।
आह्वयं नाभिनन्देय अभिहारं च ग्रामतो ॥
न मुनि ग्राममासाद्य कुलेषु सहसा चरे ।

1. B anâgâ° M anâgâram upe° BM °sya çikshâ° M °cikîrshitâ | B °kîrshito | . — 2. M munînâ pratyahaṁ dharma mauno° B °pratyâhâraṁ dharmaṁ mâne°. — 4. M °prichâmi nâla kinti bhagavân dushkaraṁ° B °nâla kiṁti bhagavâṁ duh° M °bhisantupaṁ. — 5. M °taṁ vakshyâ° BM °saṁstaṁsya dṛ°.

6. M °sa bhogaṁ° BM °rṣhei ti(M °si i)me âkrushṭa vinde(M °nda)ti | . — 7. B °rakshasi° BM °kshânte câ°. — 8. BM °caranti devâṁ(M °vâ) agniçikhâṁ iyaṁ nâ°. — 9. M °nipraroblâye tâ° BM °va te mâṁ pra°. — 10. BM °thuno dharmo hi° B °kâmaparoyacet | M °kâmaparopayet | .

11. M avabuddho sattâ °tvâ tatra sthâvarâ | B °trase sthâ°. — 12. B athâtmanâ tathânyeshâṁ tathâtmano â° M athâtmanâ tathânyeshâṁ tamamora â°. — 13. M âtmanâṁ | u° BM °hiṁsa na ghâ° M °taya na hiṁsaya. — 14. BM hitvâna i(M °tvâ i)ha anicchâya anicche° M °bhoti ni°. — 15. BM °tra çaktâ° B °prigjanâh | .

16. B paṇḍitâ parivarjayâ so taro tara° M °to parivarjjeydano tare tara°. — 17. B °râtrîṁ nivâsato° M °râtriṁ nivâsitvâ grâ°. — 18. BM °bhinandeyâ a°. — 19. M °muni grâmasâdya° B °munînâ grâ° dya° chulesha sahasâcaro | M °hasacaro | .

घासेषी न च्छिन्नकथो न वाचां प्रेप्सुतां भणे ॥
स पात्रपाणी विचरेया अमूगो मूगसंमतो ।
तं तं दानं न निंदिया दातारं नावजानिया ॥
अदासि इति ते साधु नादासि भद्रमस्तु ते ।
5 उभयेनैव सदृशो वचनं विनिवर्तये ॥
सो पिण्डचारं चरित्वा वनान्तं अभिरक्षये ।
ऊनोदरो मिताहारो अल्पेच्छो स्वादलोलुपः ॥
सो वृक्षमूलोपगतो आसनोपगतो मुनि ।
ध्यापयति अतो भव्यं आत्मानं नातितोषये ॥
10 यस्यात्र सरिता नास्ति च्छिन्नस्रोतस्य भिक्षवः ।
कृत्याकृत्यप्रहीणस्य परिदाघो न विद्यति ॥
एवं अयनमाख्यातं संबुद्धेन प्रजानता ।
एको च अभिरमिष्यसि एवं गमिष्यसि दिशो दश ॥
एवं मौनेयं उपेष्यसि क्षुरधारोपमो भव ।
15 जिह्वाय तालुमाहाय तादृशो संयतो भव ॥
निरामगन्धो असितो वृक्षमूलपरायणो ।
एकासनस्य शिक्षासि श्रमणोपासनस्य च ॥
श्रुत्वा स्वचुरहं ध्यानं ध्यायिनां कामत्यागिनां ।

1. M ghâtesi no cchinnaghâto na° B ghâsesiṇo cchinnaghâso na vâcâ prâpnu bhaṇe | M °câ prâpnutâṁ°. — 2. M °trapâṇî vicareyâ grâme amukasaṁmtato | B °reyâ grâme amuko amukasaṁgato | . — 3. B taṁ dâna niṁdiyâ dâtârâ bhavatyayaṁ | M taṁ dâna niṁditâ dâtâ | dârâlâbha bhavatyayaṁ | . — 4. B °iti te sâdhvanandako bha° M °sâdhuḥ nandakâ bha °stu vo | . — 5. B °yeneva sadriço° M °naivam asadṛi°.

6. BM so pi piṇḍa° B °caritha vanantam° M °cariya carante a° B °rakaheye â°. — 7. M unnodaro pi trâso alpa° B °daro pi tâso | alpa° BM °syâlpalo° B °lupaḥso°. — 8. B °lopagato | â° M °muniḥ B °muni dhyâ°. — 9. B dhyâyeti | ato bhayâ â° M °yanti ato bhavyâ â° B °ye ya°. — 10. M yasya tra° B °sti | cchi° BM °çrotasya bhikshava(M °vaḥ) kṛi°.

11. BM kṛityo kṛityaprahîṇa(B °na)sya paridâgha(B °ghe)sam acyutaḥ || . — 12. M °khyâsi buddhena ca pra°. — 13. B eko ca â° M eko abhi° BM °ramishyâmi evaṁ gamishyâmi(M °shyati) daça diçâ | . — 14. B sâyau naṁ yaṁ upe° M kshuradhâropamâṁ savâṁ jaineyaṁ ca upeshyasi | bhave ji° B °mo || bhava ji°. — 15. M °hvâya tâlaçcam âsâ° BM °dṛiçaṁ saṁyato bhava(M °va | ).

16. M nicâmagandhe asito ca vṛikshamûle pa°. — 17. B ekâçanasya çikshasi° M °çishyasi° BM °çrama(M °çrava)nopasana°. — 18. M °haṁ syânaṁ dhyâyinâṁ kâmatyâgiṇâṁ | B °haṁ dhyâna dhyâyinâṁ kâmarâgiṇâṁ | .

तती हिरिं च श्रद्धां च भूयो [387ᵃ] शिक्षेय मामको ॥
न पारं द्विगुणायति नापि चैवं गुणायति ।
उच्चावचा प्रतिपदा श्रमणेन प्रकाशिता ॥
तं नदीषु विजानाति स्कंधेषु प्रदरेषु च ।
सन्नादयति पु घोषो शान्त एव महोदधिः ॥ 5
यं ऊनकं तं स्वनति यं पूरं शान्तमेव तं ।
ऊनकुम्भोपमो बालो ह्रदपूरो व पण्डितः ॥
यो मुनी बहु भाषति उपेतं अर्थसंहितं ।
जिर्याणां साचात्थुर्याय जानन्तो बहु भाषति ॥
यो च धीरो मितभाषी जानन्तो न बहु भाषति । 10
स मुनी मौनमर्हति स मुनी मौनमध्यगाति ॥

नालकप्रश्नं समाप्तं ॥

भगवा सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थं अभिसंभावयित्वा वाराणस्यां विहरति ऋषिवदने मृगदावे शास्ता देवानां च मनुष्याणां च विस्तरेण निदानं कृत्वा मथुरायां श्रेष्ठि आढ्यो महाधनो महाभोगो प्रभूतस्वापतेयो प्रभूतधन- 15 धान्यकोशकोष्ठागारो प्रभूतजातरूपरजतवित्तोपकरणो प्रभूतहस्त्यश्वाजगवेडको प्रभूतदासीदासकर्मकरपौरुषेयो । तस्य दानि श्रेष्ठिस्य त्रियन्तरा दारिका जाता ॥ सा दानि अनंगना ति कृत्वा परिव्राजिकाये दिन्ना । यदा संवृद्धा भवति ततो

1. B tato rirhi ca çaddhâṁ* M tato çishiṁ ca çaddhâṁ ca bhûyo nâmena çikshiya | çikshâ parimânena na* B *çikshiya nâmeta na*. — 2. BM na pâra dviguṇâyati(B *G | )nâ* M *pi câra guṇâyato B *ṇâyatâ uccâ*. — 3. M *câ pratipadyatâ | . — 4. M *nâti grâmaṇyena prakâçitâ ‖ B *nâti ondheshu pracareshu ca sa*. — 5. M saṁnâdayati punar ghoshaṁ çabdaṁ caivaṁ mahodadhe | B *ti kunagho çatam eva ma*.
6. M yaṁ mûlaṁ na tataḥ çaddpi yaṁ pû* B yaṁ ûnarkataṁ çataṁtiyaṁ paraṁ*. — 7. BC *pûro ca pa* M *ṇḍito | . — 8. BM *bahû bhâsha(M *sha)ti u* M *saṁhati | . — 9. M *kahâ kuravanti jânanto*. — 10. M *ro maṛitâbhaṇitaṁ ba* B *bhâṇitaṁ ba *shati sa* M *shanti.
11. M so muniḥ | maunam arha* B *rhati | sa* M *muniḥ mau* BM *gâti bhagavâṁ (M *vân) ‖ . — 12. M iti çrîmahâvastuavadâne nâ* BM *praçnâ sa*. — 13. M athânantaraṁ bhagavân sa* B *vâṁ saṁmya * harati | ṛi* M *ṛishipattane mṛi* B *çreshṭhî* M *çreshṭhiḥ âḍyo mahâdhano* BM *dhânyo koçakoshṭâgâro* M *ttopakaraṇasya* B *çvâjagaḍako* M *paurusheyâ | B *sheyâ | .
17. BM *çreshṭisya* M *triyaṁtarâ * jâtâḥ. — 18ᵃ. B *nnâ ya*. — 18ᵇ. M *saṁvṛiddho bha* B *saṁvṛiddho bhavati | tato naṁ pravraje* M *to taṁ pravrajehi ca vallikâ te bhashyanti B *ca vallikâ te bhavanti dhu*.

मां प्रव्राजेहि न वृत्तिका मे भेष्यति । धात्री च दिन्ना या तां दारिकां संवर्धेति यं च किंचिद् व्ययकर्मं तं श्रेष्ठिना नियच्छितं ॥ सा दानि यथा उत्पलं वा पद्मं वा पुण्डरीकं वा तथा संवर्धयिति यत्र काले विज्ञप्राप्ता ततो ताये परिव्राजिकाये प्रव्राजिता शिक्षापिता सर्वाणि परिव्राजकशास्त्राणि प्रबोधिता ॥

5 सा दानि अन्यमन्याहि परिव्राजिकाहि सार्धं समुल्लापं करोति न चास्या कोचित् शक्नोति उत्तरं संधितुं । सा एव अयमाख्यायति वादिप्रवादी सर्वशास्त्रविशारदा ॥ अपरो च ब्राह्मणो वेदपारगो सर्वशास्त्रविशारदो वैयाकरणो मतिंगतो वादिप्रवादी दक्षिणापथातो मथुरां आगतो ताम्रपात्रेण पार्श्वं वेठयित्वा महन्तीं उल्कां प्रज्वालेत्वा मथुरां प्रविशति । मध्येन अन्तरापणवीथीये

10 चेतं प्रदिशामि । अस्ति स सर्वाकुशलो यो मयेहि सार्धं कथयेय ॥ सो दानि माथुरकेहि वुच्चति ॥ निर्वापेहि एतामुल्कामिति इहास्माकं प्रव्राजिका अस्तीति बाला दहरा सा त्वया सा[387b]र्धं सप्तमं दिवसं कथयिष्यति यदि शक्नोसि ताये सार्धं कथयितुं ततः वादी ॥ सो दानि आह ॥ एवमस्तु अहं ताये परिव्राजिकाये सार्धं सप्तमं दिवसं कथयिष्यामि । तद्भवन्तेहि सर्वेहि भवितव्यं ॥

15 तेहि माथुरकेहि नैगमजानपदेहि सा परिव्राजिका शब्दापिता वुच्चति ॥ दक्षिणापथातो ब्राह्मणो आगतो वादी वेदपारगो व्याकरणो वादाभिप्रायो शक्ष्यसि तेन ब्राह्मणेन सार्धं सप्तमं दिवसं कथयितुं ॥ सा दानि आह ॥ बाढं शक्ष्यामि तेन वा अन्येन वा सार्धं कथयितुं । अहमपि वादाभिप्राया ॥ नैगमेहि परिव्राजिकाय श्रुत्वा मथुरायां चत्वरशृंगाटकवीथीमुखचचरामुखेषु घण्टा घोषापि-

1. BM dhotri° M °nnā vā tāṃ dārikā saṃ ° ti paṃ ca kiṃ ° eman taṃ çreshṭino nisyaṃvitaṃ ‖ B °çreshṭina nibmaṃcitaṃ | . — 2. M °tparuṃ vā padu° B °dumam vā pu ° ptā | tato° M °ptāni iti tato tāye velāye parivrājakāye pravrājito çishiṃ so° B °jito çishiṃ sakhi° M °jakāni çāstrā° B °strāṇi prabādhitā | . — 5. BM so dāni anyama(M °m aṃ)nyehi parivrājakāhi sā° B °roti na vāsya ko° M °roti na vāsya kocicchaknoti | u° B °raṃ | saṃ° M °raṃ sadhi° BM °tuṃ sā°.

6. BM °pravādi sarva° B °çāladā | . — 7. M °dipravādi da ° ṇa pārçvo veṭayi° BM °hantaṃ ulkā prajvā ° M °rāṃ praveçati | B °çati ma°. — 9. M °vīthiṃ cemaṃ praviçāmi | B °thīye tamaṃ praviçāsi | . — 10¹. B asti sarvakarṇaka çirā yo a° M asti sarvakoçilāryā ātmehi sā ° thamayeyaṃ B °yeyaṃ ‖ . — 10². BM °ti ni°.

11. B nirvāyehi° M °tvayā sārdha sapta ° saṃ kathayishyāmi yadi çaknoti ‖ tā ° taṃ tato vādi ‖ . — 13². M °vrājakā ° çishyami | . — 14. BM °vyaṃ te°. — 15¹. B °dehi | sā M °vrājakā°. — 15². B °kshiṇapathā° M °to vādipravādi va° M °sārdha sapta°.

17¹. M °āhatuḥ ‖ . — 17². M çakyāma te ° sārdha ka°. — 18¹. M °dāhiprā° BM °yā nai°. — 18². BM °vrājakāya(M °yo) çru° M °çriṃgāṭakavīthīmukhaṃçra° B °çriṃghāṭakavīthīṃ mukha° B °shāyitā | .

ता । सप्तमं दिवसं अमुकाये परिव्राजिकाये दक्षिणापथिकेन ब्राह्मणेन वादिना सार्धं कथासंलापं भविष्यति ॥ यो श्रोतुकामो सो संनिपततु ॥ तत्र रथेन समन्तेन मंचा बद्धा । महाजनकायो जनपदातो श्रुत्वा मथुरां आगच्छति ॥

तस्य ब्राह्मणस्य एतदभूषि । कीदृशी सा परिव्राजिका या मया सार्धं कथयिष्यति । यं नूनमहं तां परिव्राजिकां पश्येयं ॥ सो दानि कौतूहलेन पृच्छपरिपृच्छिकाये तत्तं परिव्राजिकानां आवसथं गतो गत्वा पृच्छति ॥ कतमा सा परिव्राजिका या सा तेन दक्षिणापथिकेन ब्राह्मणेन सार्धं महतीये परिषाये मध्ये कथयिष्यति ॥ तेन ये पृच्छिता तेहि सा परिव्राजिका उपदर्शिता स्वके परिवेणे विसृष्टेन स्वरेणाभिसंस्कारेण स्वाध्यायं करोन्ती ॥ सो ब्राह्मणो तां परिव्राजिकामुपसंक्रम्य पृच्छति ॥ भवति त्वं मया सार्धं परिषामध्ये कथयसि ॥ सा दानि आह ॥ 10 बाढं कः संदेहः अहं त्वया सार्धं परिषामध्ये कथयिष्यामि अन्येन वा कथावादिना ॥ सो दानि ब्राह्मणो तरुणो अभिरूपो सापि तरुणा परिव्राजिका अभिरूपा तेषां परस्परस्य मूले सह दर्शनेनातो प्रेमं निपतितं ॥ सो दानि ब्राह्मणो तां परिव्राजिकामाह ॥ भवति अहं त्वया अर्थिको ॥ सा परिव्राजिका आह ॥ अहं त्वया अर्थिका ॥ ब्राह्मणो आह ॥ भवति यथैवं तथा करोम यथाकार्यं 15 परस्परस्य समागमं च भवे परो च न जानेय । वयं तत्र [388ᵃ] परिषामध्ये अनिसमयं कृत्वा सज्ञापियाम । यो अस्माकं निगृह्येय तेन तस्य शिष्यत्वं उपगन्तव्यं । नाचाश्चर्यं एतं यं पुरुषेहि स्त्री निगृहीता । अथ पुनर्भवती मम निगृह्णेय ततः अहं सर्वलोकस्य कुत्सितो च परिभूतो च भवेयं द्व्यंगुलप्रज्ञाये स्त्रीमात्राये त्वं निगृहीतो ति । भवति तथा करोहि यथाहं भवति निगृह्णेयं ततो त्वं मम शिष्या 20

1. BM °vrājakāye° B °ṇāpathena brā° M °ditana sārddha ka°. — 2¹. M °patatuṃ | . — 2². M °ntena pañcā° B °cā buddhā ma°. — 5¹. M °ṇasyaitad a° B °shi kī°. — 5². M °vrājakā ° thayati | . — 5³. B yaṃ dūnam aha tāṃ° M yaṃ dūnaññm aha tāṃ° BM °vrājakāṃ°. — 5⁴. M °ni kotū° B °hareṇa pṛcchaparipṛcchakā° M °cchikāye taṃ parivrājakānāṃ āvasatha gato° B °nāṃ avasa°.

6. B °mā so parivrājako yā ° M °vrājakā sā te ° ṇāpathake ° sārddha maha°. — 8. M °ṣitā parimantena vi° B °svake parimante vi° BM °yaṃ karoti || . — 9. M °hmaṇoṃ tāṃ ° vrājakāṃ° BM °ti bha°. — 10¹. BM °rishama° M °thayishyati || .

11. BM °rishamadhye° M °mi | anayavyayena ca° B °mi | anyena vā çuddhā°. — 12. M °ṇo so pi taruṇo parivrājako abhirūpā° B °sāpi taruṇo parivrāji abhirūpā°. — 13. BM °vrājakā(M °ka)m ā°. — 15¹. B so pi° BM °vrājakā° M °āsi. — 15² B °karoma | yathā° M °karoma | yathālokaṃ ° maṃ ca jāneyaṃ B °ro ca jāneya va°.

16. M °bhisamayaṃ kṛ ° llayishyati | B °llayishyāma | . — 17. M °hyeyena tasya°. — 18¹. M °ryyaṃ evaṃ yaṃ ° strīhi nigṛihīto | . — 18². M atha khalu pu ° vati mama ni° B °vati mama ni° M °tato sarva ° taïdo ca pa ° yaṃ vyaṅgula ° hīteti | B °hīto ti. — 20. B bhavati | tathā ka ° çishyo bhavishyati | M °çishyo bhavati.

भविष्यसि । तदेवमस्माकं परस्परसमागमं भविष्यति । न च मे कोचि जानि-
ष्यति ॥ सा दानि परिव्राजिका आह ॥ एवं भवतु ॥ सो दानि ब्राह्मणो एवं
ताये परिव्राजिकाये सार्धं संमन्त्रेत्वा निर्धावितो ॥

ततो सप्तमे च दिवसे तत्र चतुरङ्गे बहूनि प्राणिसहस्राणि समागतानि राजा
5 माथुरो समागतो कुमारामात्या समागता श्रेष्ठिप्रमुखं नैगमं समागतं सार्थवाहप्र-
मुखो वाणिजग्रामो समागतो पुरोहितप्रमुखा ब्राह्मणपरिषा समागता अष्टादश
श्रेणीयो समागतायो श्रमणब्राह्मणतीर्थिकगणिका समागतानि ॥ सो पि ब्राह्मणो
समागतो सापि परिव्राजिका अनेकाहि परिव्राजिकाहि सार्धं समागता । समा-
गत्वा परिषामध्ये स्वकस्वकेषु आसनेषु निषण्णानि ॥ ब्राह्मणो उत्थित्वा सराजिकां
10 परिषां विज्ञपेति ॥ भवन्तो अस्माभिर्वटुकचापल्यं कृतं यदस्माभिः स्त्रीभिः सार्धं
संलापमभ्युपागतं । अनाश्चर्यं च भवेय यदहमेतां परिव्राजिकां निगृह्णेयं वदेन्सुः
किमाश्चर्यं यं पुरुषेण स्त्री निगृहीता ति । अथ खलु यं एषा परिव्राजिका मम
निगृह्णेया ततो हं सर्वलोकस्य कुत्सितो च परिभूतो च भवेयं व्यंगुणप्रज्ञाये स्त्रीमा-
त्राये त्वं निगृहीतो त्ति । ततः मम एषा सराजिका परिषा विज्ञप्ता । यदि
15 एषा परिव्राजिका परिषामध्ये मम शक्येय निगृहीतुं ततो मया एतस्या परिव्राजि-
काये शिष्येण भवितव्यं अथाहं एतां परिव्राजिकां परिषामध्ये निगृह्णेयं ततो एताये
मम शिष्यत्वमुपगन्तव्यं ॥ सा दानि परिव्राजिका ताये परिषाये पृच्छीयति ।

1[1]. BM °sparaṃ sa°. — 1[2]. B °ca maṃ ko° M °ca maṃ kvacij jāni°. — 2[1]. B so dā° vrājakām āha ‖ M °vrājakā°. — 2[2]. M etaṃ bhavataṃ | . — 2[3]. M °hmaṇaivaṃ° BM °vrājakā ° rddhaṃ samantre° B °to sa ca tato°. — 4. M sa ca tato° B °ptame ca divaso ta° BM °bahuni prā ° kumārāmātyā(M °tya) āgatā çreshṭipramukha nigamaṃ (B °mukhāni naigama samāgataṃ) sārtha(M °rthaṃ)vāhapramukhā(M °khaṃ) vāṇija° M °grāmaṃ samāgato pu ° shā samāgatāḥ ashṭā ° çreṇiyo samāgatayo çravaṇabrā° B °çramaṇabrāhmaṇo tīrthikagaṇī sa°.

7. M so brā° BM °to so pi parivrājakā anekāhā(M °nekehi) parivrājikā(M °jake)hi sā° M °gato B °gatā sa°. — 8. B °trā | pa° BM °rishamadhye° M °kasvakehi ā ° shaṇṇāni B °ṇṇāni brā°. — 9. M °rishā vi° B °peti bha°. — 10. B °r vaṭkaca° M °cāpalpaṃ kṛ ° strībhi sārddha saṃ°.

11. B °bhaveyaṃ ya° BM °vrājakāṃ° M °nigṛhṇeyaṃ vadetsuḥ | ki° B °gṛihneyaṃ vadetsuḥ ki° M °shena strī nigṛihītaṃ ti ‖ . — 12. B °esho pa° BM °vrājakā ° gṛihneyā° M °tato yaṃ sa ° veyaṃ vyaṃgu ° hīto ti | B °hīto nti | . — 14[1]. M tato ma° BM °esha sa° M °jñapto B °jñaptā ya°. — 14[2]. BM yadā esha(M °eva) parivrāji(M °ja)kā parishā-parishamadhye ° gṛihītuṃ tato(M °tuṃ | tataḥ) mayā | eta(M °yā eka)sya parivrāji-(M °ja)kāye ° tavyaṃ ‖ athāhaṃ etaṃ parivrāji(M °ja)kāṃ parishamadhye nigṛihneyaṃ | (M °hnīyaṃ) tato° M °çishyaṃ upa°.

17. B so dāni mama pari° M °parivrājakā°.

एष ब्राह्मण एवं जल्पति कथं तव उत्पद्यति ॥ सा दानि आह ॥ एवं भवतुति ॥

ब्राह्मणेन एवं समयं कृत्वा प[388b]रिव्राजिकाये दण्डकं प्रज्ञप्तं परिव्राजि-
कापि तं ब्राह्मणं समज्ञाप्रत्यनुभाषार्थं उत्तरं प्रत्युद्धरेति । एवमेतेहि वाक्यप्रति-
वाक्येहि तं दिवसं यापितं नैव एको एकस्य शक्नोति निगृहीतुं नैव अपरो अपरस्य ॥
एवं यथा एकं दिवसं तथा सप्तरात्रं गच्छति । न च एको एकस्य शक्नोति निगृ- 5
ह्णितुं नापि अपरो अपरस्य ॥ ते मनुष्या ततो परिषातो विकाले विकाले गृहं
गता सन्तो स्त्रीभिः पृच्छीयन्ति कुतो यूयं अद्य सप्तरात्रं उपादाय विकाले विकाले
आगच्छथ ॥ ते आहन्सुः ॥ न जानथ अस्माधीय वयं विकाले आगच्छाम । द-
क्षिणापथातो ब्राह्मणो आगतो षडङ्गवेदपारगो सर्वशास्त्रेषु गतिमतो वैयाकरणो
अद्य सप्तमं दिवसं ताये परिव्राजिकाये सार्धं संलपति न च शक्नोति निगृह्णितुं ॥ 10
ता दानि तेषां स्वामिकानां आहंसुः ॥ एवं पण्डितायो स्त्रीयो को पुरुषो स्त्रियं
अयतो बुद्धीये च मीमांसाये ॥ तेषां मनुष्याणां भवति ॥ यदि केनचिदुपायेन
सो ब्राह्मणो ताये परिव्राजिकाये परिगृह्णीयेय ततो इमा अस्माकं स्त्रियः सर्व-
कालं परिभवेन्सुः तृणसंज्ञां पि ता उत्पादयेन्सुः ॥ एवमं नगरं सर्वं योभूयेन तस्य
परिव्राजकस्य योभूयेन तस्या परिव्राजिकाये अनुकूलयं संवृत्तं ॥ अपरं दिवसं 15
परिषाये समागताये ब्राह्मणेन परिव्राजिकाये उत्तरं दिन्नं ताये च इच्छन्तिये तमु-
त्तरं न प्रत्यनुभाष्टं ततः अनेन हक्कारा क्षिप्ता ब्राह्मणस्य जयो परिव्राजिका निगृ-
हीता ॥ तेन दानि ब्राह्मणेन सा परिव्राजिका त्रिदण्डं आरूपयित्वा छत्रोपानहं
च गृह्णापेत्वा ततो परिषामध्यातो शिष्यधर्मेण निष्कासिता ॥ ब्राह्मणो पि परि-

1[1]. M °udyadyati ‖ . — 1[2]. BM °tâti brâ°. — 2. M °kâ parivrâjakâye daṇḍa ° ktaṁ | parivrâjakâ pi ° B °majya pra° M °majya pratyâlabdhâraṁ° BM °ttara pratyuddharehi | -- 3. M evaṁ tehi ° pitaṁ eko ° knoti nigṛihîtuṁ naivaṁ aparo parasya B °grahetuṁ | nai ° sya a°. — 5[1]. M °eka di°. — 5[2]. B °gṛihnituṁ ‖ nâ° M °gṛihituṁ | nâ° BM °sya te°.
6. M °shyâ te parishâto vikâle avikâle gṛihaṁ gatâ° B °gatâ santâ strî° BM °yûyaṁ asya sa° M °ya vikâle avikâle â°. — 8[1]. M °syârthâ va ° gacchâmaḥ. — 8[2]. M °tâye çreshṭidhitâye pari° BM °rddhaṁ saṁlapati(M °ti | ) na ca° M °nigṛihnituṁ | B °knoti gṛihnituṁ | .
11[1]. M so dâ° B te dâ° M °mikân âhansuḥ | . — 11[2]. B °ṇḍitâye strî° M °ṇḍitâye strîye ko ° sho striye a ° buddhiye vâ mî° B °ddhiye câ mî° BM °sâye te°. — 12[2]. M °pâyena brâ ° gṛihṇîyetaṁ | tato° B °gṛihṇîyeyaṁ tato° BM °imâṁ asmâ° M °rvakâle pa° B °vetsuḥ | tṛiṇa° BM °saṁjñâpita u° B °yetsuḥ | . — 14. BM °raṁ sarva yobhûyena tasya parivrâjakâ bhûye( B °vrâjikâ ye bhâyaḥ) na tasya parivrâjakâye akâra(M °kâlaṁ jâ° saṁvṛittâ(M °vṛitto) | . — 15. M °ṣaṇa parivrâjakâye uttaraṁ di ° cchanti etaṁ uraṁ na pra° B °pratyuddhâ° M °bhâshyaṁ | tato jaṁ° BM °na ukkâ° M °vrâjakâ nigṛihîto | .
18. M °daṇḍaṁ ârupayi° BM °cchatropâ° B °gṛihnâpe° M °gṛihnâyetvâ ta° BM °rishamadhyâ°. — 19. M °vrâjakâye âvasatha gacchati°

व्राजिकायै आवसथं गच्छति परोपरं च यथाभिप्रायं समागच्छन्ति ॥ अभीक्ष्णसं-
निपातेन सा परिव्राजिका आपन्नसत्वसंपन्ना संवृत्ता ॥

ते दानि मथुरायां निर्गम्य दक्षिणापथे जनपदचारिकां चरमाणा नवानां वा
दशानां वा मासानामत्ययेन चेतवत्ताकामनुप्राप्ता तहिं चेतवत्ताकायां रात्रिं
5 आवासिता ॥ तत्र सभायां सा परिव्राजिका प्रजाता । दारको जातो प्रासा-
दिको दर्शनीयो परमाये शुभवर्णपुष्कलतया स[389*]मन्वागतो ॥ तेहि तस्य
माणवकस्य सभाये जातो ति सभिको त्ति नाम कृतं ॥ तेहि दानि मातापितृहि
सो माणवको संवर्धियति ॥ यत्र काले सो माणवको विज्ञप्राप्तो संवृत्तो ततो पि
लिपिं शिक्षापितो गणनां धारणां निक्षेपणं सर्वाणि च परिव्राजकशास्त्राणि अधी-
10 यापितो वादिप्रवादी ॥ सो दानि समुद्रकुक्षिं प्रविष्टो अबुद्धे बुद्धं मार्गति । सो
दानि षोडश महाजनपदानि चरन्तो वाराणसीं आगतो ऋषिपतनं मृगदावं
भगवन्तमुपसंक्रान्तो ॥

अथ खलु सभिको परिव्राजको भगवता सार्धं संमोदनीयां कथां संमोदयित्वा
सारायणीयां कथां व्यतिसारयित्वा एकान्ते निषण्णो । सभिको परिव्राजको भग-
15 वन्तं प्रश्नं पृच्छे ॥

कांक्षाविचिकित्सो आगतो स्मि
प्रश्नं पृच्छितुं अभिकांक्षमाणो ।
तस्य सभिकस्य प्रश्नमेवं पृष्टं
भगवं अनुपूर्वमनुलोममनुसन्धिमनुधर्मं व्याकरोहि ॥

20 भगवानाह ॥

1. BM *satvā saṃ* M *vṛitto | . — 3. M *rāyāṃ ni* B *mya dakshiṇāpathaṃ ja* M *pathaṃ ja* caramāṇāṃ navānāṃ vā da* BM *tavaddikam a(M *kaṃ a)nu* M *prāpto ta* sito | B *sitā ta*. — 5¹. BM *yāṃ so pa* BM *vrājā(M *ja)kā prājātā dā*. — 5². M *jātaḥ prā* nāye paushkalatāye çubhavarṇṇatāye samanvā* BM *gato te*.

6. M *bhāryāye jāto ti sābhi* BM *konti nā*. — 7. B tehi dāni dāni mā* M *dāvi mā* saṃvarddhāyati | B *saṃvarddhayati | . — 8. B *kālaṃ so* M *kālaṃ sa māṇavako vijñāprā* BM *nāṃ vāraṇaṃ ni* M *kshepaṇaṃ sa* B *to vādipra*. — 10¹. M *ddhe buddha mā*. — 10². B *janapadāni ukaṇṭhato vā* M *shipattanaṃ mṛi*.

13. M *bhagavato sārddha saṃmodanī* dayitvā sāropaṇīyāṃ kathaṃ vya* B *nīyāṃ kathāṃ saṃmodayitvā sāropaṇīyāṃ sāropayitvā e* BM *sharṇṇo sa*. — 14. B *vrājiko* BM *cche kāṃ*.

16. B kāṃkācit kiṃcit sā ā* M kāṃkshāvicikitsā* BM *smi iti(M *ti | ) sabhiko praçnaṃ pṛicchatum abhi* M *māno B *ṇo ta*. — 18. BM *praçnaṃ me pṛishṭā || bhagavām anu(M *vān a)pūrvem anulomam a(M *maṃ a)nusandhim a(B *saṃdhi a)nudha*.

दूरा सभिका तुवमागतो सि
प्रश्नं प्रष्टुमिहाभिकांक्षमाणो ।
प्रश्नान्तकरो भवामि ते हं
अनुपूर्वमनुलोममनुसंधिमनुधर्मं व्याकरिष्यामि ॥

एवमुक्ते सभियो परिव्राजको भगवन्तं गाथाये प्रश्नमाषि ॥ 5

किंप्राप्तमाहु भिक्षुं
सुव्रतं किं सु कथं च दान्तमाहु ।
बुद्धो ति कथं प्रवुच्चति
पृष्टो मे भगवं अनुपूर्वमनुलोमं अनुसंधिमनुधर्मं व्याकरोहि ॥

एवमुक्ते भगवां सभिकं परिव्राजकमेतदुवाच ॥ 10

पथेन कृतेन आत्मना
अभिनिर्वाणगतो वितीर्णकांक्षी ।
विभवं च भवं च ज्ञात्व लोके
उषितवां क्षीणपुनर्भवो स भिक्षुः ॥
सर्वत्रउपेक्षो स्मृतिमां 15
न च सो हिंसति कंचि लोके ।
तीर्णो श्रमणो अनाविलो
उत्सन्नो यो न करोति आस्रवं ॥
यस्येन्द्रियाणि भावितानि

1. B *sabhikaḥ tvam āga* M *sabhikas tvam āga* BM *si praçnaṁ(M *çnāṁ) prashṭuṁ ihā kāṁ * ṇo pra*. — 3. BM praçnā(M *çnāṁ)ntakaro bhavāmi(M *vāpi) te aham anupūrvam a(M *rvaṁ a)nulo* M *anudharma vyā*. — 5. M *bhiko pa* B *shi kiṁ*.
6. BM *prāptaṁ mahābhikshuṇā iti sabhiko suvrato praçnaṁ | te sabhi(M *sati)ka prishṭo(M *shṭho) kiṁ su kathaṁ vadanti(M *nte)m āhuṁ bu*. — 8. B buddho ti su kathaṁ vuccati ‖ prishṭam ma* M buddho ti su kathaṁ pravuccati | priccha me bhagavan prishṭo anupūrvaṁ anulo* B *vaṁ prishṭo anupūrva anulo* M *nusandhi anu * rohi | . — 10. M evañum u.* gavān sabhiko pa * tad avocat | .
11. B yaṁ yena kṛi* M jayena kṛi* BM *tmano sabhiye bi(M *ye bhi) bhagavāṁ(B *vaṁ) abhinirvāṇaṁ gato vistirṇṇa(M *rṇṇe)kāṁkshā(M *kshā) vi*. — 12. BM *jñātvā loke mahitaṁ vā kshi* M *vo si kshu B *si | bhikshuḥ sa*. — 15. BM *pekshāṁ smṛi * ca se arhanta ciṁki(M *nta kiñci)loke ti*.
17. M *rṇṇa çravaṇo* BM *tsanto yena karoti(B *ti | ) āçravaṁ(B *çravaṁ) pa*. — 19. BM paçyendriyāṇi(M *yāni) bhā* M *viddhā ca sarvaloke B *loke ni*.

अध्यात्मं बहिर्धा च लोके ।
निर्विध्य इमं परं च लोकं
कालं रचति भावितो स दान्तो ॥
कल्पानि विकीर्य केवलानि
5 संसारदुःखानि चतूपपातं ।
विगतमलं विरजं अनंगणं
प्राप्तं जातिक्षयन्तमाहु भिक्षुं ॥

अथ खलु [389b] सभिको परिव्राजको भगवतो भाषितमभिनन्दित्वा भगवन्तमेव उत्तरि प्रश्नं पृच्छे ॥

10 किंप्राप्तिनमाहु ब्राह्मणं
श्रमणो किं नु कथं सुस्नातको त्ति ।
विशुद्धो नागो ति कथं प्रवुच्चति
प्रश्नं मे भगवं पृष्टो अनुपूर्वमनुलोमं अनुसन्धिमनुधर्मं व्याकरोहि ॥

एवमुक्ते भगवां सभिकं परिव्राजकमेतदुवाच ॥

15 बाहेत्व सर्वपापकानि
विमलो साधुसमाहितो स्थितात्मा ।
संसारमतीत्य केवलं
उषितवां क्षीणपुनर्भवो स ब्रह्मा ॥
समिताविं प्रहाय पुण्यविपाकं
20 विरतो ज्ञात्व इमं परं च लोकं ।

2. B nividya imaṁ pañcaraloke kālaṁ* M *rvidya imaṁ pañcacalokakācaṁ rakala*. — 4. M kalpāṇi vi* B *vivikirya * catuyapādaṁ | M *caryāpādaṁ | .

6. B vigatamalajo anaṁgano prā* M vigataṁ alajaṁ anaṅgaprā* kshayaṁ ta* BM *m āha bhikshuṁ | . — 8. B *ha sa sabhikā pa* M *tvā bhagavam evam utta* çnaṁ paripṛi*. — 10. BM *prāptenam āhu brā(M *na āhur brā)hmaṇo ti sabhiko çrama(M *çrava)ṇa kiṁ suḥ ka * takonti vi*.

12. BM *thaṁ nāgo ti vuccati | pra* M *çnaṁ bha* BM *gavāṁ pṛi*. — 14. M *gavān sabhi * jakaṁ eta*. — 15. BM vāhi(M *hiṁ)tvaṁ sarvapāpāni sabhikonti bhagavāṁ vi* B *dhunohito | sthi* M *hitaḥ | sthitāmmā B *tmā saṁ*.

17. M saṁmāram ayatya * shitamaya kshiṇapunarbhava sa hmā B *shita te yaṁ kshiṇaṁ punarbhava | sa brahmā sa*. — 19. M sapitāvi prabhāye pu* B *prabhāve puṇyāvi* BM *pākaṁ virato jñātvā i * lokaṁ jñā*.

जातीमरणं उपातिवृत्तो
श्रमणो तादि प्रवुच्चति तथत्वा ॥
विस्तापिय सर्वपापकानि
अध्यात्मं बहिर्धा च सर्वलोके ।
देवमनुष्येहि कल्पितानि  5
कल्पं नेति पुनर् जातको मे ॥
अगु न करोति किंचि लोके
सर्वयोगेहि विसृज्य बन्धनानि ।
सर्वत्र अनिश्रितो विमुक्तो
नागो तादि प्रवुच्चति तथत्वा ।  10

अथ खलु सभिको परिव्राजको भगवन्तमेतदुवाच ॥

किमाहिन्नमाहु वेदको ति
अनुविदितं किन्ति कथन्ति वीर्यवा ति ।
आजानेयो कहिन्ति नाम भोति
प्रश्नं मे भगवं पृष्टो अनुपूर्वमनुलोममनुसंधिमनुधर्मं व्याकरोहि ॥  15

एवमुक्ते भगवां सभिकं परिव्राजकमेतदुवाच ॥

वेदानि विचार्य केवलानि
श्रमणानां . . . . . . ।
सो सर्ववेदनासु वीतरागो
सर्ववेदनामतीत्य वेदको ति ॥  20

1. BM jñâtimaraṇam̃ ‖ upâdâbhivṛitta çrama( M °çrava)no bhâvayi pra°. — 3. BM kim̃ snâ° M °pâpâni a° B °ni | a° BM °loke de°. — 5. BM °ni kalpa ne° M °punaḥ snâ° BM °ko me aṅge°.

7. BM aṅgama ka° cilloke° dhanâni sa°. — 9. BM °aniçrito(B °to | ) vimukto bhâga tâye pra°.

12. BM °ptinâma vedako ti sabhiko anuvidenti ki° M °katham̃ iti iyam̃ vâdi B °tham tîrṇavâdi A°. — 14. BM °yo kâhinti(B °hiti) kâma° B °bhoti ‖ pra° gavam̃ pri° M °gavân prishṭo° B °pûrvam anu° M °anusandhim a° B °nudharma vyâ°.

16. M evam̃m u° gavân sabhi° B °jakam̃m e° M °cheti ‖ . — 17. BM °lâni sa-bhiyatti(M °bhiyati) bhagavâm̃ çrama(M °vân çrava)ṇânâm̃ | . — 19. B so sarva-vam̃ vedanâ° M so sarve ve° BM °su [illegible]° nâm adhitya° M °vedako B° ko ca abhâ°.

अभावित्व प्रपंचनामरूपं
अध्यात्मं वहिर्धा च रागमूलं ।
यो समानो रागमूले बंधनप्रमुक्तो
अनुविदितो तादि प्रवुच्चति तथत्वा ॥
5 यः प्रहीणबन्धनो प्रहाणवां
सर्वदुःखक्षयं जनेत्वा ।
नार्यान् सर्वत्र न रज्यति
विरजो वीर्यवान्प्रवुच्चति तथत्वा ॥
यस्य बन्धनानि संवृत्तानि
10 अध्यात्मं वहिर्धा च सर्वलोके ।
सर्वरागबन्धनप्रमुक्तो
आजानेयो ति तमाहु भूरिप्रज्ञा ॥

अथ खलु सभिको परिव्राजको भगवन्तं प्रश्नं पृच्छति ॥

क्षेत्रज्ञो खलु पुनर्नाम भवति
15 इति सभिको प्रश्नं पृच्छेत् मुनिं ।
तत्ते मुनी नाम कथं प्रवुच्चति
प्रश्नं मे भगवं पृष्टो अनुपूर्वमनुलोमं अनुसंधिमनुधर्मं व्याकरोहि ॥

एवमुक्ते भगवान् सभिकं परिव्राजकमेतदुवाच ॥

क्षेत्राणि सं[390*]यम केवलानि
20 दिव्यं मानुषं यं च ब्राह्मं क्षेत्रं ।

1. B abhavitva ca nâmarû* M âbhavitva yantamarû * tmaṁ ca vahirddhâ* B *rddhâra rogalbhâ* BM *taṁ yo*. — 3. B *no râgmûre baṁdhanaprayukto anunihito taye pravu* M *no râgmu evaṁ bandhana * nuhftitâtaye pra* BM *ti ‖ tathatvâ ya*. — 5. BM ya prahînaba * hâṇaṁ ca sarva * yaṁ jñâne nâ*.

7. BM nârye(M *ryye)ṇa sarva* B *kshati ciraje vi * ti | tathâ tra* M *ti | tathâ 'tra*. — 9. BM *bandhâ(B *ndhâni) saṁvṛtitâni * ke sa*.

11. BM *rvarâ(M *ro)galobhadoshamoha(M *lo)mânamrakshaha * neya(M *neya) tam âhur bhû(M *hu | bhû)riprajño ‖. — 13. M *jaka bha*. — 14. B kshetrejño *bhavati | i* BM *bhiko bhagavantaṁ pra* B *çnaṁ prasche* M *pṛcchetsuḥ mu*.

16. M *muni nâma kathaṁ pravu* BM *gavaṁ pṛ* M *lomam anu*. — 19. M kshetrâṇi saṁyama kahalâni ‖ ‖ sabhiko âha ‖ bhagavân divyaṁ* B kshetrâṇi saṁ[f° 390*]-yyama kaṁbalâni ‖ ‖ sabhiko âha ‖ bhagavâṁ di * shaṁ paṁ ca brâ* M *brâhmaṇaṁ kshe* BM *traṁ ca sa*.

स सर्वमूलक्षेत्रबन्धनात्प्रमुक्तो
क्षेत्रज्ञो तायि प्रवुच्चति तथत्वा ॥
कोशानि विचार्य केवलानि
दिव्यं मानुषं यं च ब्रह्मकोशं ।
स सर्वकोशबन्धनात्प्रमुक्तो 5
कुशलो तायि प्रवुच्चति तथात्वा ॥
विचार्य उभयानि प्रहीणानि
अध्यात्म बहिर्धा च शुक्लमूलं ।
कृष्णमूलमुपातिवृत्तो
पण्डितो तायि प्रवुच्चति तथात्वा ॥ 10
सतां च असतां च ज्ञात्व धर्मं
अध्यात्म बहिर्धा च मुक्तचित्तो ।
देवमनुष्येहि पूजियो सो
संगमजालमतीत्य सो मुनि ॥

अथ खलु सभिको परिव्राजको भगवन्तमेतदुवाच ॥ 15

श्रोत्रियो . . . . . . . .
. . . . . . . . . . . . . . ।
. . . . . . किं नु नाम भोति
प्रश्नं मे भगवं पृष्टो अनुपूर्वमनुलोममनुसन्धिमनुधर्मं व्याकरोहि ॥

एवमुक्ते भगवां सभिकं परिव्राजकमेतदुवाच ॥ 20

श्रुत्वा सर्वधर्ममभिज्ञाय
सावद्यमनवद्यं च सदेवके लोके ।

1. BM °ndhanāt pramu° M °kto kshatrajña tāye pra° B °tāye pra° BM °ti | tathātmā (M °amām) kle°. — 3. BM kleçāni vi° hmakshetram. — 5. BM pramukto ko(M °ko)çabandhanāt || (M °nā) pramukto kuçala tāye ca pravu(M °ca punar u)ccati( M °ti | ) tathātmā(M °amām) tāni°.

7. BM tāni ubha° M °pāni ātmavahirdhyāni çu° B °lam u°. — 9. M upāvṛito pa° B °mālam upānirṛi° BM °ṇḍitāye(B °ye pra)vuccati | tathātmā saa°.

11. B asantā ca jñātvā dha° M asanto ca jñātvā dha° BM °cittā de°. — 13. BM °pūjaye so° M °saṃmaṃjala° BM °so mati || . — 15. M °bhiko bhikshu pa° tad avocat | .

16. M çrotiyeshu ca nāma āsti kiṃ nu° B çrotriyo khattumā sumākāti ca kiṃ nu° BM °bhoti ca pra° B °gavām pṛi° M °gavān pṛishṭo ° dharma vyā°. — 20. M evam u° gavān sabhi°.

21. M çrutvā hi sa° BM °jñāya sabhikonti bhagavantaṃ sā ° loke s°.

असमो अपरिग्रहो विशुद्धो
अनिश्रो तायि तमाहु श्रोत्रियन्ति ॥
हित्वा आलयानि आस्रवाणि
बन्धनानि अतिवृत्तो नेति ।
गर्भशय्यं अरतो सर्वपापकेहि
आर्यो तायि प्रवुच्चति तथत्वा ॥
यो मे चरणेहि प्राप्तप्राप्तो
सम्यग्ज्ञात्व उपेत्य सर्वधर्मां ।
विद्याचरणेन सो उपेतो
चरणवा तायि प्रवुच्चति तथात्वा ॥
दुःखविपाकं यदस्ति किंचिद् धर्मं
ऊर्ध्वं अधो तिर्यकसदेवकस्मिं ।
परिवर्जयित्वा परिज्ञाचारी
मायं मानं च अथो पि क्रोधलोभं ।
पर्यन्तमकासि नामरूपं
तं परिव्राजकमाहु प्राप्तप्राप्तं ॥

अथ खलु सभिको भगवतो सुभाषितमभिनन्दित्वा अनुमोदित्वा भगवन्तमि-माहि सारूप्याहि गाथाभिरभिस्तवे ॥

यानि च त्रीणि यानि च षष्टि
श्रमणप्रवादनिश्रितानि भूरिप्रज्ञ ।
संज्ञाक्षरसंज्ञानिश्रितानि

1. B amamo° M agamo° B °ddho anighā tāyi tenāhu çotriyanti hi° M °yi mo tenāhu çotriyaṁ ti. — 3. M hitvā ālepati | ā° B hitvā ālepati ā° M °āsanāni bandhanāni anivartiāhu neti B °ndhanāti anivartīshu neti ga°. — 5. BM garbhaçeyya ara(M °çaryya are)-mo sarva ° hi ariyo tāpi pra° B °ti | tatheshāṁ asaṁ yo° M °ti tatheshāṁ asaṁtā.
7. M yo me varaṇe ° pto saṁnya ° dharmā B °rmāṁ vi°. — 9. M °dyācaraṇa so° BM °to ca(B °to vajraṇe vā tāpi pravuccati | ta° B °thā tamā du° M °thātmā.
11. BM °dharma(B °rma ūrddhaṁ) || atha virya(M °ryya) sade ° smiṁ pa°. — 13. B °varjiyitvā° BM °i(B °ri | )māryamānaṁ ca atho pi° B °krotalābha paryo° M °lo-bha parya°. — 15. B °kāçi nāma kūpetaṁ || pa° M °nāma kūpetaṁ pa ° m āhuḥ prāpta-prāptā || B °hu || prāptaprāptā || .
17. M °gāthām abhi° B °stave yā°. — 19. M yāni ca triṇi yāni ca shashṭhi çravaṇa-pra° BM °jña saṁ°.
21. M °kshayaṁ saṁjñā° B °ksharaṁ saṁjñā ° virya | arāsanamāgā anta° M °viryya aràçasamāgā a°.

ओसरणानि वीर ओसरेहि मामं ॥
अन्तको सि दुःखस्य पारगो सि धर्माणां
सम्यक्संबुद्धो सि अनास्रवो सि ।
द्युतिमां धृतिमां प्रभूतप्रज्ञो
दुःखस्यान्तकरो सु वीतरागो ॥ 5
मुनि मौनेयपदेषु प्राप्तिप्राप्तो अकंपियो ।
अतुल्य आदित्यबन्धु विमुक्तिदो शुभव्रतो ॥
तस्य ते नागनागस्य महावीरस्य भाषतो ।
सर्वदेवतानुमोदन्ति उभी नारदपर्वता ॥
अहं कांक्षितमन्वे[390b]षि तं मे आकार्षि चक्षुमां । 10
उपयासा च ते सर्वे विध्वस्ता विनलीकृता ॥
अद्धा मुनि सि संबुद्धो नास्ति नीवरणानि च ।
एवं पुण्ये च पापे च उभयत्र न लिप्यसे ॥
प्रीतिभूतो दमप्राप्तो द्युतिमां सत्यविक्रमां ।
पादां वीर प्रसारेहि सभिको वन्दि शास्तुनो ॥ 15

सो दानि भगवता ब्रह्मचर्यभावे विनीतो एहिभिक्षुकाये च प्रव्राजितो उपसंपादितो । एषा आयुष्मतो सभिकस्य प्रव्रज्या उपसंपदा भिक्षुभावो ॥

सभिकस्य वस्तु प्रश्ना च आत्मवचया प्रव्रज्या समाप्तं ॥

भगवां वाराणस्यां विहरे वरणाये नदीये पारे शास्ता देवानां च मनुष्याणां च विस्तरेण निदानं कृत्वा तस्या दानि वरणाये नदीये कूले महान्यग्रोधवृक्षो 20 मूलवन्तो च स्कन्धवन्तो च शाखापत्रपलाशवन्तो च प्रासादिको प्रसादनीयो नीलो

2. B °go si | dha° M °ṇāṁ saṁmya° B °buddhoṁ anāçravo vi° M °si | anāçrava vi°. — 5. BM vimuçyati(M °tiṁ)māṁ dhṛi° prajñā duhkhasyāntaṁkaro(M °ro)ṣu vītarāgo mu°.
6. BM °maunapadeshu akaṁpiyo akhilam atulya°. — 7. B °muktadaṁ çubhavrata | M °kṛdaṁ çubhavratah ta°. — 8. BM °shato sa°. — 9. BM °nti obhau°. — 10. BM °haṁ rakshitam anve° kshusho ||.
11. BM upādāyāsā° M °sarva vidhvastā vilalī° B °stā vilatkṛi°. — 12. B addhā mu° M atha vā mu° buddhaṁ nāntvaraṇā°. — 13. BM sarve(M °rva) puṇye ca pāpāyikā n°. — 14. BM çiti(M °ti)bhūta saprāptā çyuti° M °kramaṁ | . — 15. M °vīra prasādehi°.
16. M °bhāva vinito | e° BM °pravraji ° dito e°. — 17. BM saha ā° M °bhāvaḥ || . — 18. M iti çrīmahāvastuavadāne sabhi°. — 19. M atha bhagavān vārā° BM °tasya dā° M °diye kule° BM °vṛiksha mū° B °traphalāpalā° M °dike prasamadanīyo ° megho saṁkāço B °ghasakāço ta°.

अञ्जनमेघसंकाशो ॥ तत्र न्यग्रोधे यदृच्छया पुत्रकेन उपयाचितं तस्य च उपया-
चनं समृद्धं । तेन तस्य न्यग्रोधस्य महापूजासत्कारं कृतं । तस्य दानि पुत्रस्य
दृष्टानुकृतिमापद्यन्ता अपरापरे च स्त्रियो च तत्र न्यग्रोधे सत्योपयाचनं ति कृत्वा
उपयाचन्ति सर्वाये वाराणसीये तं न्यग्रोधं सत्योपयाचनातो अभिज्ञातो यो च
5 तत्र न्यग्रोधे उपयाचति तं तस्य उपयाचनं समृध्यति ।

शुभाये पूर्वचरितो स्ति कोचिद्
अयं च दैवप्रतिपातमेति ।
यदृच्छया तं पदमुपनेति
एमेव सेन्ति कुदर्शनानि ॥

10 वाराणस्यां च नगरे श्रेष्ठि आढ्यो महाधनो महाभोगो प्रभूतभोगो प्रभूतस्वाप-
तेयो प्रभूतधनधान्यकोशकोष्ठागारो प्रभूतजातरूपरजतवित्तोपकरणो प्रभूतहस्त्य-
श्वाजगवेडको प्रभूतदासीदासकर्मकरपौरुषेयो अपुत्रो । तेन दानि पुत्राय बहूनि
यष्टोपयाचितशतानि यथा मे पुत्रो भवेयाति न च भवति ॥ ताये दानि श्रेष्ठि-
भार्याये श्रुतं वरणाये नदीये कूले न्यग्रोधो सत्योपयाचनं तत्र यो यं याचति तस्य
15 तं उपयाचनं समृध्यति ॥ ताये दानि श्रेष्ठिभार्याये तस्य श्रेष्ठिस्य आरोचितं ।
आर्यपुत्र श्रुतं मे वरणाये नदीये कूले महान्यग्रोधो सत्योपयाचनो तत्र यो यं या-
चति तस्य तं समृध्यति । गच्छाम तत्र [391ᵃ] न्यग्रोधे पुत्रमुपयाचेमः ॥
श्रेष्ठि सपरिवारो महर्द्धिये समृद्धिये तहिं न्यग्रोधं गतो तहिं गत्वा तस्य न्यग्रो-
धस्य महापूजासत्कारं कृत्वा ताये भार्याये सार्धं श्रेष्ठिना तत्र न्यग्रोधं उपयाचितं ।

1. BM °ddhaṁ te°. — 2[1]. M °tasya copayâcanaṁ samṛiddhaṁ | tena tasya nya°. — 3[2]. BM °striyâ ca tatra nyagrodhe satyo(B °tyopa)yâcanaṁ ti kṛi° âye taṁ nyagrodha (B °dha) satyo° M °jñâto abhijñâto yâ ca tatra° B °jñâto yâ ca tatra°.

6. B subhâse pûrvacaritoti kiñcid ayaṁ ca daivaṁ pra° M °ritâeti kiñcid ayaṁ ca devaṁ pra° BM °pâtim a°. — 8. BM °taṁ param u° B °panayati | evam enti° M °pana-matiṁ evam enti°. — 10. B °çreshṭi âḍhyo° M °çreshṭi âdyo mahâdhano mahâbhogo prabhûtasvâ° BM °dhânya(M °nyâ)koçakoshṭâgâ° M °ttopakaraṇaḥ prabhûtaha ° jagaḍa-vedâ pra° B °vedâ pra° M °sheyâ a° BM °tro te°.

12. BM °tarthe ba° M °na ca me bhavati | . — 13. BM °çreshṭibhâ° M °diye ko-lena mahânya ° tyopayâcanâ tatra yâtraṁ yâcayati tasya° B °aya te u° M °mṛiddhyati | . — 15. BM °ni çreshṭibhâ° B °çreshṭisya° BM °taṁ â°.

16. M °diye kule ° grodhamule satyopayâcanâ tatra yo yaṁ jâcati | tasya° B °tyopacâ-rayo tatra yo yaṁ yâcati | tasya° BM °mṛiddhyati | (M °ti). — 17. M °grodha pu° ccma. — 18. BM çreshṭi sapari° M °ddhiye tahiṁ nyagrodhaṁ gataḥ tahiṁ ° çreshṭinâ ta° BM °tra nyagrodha(M °dhe) upa°.

इच्छामि तव मूलातो पुत्रं यदि मे पुत्रो जातो भविष्यति ततो इह देवकुलं प्रतिष्ठापयिष्यं महांतं च ते पूजासत्कारं करिष्यामीति ।

स्त्रियः समर्था पुरुषा नियोक्तुं
यो तत्र भद्रो स्त्रिय एव मूलं ।
ये चापि संग्रामहता नरेन्द्रा
तेषां घ्नयो स्त्रिय एव मूलं ॥

ताये पि श्रेष्ठिभार्याये उपयाचितं ॥ त्वं न्यग्रोध सत्यवाचनो श्रूयसि । यथा यथा ते श्रेष्ठिना देवकुलं प्रतियत्तं पूजासत्कारं च तथा करिष्यामि यथ मे पुत्रं न दास्यसि ततो ते मूलानि समूलकं छिन्दापयिष्यामि ॥ यन्नामा वृक्षो तन्नामा वृक्षदेवता तत्र प्रतिवसति । तत्र न्यग्रोधे न्यग्रोधो नाम देवपुत्रो प्रतिवसति ॥ सो दानि देवपुत्रो ताये श्रेष्ठिभार्याये तथा उपयाचितो समानो भीतो । अहं न कस्य चिद्दीमिनापि आच्छिन्दामि एषा च मे श्रेष्ठिभार्या एवं याचति । यदि एतस्या पुत्रो न भविष्यति परशुना मे इमं भवनं छेदापयिष्यति ॥ तेन न्यग्रोधेन देवपुत्रेण शक्रो देवानामिन्द्रो अधीष्टो । अहं कौशिक नेव कस्यचिद्दिमिनापि आच्छिन्दामि मम श्रेष्ठिना भवने पूजासत्कारं कृत्वा एवं चोपयाचितं तदिच्छामि तथा क्रियमाणं यथा तस्य वाराणसीयस्य श्रेष्ठिस्य पुत्रो भवेय मा मे तं भवनं छिन्देया ॥ सो दानि देवपुत्रो शक्रेण देवानामिन्द्रेणाश्वासितो । मा भाहि तथा करिष्यामि यथा तस्य पुत्रो भविष्यति तव भवनं न छिन्दिष्यति ॥

1. BM °di se putro jā(M °ro yā)to bhavishyati || tato i ° bhām ca te pū°. — 3. BM striyaḥ(M °yo) samasamarthā bhavanti purushāṇi vuktaṁ so tatra bhadrastriyayevaṁ(M °striyam eva) mū°. — 5. BM °grāmaṁ mahatā ca narendrā(M °ndro) te ° striyam eva mū°.

7¹. BM °çreshṭhibhāryāye upajāci° B °taṁ tvaṁ°. — 7². BM °no çruyasi | . — 7³. BM yato ya(B °to pa)ṭhāto çreshṭinā° M °rishyati || atha te putraṁ ° te mūlanāri sa° BM °yishyāmaḥ | . — 9. M yaṁnāmo vṛiksho taṁnāmo tatra vṛiddho vṛikshade° B yannāmā tatra vṛiddho vṛikshade° BM °tra pravisati | . — 10. M tatra nyagrodhasya nyagrodha nā°.

11¹. BM °çreshṭhibhāryā(M °ryāṁ)ye° B °bhīto a° M °bhīto 'haṁ°. — 11². B °cid acchindāma e° M °cid acchindāmi mama çreshṭhibhāryā eko ca me e° B °çreshṭibhā°. — 12. BM °etasya pu° B °vishyati caçvaryena me° M °vishyati aiçvaryyeṇa me° B °naṁ chadā°. — 13. B °adhishṭo | M °adhishṭhito | . — 14. M °naivaṁ kasyacid acchi° B °pi acchiṁdāmi° BM °mama çreshṭinā bhavane pu° M °evaṁ vopayācitaṁ | tad icchāmi taṁthā kriyamānaṁ yathā° B °kriyamānaṁ tathā° M °yasiṁ tasya çreshṭiya pu° B °çreshṭiya pu° cchidyayā || M °cchindeya | .

17¹. BM °sito mā°. — 17². BM °shyāmi | ya° M °naṁ | cchi° B °naṁ na cchiṁdishyati | .

तहिं दानि त्रयस्त्रिंशभवने अपरो देवपुत्रो कृतपुण्यो महेशाख्यो महर्द्धिको महानुभावो कृताधिकारो पुरिमकेहि सम्यक्संबुद्धेहि परिपक्वकुशलमूलो आसन्नभूतो निर्वाणस्य एकजातिप्रतिबद्धो च्यवनधर्मो त्रयस्त्रिंशेषु देवनिकायेषु । सो शक्रेण देवानामिन्द्रेण वुच्यति । त्वं च्यवनधर्मो यं च ते च्यवनधर्मनिमित्तानि 5 प्रादुर्भूतानि च्यविष्यसि उपपद्यिष्यसि ततो च वाराणस्यां श्रेष्ठिस्य भार्याये कुक्षिस्मिं उपपद्याहि ॥ सो दानि देवपुत्रो [391b] शक्रं देवानामिन्द्रमाह ॥ ममाभिप्रायो मनुष्येषूपपद्यित्वा बुद्धस्य भगवतो शासने प्रव्रजिष्यामि प्रव्रजित्वा च दुःखस्यान्तं करिष्यामि । ततो न शक्यं तत्र श्रेष्ठिकुले उपपद्यितुं यत्कारणं श्रेष्ठिकुलो वा प्रमोदकरो अन्तरायकरो कुशलानां धर्माणां अन्यत्राहं अत्र मध्यमे कुले उपपद्या- 10 मि । तदहं यथासुखं अविघ्नेन भगवतो शासने प्रव्रजित्वा दुःखस्यान्तं करिष्यामि ॥ शक्रो तमाह ॥ प्रणिधेहि तुवं तत्र श्रेष्ठिकुले चित्तं उपपत्तीये अहं तथा करिष्यं यथा तुवं ततः श्रेष्ठिकुलातो अभिनिष्क्रमित्वा भगवतो शासने प्रव्रजिष्यसि ॥ तेन देवपुत्रेण शक्रस्य देवानामिन्द्रस्य वचनेन तत्र वाराणसीयं ओकस्य श्रेष्ठिस्य कुले चित्तं प्रणिहितं । सो दानि त्रयस्त्रिंशेषु देवनिकायेषु च्यवित्वा वा- 15 राणसीयं श्रेष्ठिभार्याये कुक्षिस्मिं उपपन्नो कालेन समयेन नवानां वा दशानां वा मासानामत्ययेन सा श्रेष्ठिभार्या प्रजाता ॥

ताये दारको जातो प्रासादिको दर्शनीयो अक्षुद्रावकाशो परमाये वर्णपुष्कलताये समन्वागतो जातमात्रस्य च श्रेष्ठिना रमणीयानि जातकर्माणि क्रियन्ति

1. M *ṛddhiko maheçâkhyo mahânu* purimakasya saṃmyaksaṃbuddhasya pari* B *purimake samya* M *mûla âsannabhû* B *la âçaṃnabhû* BM *ekajatinapra* dharmâ tra* shu so*. — 3. M *çakro de* B *devânu indre* BM *ça budhyati tvaṃ*. — 4. BM tvaṃ çyavanadharmâ(M *rmmâ) yaṃ* M *prâdubhûtâni tataḥ cyavishyasi | tato* B *dyishyasi | tato* BM *çreshṭisya* B *smiṃ upapadyohi | .

6¹. BM *putrâ ça* M *ndram âhaṃ | . — 6². M *prâyaṃ manushyeshûpapayitvâ bu* BM *ne pravrajishyâmi | pra*. — 8. M tataḥ na* BM *kyaṃ(B *kyaṃ | )tatra çreshṭikule upapadyituṃ(M *dyaituṃ | ) yatkâra(B *(kâla)naṃ(M *naṃ) çreshṭiku(M *kule) vâ pramo(M *prasâ)da* M *rakuçâ anya * dhyamakule u*. — 10. M *khasyâkaṃ kari*.

11¹. M *kro âha || . — 11². BM *dhehi(M *dhemi) tuvaṃ tatra çreshṭikule ci* M *upapattishye ahaṃ* BM *shyaṃ | yathâ tuvaṃ tataḥ(M *tato) çreshṭikulâ*. — 13. M tena devapu* BM *çreshṭisya ku*. — 14. BM *sîyaṃ çreshṭibhâryâ(B *ryâye) kukshi* M *nno | tena kâlena tena samayena navânâṃ mâsânâ* BM *tyayena sâ(B *so) çreshṭibhâ * jâtâ to*.

17. B to | ye dâ* M toye dârako jâtaḥ prâ * shkaratâye samanvâgato* BM *çreshṭinâ ramaṇîyâni jâta(B *taṃ)karmâṇi(M *rmâni) kriyanti çrama(M *nti | çrava)ṇakeç* M *aiçakeshu * mapânasya khâjyabho* BM *çrâṇiyati(M *ti | ) tailapraṇâlîyâ(M *ṇâlikâ) ca pra* B *nti | ghṛitapaṇâlîyâ ca pâ* M *ghṛitapraṇâlîyâ ca sa* B *lîyâ ca sa*.

श्रमणब्राह्मणेषु कृपणवनीपकेषु अन्यस्य च जनकायस्य अन्नपानखाद्यभोज्यगन्ध-
माल्यविलेपनं विश्राणीयति तैलप्रणालीयो च प्रवाहीयन्ति घृतप्रणालीयो च पा-
नप्रणालीयो च ॥ सप्ताहस्यात्ययेन दैवज्ञब्राह्मणपरिषा शब्दापिता दारकस्य
नामं करोथ ॥ तेहि तस्य दारकस्य नामं करोन्तेहि तस्य दारकस्य यशोदो ति
नामं कृतं ॥ ते दानि ब्राह्मणा तेन खादनीयभोजनीयेन संतर्पयित्वा संप्रवारयित्वा 5
हिरण्यसुवर्णस्य उत्संगशतानि दत्वा विसर्जिता ॥ यशोदस्य चत्वारि धात्रीयो
उपस्थापिताः । एका उद्वर्तेति च स्नापेति च अपरा स्तनं पायेति अपरा उच्चारप्र-
स्रावमपकर्षेति अपरा अङ्केन धारेति ॥ एवं यशोदो कुमारो यथा उत्पलं वा
पद्मं वा पुण्डरीकं वा एवं संवर्धीयति ॥ यथोक्तं भगवता ।

कृतपुण्या हि वर्धन्ति न्यग्रोधो व सुभूमियं । 10
अनु[392a]पच्छको विय द्रुमो न अल्पपुण्यो विरुह्यति ॥

यदा कुमारो विज्ञप्राप्तो संजातो तदा लिपिं शिक्षितो निक्षेपकं धारणं व्यव-
हारं च । त्रीणि चास्य पितरेण प्रासादानि कारापितानि हैमन्तिको ग्रैष्मिको
वार्षिको षष्टि च स्त्रीसहस्राणि अन्तःपुरं उपस्थापितं ॥ तेहि च प्रासादेहि यन्त्र-
मन्त्रयुक्तानि सोपानानि कारापितानि पंचहि पुरुषशतेहि अल्लीपियन्ति च अप- 15
नीयन्ति च तेहि सोपानेहि अल्लीपियन्तेहि च अपनीयन्तेहि च अर्धयोजनं शब्दं
गच्छति ॥
द्वितीयकुलिको व्यवहारेण पूर्वदेशं गत्वा आगतो । तस्य दानि श्रेष्ठिना दूतं

3. BM °tyayena dārakasya brāhmaṇasya abhijñā çabdā° B °rotha | . — 4. M te dāni tasya dārakasya nāmaṁ karotha | tehi tasya dārakasya yaço° B °ntehi | ta ° taṁ te°. — 5. B °khādanīyo bho° M °khādanīyena bhojanīyena santarpa° B °saṁtapayi ° taṁgaḥ dentīti datvā vi° M °taṁgo dadantīti | datvā visarjjitāḥ ya°.

6. M yaçodo tasya datta catvāri dhātrīye n° B yaçodattasya catvā ° trīye u° M °pitā e°. — 7. M eko udva° BM °peti ca aparā staṁ(B °sta)naṁ pāyeti(M °ti ca) aparā uccāra-praçā(M °çrā)vam a° M °rā aṅgena dhārayati | . — 8. M evaṁ dāni yaço° B °çodā ku° BM °tpalaṁ vā padu° M °rddhishyanti ||. — 9. BM °tā kṛi°. — 10. M °puṇyo hi° BM °grodhe va°.

11. BM jāto anu(fol. 392a)pacchako° M °drumā na alpapuṇyāni virūhyanti | B °hya-nti | . — 12. B °piṁ çekshi ° paṇaṁ taṁ dhā° M °paṇaṁ taṁ dhārayaṁ vyavahāryye | tāṁ yeshu ca trī° B °hāryeshu ca trī°. — 13. B °shashṭiṁ ca strī° M °shaḍḍhiṁ ca strī° puram upa° B °taṁ te°. — 14. B °dehi yantrayantrayuktāni sopanāni kā° M °ktāni so-pānāni kārāpitāni tāni paṁ ° shaçatehi allipiyanti | apanīyantā ca tehi sopānehi ca apanīyanti ca allipiyanti arddha° B °shaçatehi allipiyanti ca apanīyanti ca te° M °gaccha-nti | .

18a. B dvitīye ku° M dvitīye kulake vya°. — 18b. BM °çreshṭinā°.

प्रेषितं । आगच्छ मम पुत्रस्यानुभावं पश्याहीति ॥ सो दानि कुलिको श्रेष्ठिस्य समाग्रं आगतो ॥ श्रेष्ठिना सो द्वितीयकुलिको एकपर्यंके उपविशापितो । कुमारो पि यशोदो शब्दापितो । सो पितुश्च द्वितीयकुलिकस्य चाभिवन्दनं कृत्वा तत्रैव पर्यंके उपविशापितो । इमे सर्वे त्रयो एकपर्यंके उपविष्टा ॥ राज्ञा श्रेष्ठि-
5 स्य दूतो प्रेषितो । अस्ति राजकार्यो सत्वरो शीघ्रमागच्छेसि ॥ श्रेष्ठि द्वितीयकुलिकमाह ॥ आस त्वं कुमारेण सह अहं याव राजकुलातो आगच्छामि ॥ श्रेष्ठि राजकुलं गतो द्वितीयकुलिको च गृहपति यशोदेन कुमारेण सार्धं आसति ॥

सो दानि तस्य यशोदस्य श्रेष्ठिपुत्रस्य तां सम्पत्तिं दृष्ट्वा एतदभूषि । न खल्वयं घरावासो वा इच्छितव्यो यस्येदृशो उपभोगपरिभोगो । निःसंशयं अयं कुमारो
10 बुद्धप्रत्येकबुद्धेषु श्रावकमहेशाख्येषु च कृताधिकारो इच्छितव्यो दिन्नसर्वाकारो वासितवासनो कृतपूर्वयोगो असाधारणो अवरुप्तकुशलमूलो । सचेत्सो कुमारो बुद्धं भगवन्तं देवातिदेवं पश्येय अथ महतार्थेन संयुज्येय ॥ गृहपति आह ॥ कुमार सर्वं खलु यौवनं जरापर्यवसानं सर्वं आरोग्यं व्याधिपर्यवसानं सर्वं जीवितं मरणपर्यवसानं सर्वा संपत्ति विपत्तिपर्यवसाना सर्वेहि प्रियेहि मनापेहि नानाभावं
15 विनाभावं विप्रयोगं चिराद्वाचिराद्वा पितुं पि एतं वा जहिष्यसि एतं वा भवं जहिष्यसि । किं नु खलु ते कुमार भगवां दृष्टो ॥ कुमारो आह ॥ कीदृशो भगवां ॥ गृहपति आह ॥ कुमार देवा[397b]तिदेवो भगवां तथागतो ऽर्हं सम्यक्संबुद्धो

1[2]. BM °çreshṭisya° B °sakaçaṁ° BM °to çre°. — 2[1]. B çreshṭinâ ço dvi° M çreshṭino | so dvitîyo ku° ekaparyyake°. — 2[2]. B °vito so°. — 3. M so pito so pitu°sya nâbhi° trai-vaṁ paryyake u° B °ryaṁke u°. — 4[1] M ime so ca tra° B °sarvaṁ tra° M °ekaparyyakaṁ upavishṭho | B °vishṭâ | . — 4[2]. M râjâ çreshṭiyasya° B °çreshṭisya° M °dûto a°. — 5[1]. B °satpuīro çî° M °satpatro çîghraṁ âga° B °gacchasi | . — 5[2]. BM çreshṭi dvi°.

6. M âsa caṁ ku° B °ha | ahaṁ yâ ca kumâro râ° M °yâvad râja°. — 7. BM çreshṭi râ°dena ca ku°. — 8[1]. BM °çreshṭipu° B °abhû na°. — 8[2]. B °khalv evaṁ yavâso° M °khalv evaṁ yavâso° ço upabhoga nih° B °go nih°. — 9. BM °mâro buddhe pra° B °çrikamahe° M °dinno sarvakâravâsitasano° B °nnasarvakâro vâsitasanâ kṛ° M °gu anava° lamulo B °to sa°.

11. M sacet sa ku° ntaṁ devâtidevaṁ paçyeya | anyâ maha° B °çyeyaṁ | a.yâ mahatârthena saṁ° M °saṁpâjjeyaṁ | B °jyeyaṁ | . — 12[2]. M kumâra sarve kha° jarâ-paryyavasânaṁ sarvam ârogyaṁ vyâdhiparyyavasânaṁ sarvam ârogyaṁ sarvâ sampatti °ryyavasâno sarve° B °saṁpatti vipattiparyavasâne | sarve° yogaṁ cirâd vâ kâlâd vâ pi pitaṁ° etâ vâ bhava jahishyasi | M °yogaṁ virâd vâ cid vâ kâlâd vâ pi pituṁ pi etaṁ vo jayishyasi | etâ vo bhava jahishyasi.

16[1]. B kiṁ tu kha° M kin tu kha° dṛishṭyo | . — 16[2]. B °âha | ku°(l. 17[1]). — 16[3]. M kidṛç° vân gṛiha°. — 17[1]. M kumâra devâtideva kha° gato 'haṁ saṁmya° BM °dvâtriṁçatihi mahâpurushalakshaṇehi samanvâgato açî(B °çîtihi mahâpurushalakshaṇehi samanvâgato açî)tihi anuvyaṁ° B °çobhitehi çarîro ashṭâdaçehi âveṇikehi bu° M °vâṁ

विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च
मनुष्याणां च द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतो अशीतिहि अनुव्यंजनेहि
उपशोभितशरीरो अष्टादशेहि आवेणिकेहि बुद्धधर्मेहि समन्वागतो दशहि तथा-
गतबलेहि बलवां चतुर्वैशारद्येहि सुविशारदो प्रासादिको प्रसादनीयो शान्तेन्द्रियो
शान्तमानसो उत्तमदमशमथपारमिप्राप्तः नागो यथा कारितकारणो अन्तर्गतेहि 5
इन्द्रियेहि अबहिर्गतेन मनस्थितेन धर्मताप्राप्तेन गुप्तो नागो जितेन्द्रियो ह्रदमि-
वाच्छो अनाविलो विप्रसन्नो रत्नयूपं वा समुद्गतो सुवर्णयूपं वा प्रभासति तेजोरा-
शि वा श्रियीया देदीप्यमानो असेचनको अप्रतिकूलो दर्शनाये इहैव वाराणस्यां
विहरति च नद्या वरणाय पारिमे तीरे मुक्तो मुक्तपरिवारो शान्तो शान्तपरिवारो
दान्तो दान्तपरिवारो ब्राह्मणो ब्राह्मणपरिवारो श्रोत्रियो श्रोत्रियपरिवारो स्ना- 10
तको स्नातकपरिवारो वेदको वेदकपरिवारो पारगो पारगपरिवारो स्थलगतो
स्थलगतपरिवारो सर्वाकुशलधर्मप्रहीणो सर्वकुशलधर्मसमन्वागतो अभिभू अनभि-
भूतो आज्ञातार्थदर्शी वशी वशवर्ती देवमनुष्याणां अर्थचर्यां चरति ॥

एवं गृहपतिना द्वितीयकुलिकेन यशोदस्य कुमारस्य पुरतो बुद्धस्य वर्णं भाषि-
तं । कुमारो च यशोदो पूर्वयोगसंपन्नो चरमभविको ॥ तस्य दानि भगवतो 15
दर्शनकामता उद्पासि कामेषु चास्य जुगुप्सना उत्पन्ना योनिशो मनसिकारो
निष्क्रम्ये चेव चित्तं प्रस्कन्दति संतिष्ठति प्रसीदति ॥ सो दानि रात्रीये अर्धरात्री-
समये प्रतिबुद्धो पश्यति तमन्तःपुरं ओसुप्तं काचिद्वीणामुपगुह्य काचि तूणं काचि-
त्सुघोषकां काचित् नकुलं काचिद्वेणुं काचित् महतीं काचिद्वादिशं काचित्त्रिकूटकं
काचिद् भ्रमरिकां काचिदेकादशिकां काचित् मृदंगं काचिदालिंगिकां काचित्प- 20
णवं काचि दर्दुरं काचित्परस्परस्य अंशे बाहां कृत्वा काचिद् हनु[३५३*]कां गृह्य

rataṃ vā* BM *diko prasāda* M *uttamaṇamathapāramiprāpto nāgo yathā* BM *tnayūthaṃ (M *yūthaṃ) vā samudgato (M *tali) suvarṇayūthaṃ (M *yūthaṃ) vā prabhāsati | tejorāçi (B *çiṃ) vā çiriyo (M *ya) dedīpyamānaṃ asecanako apratikūlo (M *ku)la* syāṃ viharati ca bhavyā varaṇā (M *bharaṇāyā) pārime ti* M *ktaparivāro çānto çāntaparivāro brāhmaṇo brāhmaṇaparivāro çrotiyo çrotiyaparivāro snātako snā* B *go pāragaparivāro sthalagato sthalagataparivāro || sarvā* M *rvāṃ kuçaladharmapra* BM *nvāgato abhibhūto ana* M *jñānārthadarçī va vaçavartī*.

14. M *ddhasya kumārasya purato buddhasya va*. — 15¹. B kumārasya ca* M *yogasampanno*. — 15². M *ndapāsi* B *āsya joguaanā utpa* M *tpanno yoni manasikāra nishkramyaivaṃ* B *ço manasikāra nishkramye ca naṃ ci* BM *ttaṃ praskandata santi- (M *saṃti)ṣṭha*.

17. M *rddharātresmiṃ samaye* B *çyati ca tantaḥ* M *vīṇām upagṛhya kācit sughoṣakaṃ kācin naku* B *guhya kāci trāṇaṃ kācit su* M *t mahatīṃ kācid vā* *d bhramarikā kācid e* BM *çikā kācit mṛdaṃgaṃ (M *daṅgaṃ) kācid aliṃgikā kācit pa* M *raṃ kācin parasparasya aṅge bā* B *aṇa aṃçe bā* M *tvā kācid bhanukāṃ* BM *añcilikā* M *gharanti |

कासांचिल्लाला घरति ॥ कुमारस्य तं दृष्ट्वा विकृतमन्तःपुरं श्मशानसंज्ञा उत्पन्ना अभिनिष्क्रमितुकामो च भगवतो सन्तिके अगाराद्नगारियं प्रव्रजिष्यामीति ॥

शक्रो देवानामिन्द्रो अनेकेहि देवशतसहस्रेहि परिवृतो गन्धमाल्यमादाय आगतो । देवपुत्रेहि सोपाना अर्पिता यशोदे च पश्चिमे सोपानके पादतला
5 निक्षिपित्वा देवेहि दिव्यं कुसुमवर्षं ओसृष्टं श्रेष्ठिकुले दिव्यानां कुसुमानां जानुमात्रं ओघं संवृत्तं ॥ कुमारो देवशतसहस्रेहि संवृतो वाराणसीतो नगरातो निर्गम्य येन भगवांस्तेनोपसंक्रमे ॥ भगवता प्रभा प्रमुक्ता ॥ अद्राक्षीद्यशोदो कुलपुत्रो भगवन्तं वरणाये नदीये पारे आसेचनकं अप्रतिकूलं दर्शनाये दृष्ट्वा भगवन्तं मणिपादुकेषु उत्तरित्वा भगवन्तं गाथाये अध्यभाषे ॥

10 उपद्रुतो स्मि श्रमण उपद्रुतो स्मि मारिष ॥

भगवानाह ॥ एहि कुमार मा भायाहि इदन्तमनुपद्रुतं इमस्मिं धर्मे स्वाख्याते वीतरागो भविष्यसि ॥

अथ खलु यशोदो श्रेष्ठिपुत्रो येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा एकान्तनिषण्णः ॥ तस्य यशोदस्य श्रेष्ठिपुत्रस्य भगवां प्रसादनीयां
15 कथां कथे । तद्यथा दानकथां शीलकथां स्वर्गकथां पुण्यकथां पुण्यविपाककथां ॥ अभिप्रसादेसि यशोदो श्रेष्ठिपुत्रो भगवतो सन्तिके चित्तमभिप्रसन्नः ॥ तस्य पुनर्यशोदस्य श्रेष्ठिपुत्रस्य भगवां चत्वार्यार्यसत्यानि प्रकाशयति । दुःखं आर्यसत्यमाचिक्षति देशयति प्रज्ञापयति विवरति विभजति उत्तानीकरोति प्रकाशयति । दुःखसमुदयमार्यसत्यं । दुःखनिरोधं दुःखनिरोधगामिनीप्रतिपदार्यसत्यं आ-

1. M °kritanām antaḥ° °pannno abhiniṣkramituṁ | kāmā ca bha°. — 3. B °dāya gato de°. — 4. BM °trehi sopādānā(M °nāṁ) alā° çodena paçci(M °na ca paccha)mena ca sopānakasya pāda° M °pitvāni de° BM °jaṁ kusumaṁ varshaṁ oçrishṭaṁ(M °shṭāṁ) çreshṭikule° M °numātre o° B °ttaṁ ku°.

6. M °hasraṁ saṁvçitto vā° B °sreṇaṁ vçitto vārāṇasī° M °gavānsteno° kramitvā. — 7[1]. B bhagavato prabhā° M °gavato prabhā muktāḥ B °mukto | . — 7[2]. M °tro bhagavantaṁ varaṇā° B °pratishkūlaṁ° M °pratikulaṁ° BM °pādakeshu° M °thāya °dhya°. — 10. BM upadruto smiṁ çrama(M °çrava)ṇa° B °to smiṁ mā° M °riṣah ||.

11[2]. M °ra ma bhā° M °ra ma bhāhi idan taṁ mu°. — 13. BM °çreshṭiputro° M °yena bhagavānsteno° gavato pā° sharaṇo | B °sharaṇas tasya°. — 15. BM tadyathā || dā° B °çilaka svarga° M °rgakathāṁ puṇyakathāṁ puṇyakathāṁ puṇyavi°.

16[1]. BM °bhiprāsādehi || yaçodā çreshṭipu° sannas tasya°. — 16[2]. M °punaḥ yaço° BM °çreshṭipu° gavā(M °vāṁ) cchatvā°. — 17. B °cikshiti de° M °cikshishyati de° jñāpayati prasthāpayati viva° B °tānikaro°. — 19[1]. M °mudayān ārya°. — 19[2]. BM °yāvan pra°.

विवरति यावत् प्रकाशयति ॥ अथ खलु यशोदो श्रेष्ठिपुत्रो तत्रैवासने निषण्णो तिस्रो विद्या षडभिज्ञा बलवशीभावं साक्षीकरोति अनेकविधां ऋद्धिं प्रत्यनुभवति ॥

अथ खलु यशोदस्य श्रेष्ठिपुत्रस्य मातापितरौ तस्यैव रात्र्या अत्ययेन यशोदं श्रेष्ठिपुत्रं अपश्यन्तौ अश्रुकण्ठा अश्रुमुखा महाज्ञातिस्कन्धस्य परिवृता बहूहि प्राणसहस्रेहि सार्धं [393b] वाराणसीतो निर्यात्वा येन भगवांस्तेनोपसंक्रमे यशोदं श्रेष्ठिपुत्रं अन्वेषन्ता । अद्राक्षीत् यशोदस्य श्रेष्ठिपुत्रस्य मातापितरौ नदीये वरणाये तीरे यशोदस्य मणिपादुकानि दृष्ट्वा च पुनः यशोदस्य मणिपादुकानि गृह्य मुखेन परिचुम्बेन्सुः रोदेन्सुः क्रन्देन्सुः शोचेन्सुः परिदेवेन्सुः ॥ रोदित्वा क्रन्दित्वा शोचित्वा परिदेवित्वा येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा भगवन्तमेतदुवाच ॥ अद्राक्षीद्भगवां यशोदं श्रेष्ठिपुत्रं ॥ यशोदो श्रेष्ठिपुत्रो तथारूपां चेतोसमाधिं समापद्ये यथा तं तत्रैव निषण्णं मातापितरौ नाद्राक्षेन्सुः न च अन्यो जनकायः ॥ अथ खलु भगवां यशोदस्य श्रेष्ठिपुत्रस्य मातापितरं आमन्त्रयति ॥ निषीदथ गृहपते । स्थानमेतं विद्यति यशोदं श्रेष्ठिपुत्रं पश्यथ दृष्ट्वा च पुनः यशोदे श्रेष्ठिपुत्रे चित्तं प्रसादेथ ॥ अथ खलु यशोदस्य श्रेष्ठिपुत्रस्य मातापितरौ भगवतो पादौ शिरसा वन्दित्वा एकमन्ते निषीदेन्सुः अन्यो च जनकायो ॥ अथ खलु भगवां यशोदं श्रेष्ठिपुत्रं मनसाध्येषे । ऋद्धिप्रातिहार्यं विदर्शेहि ॥

अथ खलु यशोदो श्रेष्ठिपुत्रो तालमात्रं वैहायसे स्थितो अनेकविधं ऋद्धिप्रातिहार्यं विदर्शयन्तो सो एको पि भूत्वा बहवो भवति बहुधापि भूत्वा एको भवति

1. BM °çreshṭipu° B °sharṇṇo | tiro° M °sharṇṇo tiro° °bhijño bala° BM °anekavidhaṁ ṛiddhi pra° B °bhavati ‖°. — 4. BM °la yaçodasya çreshṭiputra° M °daṁ çreshṭiṁ putraṁ sarvehiṁ tān adrā° (l. 7) B °daṁ çreshṭiputraṁ apaçya ° mukhi mahā ° hāni prā ° saṁkrāme ‖ yaço° B °daṁ çreshṭiputraṁ sarvehān tā adrā°.

7. BM °kshit | yaçodasya çreshṭiputra° M °tīre yaçodasya maṇipādukāni gṛi° BM °khe ca paricumbetsuḥ rodetsuḥ krande(M °kraṁde)tsuḥ çocetsuḥ paridevetsuḥ ro°. — 9. M °yena bhagavan tena ° mitvā bhagavato pā°.

11a. BM °çreshṭiputraṁ tathārū°. — 11b. M °dye | yathā yaṁ tatraivaṁ ni° BM °sharṇṇasya° BM °drākshetsuḥ(B °tsuḥ ‖) anyo° M °kāyo ‖. — 13. M °gavān yaço° BM °ntrayati ni°. — 14b. BM °daṁ çreshṭiputraṁ° M °çreshṭiputro ci° B °çodo çreshṭiputro manasā° (l. 17) M °prasādeya ‖. — 15. M °çreshṭipu ° tsuḥ anye ca janakāye ‖.

17b. M °çreshṭipu° B °sā adhyeshe ṛi° M °bhāshaṁ ‖. — 19. BM °çreshṭiputro° vaihāyasaṁ saṁsthi° M °nto saikāpi bhūtvā bahavo bhavanti ‖ bahu° B °va bhavanti bahudhe pi bhūtvā e° M °āvibhāvan tirobhāvan tirokudyan tiraççailan tiroparva° B °vibhāvan tirokudyaṁ tiloçai°.

आविर्भावं तिरोकुड्यं तिरोशैलं तिरोपर्वतेषु असज्जमानो गच्छति । इमस्मिं च पृथिवीयं उन्मज्जननिमज्जनं करोति । यथापि नाम उदके पि अभिद्यमानो गच्छति तथापि नाम पृथिवीयं । इमावपि चन्द्रसूर्या एवंमहर्द्धिका एवंमहानुभावी पर्यङ्केन निषण्णः पाणिना परिमार्जति परामृषति यावद्ब्रह्मलोकं कायेन वशे

5 वर्तेति । विविधानि च यमकानि प्रातिहार्याणि करोति हेट्ठिमं कायं प्रज्वलति उपरिमातो कायातो शीतस्य वारिस्य पंच धाराशतानि स्रवन्ति उपरिमो कायो प्रज्वलति हेट्ठिमातो कायातो शीतस्य वारिस्य पंच धाराशतानि स्रवन्ति वामो पार्श्वो ज्वलति दक्षिणातो पार्श्वातो शीतस्य वारिस्य पंच धाराशतानि स्रवन्ति दक्षिणो पार्श्वो ज्वलति वामातो पार्श्वातो शीतस्य वारिस्य पंच धाराशतानि

10 स्रवन्ति ॥

अथ खलु यशोदो श्रेष्ठिपुत्रो नीलांजनवर्णं ऋषभमात्मानं ऋद्धीये अभिनिर्मिणित्वा पुरस्तिमायां दि[394ᵃ]शायामन्तरहायति पश्चिमायां दिशायां प्रादुर्भवति पश्चिमायां दिशायां अन्तरहायति पुरस्तिमायां दिशायां प्रादुर्भवति दक्षिणायां दिशायां अन्तरहायति उत्तरायां दिशायां प्रादुर्भवति उत्तरायां दिशायां

15 अन्तरहायति दक्षिणायां दिशायां प्रादुर्भवति ॥ अथ खलु यशोदो श्रेष्ठिपुत्रो सिंहमृगराजमात्मानमृद्धिये अभिनिर्मिणित्वा दाठी नखी केशरी विघुष्टं सिंहनादं नदित्वा पुरस्तिमायां दिशायां अन्तरहायति पश्चिमायां प्रादुर्भवति पश्चिमायां दिशायामन्तर्हायति पुरस्तिमायां दिशायां प्रादुर्भवति दक्षिणातो

1. B °yaṁ unajjati majjanaṁ° M °yaṁ ujjanati majjanaṁ°. — 2. BM °dyamânâ gacchati ‖ ta° M °nâma ithi° BM °yaṁ ‖°. — 3. B °sûryo evaṁ maha° M °bhâvâ paryyaṅkena nisharṇṇo pâ° B °nishaṇṇeḥ pâṇinâ parimâjjati parâ° M °yâvaca brahma ° kâyena za çobhateti | B °yena vaça vartteti | . — 5. M °uparimâtro kâ ° uparimo kâyo prajvalito heṭṭhimâto kâ ° âni çrava° B °nti | vâmo pârçve jva° M °vâ mo pârçvo çîtasya° dakshiṇo pârçve jva° B °lati | vâmâto pârçvâto pañca°.

11. BM °çreshṭhiputro° M °lâñjana risha° B °rṇṇaṁ risha° B °ruṇi vâ ° antarahâyati | pa° M °çcimâyâṁ diçâyâm aṁtarahâyati | dakshiṇâyâṁ diçâyâṁ prâdurbhavati | paçcimâyâṁ diçâyâm antarhâyati° B °hâyati | purastimâyâṁ diçâyâṁ prâdurbhavati | dakshiṇâyâṁ diçâyâṁ antarahâyati | uttarâyâṁ diçâyâṁ prâdurbhavati | uttarâyâṁ diçâyâṁ antarahâyati | da° M omet prâdurbhavati uttarâyâṁ diçâyâṁ B °kshiṇâyaṁ di° M °çâyâṁ prâ°. — 15. BM °çreshṭhiputro° M °tmânam riddhiye° BM °ruṇi(M °ni)tvâ dâṭi balâṁ keçari trikshustaṁ(M °çaruṁ trishkṛtyaṁ) siṁhanâdaṁ naditvâ purastimâyâṁ diçâyâṁ antarahâyati | (M °çâyâm antahâyima) paçci ° çcimâyâṁ diçâ(B °çâyâṁ)m antarahâyati (B °ntarhâyati | .) pu ° çâyâṁ prâdurbhavati | dakshiṇâto antarhito uttarâto(M °râyâṁ) prâdurbhavati | uttarâto antarhi(M °ntahi)to dakshiṇâyâṁ prâdurbhavati | bhûmyâm antahi(M °myâṁ antarhi)to antarikshe prâdurbhavati | antari°.

अन्तर्हितो उत्तरातो प्रादुर्भवति उत्तरातो अन्तर्हितो दक्षिणायां प्रादुर्भवति भूम्यामन्तर्हितो अन्तरीक्षे प्रादुर्भवति अन्तरीक्षे अन्तर्हितो धरण्यां प्रादुर्भवति ॥ अथ खलु यशोदो श्रेष्ठिपुत्रो सर्वश्वेतं हस्तिनागमात्मानं ऋद्धिये अभिनिर्मिणित्वा षडुन्नं इन्द्रगोपशीर्षं सप्ताङ्गसुप्रतिष्ठितं कुमुदवर्णं पुरस्तिमायां दिशायामन्तर्हितो पश्चिमायां प्रादुर्भवति पश्चिमायां अन्तर्हितो पुरस्तिमायां प्रादुर्भूतः दक्षिणातो अन्तर्हितो उत्तरायां प्रादुर्भूतः उत्तरायामन्तर्हितो दक्षिणायां प्रादुर्भूतः भूम्यामन्तर्हितो अन्तरीक्षे प्रादुर्भूतः अन्तरीक्षे अन्तर्हितो भूम्यां प्रादुर्भवति ॥ अथ खलु यशोदो कुलपुत्रो चक्रवर्तिवेषमात्मानमभिनिर्मिणित्वा सप्तरत्नसमन्वागतं चतुरङ्गेन बलकायेन संपरिवृतो पुरस्तिमायां दिशायां अन्तर्हितो पश्चिमायां प्रादुर्भूतः पश्चिमायामन्तर्हितो पुरस्तिमायां प्रादुर्भूतो दक्षिणायामन्तर्हितः उत्तरायां प्रादुर्भूतो उत्तरायां अन्तर्हितः दक्षिणायां प्रादुर्भूतो भूम्यामन्तर्हितो अन्तरीक्षे प्रादुर्भूतः अन्तरीक्षे अन्तर्हितो भूम्यां प्रादुर्भूतः ॥

अथ खलु यशोदो कुलपुत्रो तालमात्रं अन्तरीक्षे गच्छति पि तिष्ठति पि निषीदति पि शय्यमपि कल्पयति परितपति पि परिभ्रमति पि । तद्यथापि ग्रीष्माणां पश्चिमे मासे संघट्टका नाम वाता वायन्ति एवमेव यशोदो श्रेष्ठिपुत्रो तालमात्रं वैहायसमन्तरीक्षे गच्छति पि तिष्ठति पि निषीदति पि शय्यमपि कल्पयति परितपति परिभ्रमति पि । एकतालातो द्वितालातो स्थितो ए[394b]को भूत्वा बहुधा भवति बहुधा भूत्वा एको भवति । यथा प्रथमे परिवर्तके तथा कर्तव्यं यावत्सप्त-

3. BM °çreshṭhiputro° stināgaṁm a(M °gaṁ ā)tmānaṁ ṛddhi(M °ddhi)ye abhinirmiṇi-(M °ṇi)tvā shaḍḍanta indra° M °gopakaçīrsho saptāṅgasupratisthitaṁ° BM °rṇaṁ purastimāyāṁ diçāyāṁ antarhi(B °ntahi)to paçcimāyāṁ prādurbhavati | paçcimāyāṁ a(M °yāṁm a)ntarhito purastimāyā prādurbhūtaḥ(M °rbhūto |) dakshiṇāto antarhito utta ° ttarāyām antarhi(B °ntahi)to dakshiṇāyāṁ prādurbhūtaḥ bhūmyā(B °myām a)ntarhito antari(M °rikshe) prādurbhūtaḥ(M °taḥ | ) antari° M °kshe prādurbhūto bhūmyāṁ prādurbhūto bhavati.

7. B °kravartive° M °rttiveçam ātmā ° rmiṇitvā sapta ° āgena barakāye° BM °vṛto purastimāyāṁ(B °stimonaṁ) diçāyāṁ antarhito(M °rhitā) paçci ° çcimāyām antarhi-(B °ntahi)to purastimāyāṁ(B °yā) prādurbhūto(M °rbhūtaḥ) dakshiṇāyāṁ antarhitaḥ (M °rhito) uttarāyāṁ prādurbhūto(M °rbhūtaḥ | ) uttarāyāṁ a(M °yām a)ntarhitaḥ(M °rhito) dakshiṇāyāṁ prādurbhūto(M °rbhūtaḥ | ) bhūmyām antarhitā(B °ntahito) antari°.

13. M °tro tālamātraṁ°. — 14. M °ṭṭakā nāmana vāto vāyanti | e° B °ṭṭakā nāma parvatā vāyanti evam eva yaço° BM °çreshṭhipu° B °bhramati e°.

17. M °sthitaḥ eko bhū°. — 18. M °rivarttake tathā ° i saptatālaṁ saptatālaṁ saptatālāto shaḍtālaṁ shaḍtālāto paṁcatāle sthitaḥ paṁcatālāto catustālāto tritālasthito tri° B °saptatālāto shaṭtālaṁ shaṭtālāto paṁ ° paṁcatālāto catu ° tustālāto tritālasthito tritālāto dvitāle shṭito dvi ° dharaṇyā sthito | .

ताले सप्ततालातो षट्ताले षट्तालातो पंचताले स्थितो पंचतालातो चतुस्ताले चतु-
स्तालातो त्रिताले स्थितो त्रितालातो द्विताले स्थितो द्वितालातो एकताले स्थितो
एकतालातो धरण्यां स्थितो एको पि भूत्वा बहुधा भवति बहुधापि भूत्वा एको
भवति ॥ इति आविर्भावं तिरोकुड्यं तिरोशैलं तिरोपर्वतेषु असज्जमानो
5 गच्छति इमस्मिं पृथिवीयं उन्मज्जति निमज्जति । धरणीतो अभ्युद्गम्य गच्छति
पि तिष्ठति पि निषीदति पि शय्यामपि कल्पयति परितपति परिभ्रमति पि ॥

अथ खलु अन्यतीर्थिकचरकपरिव्राजका त्रैदण्डिकमानन्दिकगुरुपुत्रकगौतमध-
र्मचिन्तिकवृद्धश्रावकतृतीया उलूकपक्षिकभगिनी श्रमणा यशोदस्य श्रेष्ठिपुत्रस्य
इमानि एवंरूपाणि विविधानि विचित्राणि ऋद्धिप्रातिहार्याणि दृष्ट्वाश्चर्याद्भुतसं-
10 विग्नसंहृष्टरोमजाता अभूवुः यावत्स्वाख्यातो भगवतो गौतमस्य धर्मविनयो वि-
वृतो दण्डच्छिन्नपिलोतिको अलं अलंकाराय अलं प्रसादाय यत्र हि नाम गृहीतो
अवदातवसनो काशिकशुचिवस्त्रधरो चन्दनानुलिप्तगात्रो अंगदी कुण्डली एव-
मेवरूपं धर्मं साक्षीकरोति ॥

अथ खलु भगवां ताये वेलाये यशोदं श्रेष्ठिपुत्रं आरभ्य इममुदानमुदानये ॥

15 न मुण्डभावो न जटा न पंको
नानासनं स्थण्डिलशायिका वा ।
रजोजल्लं चोत्कुटुकप्रहाणं
दुःखप्रमोक्षं न हि तेन भोति ॥
अलंकृतो चापि चरेय धर्मं
20 शान्तो दान्तो नियतो ब्रह्मचारी ।
सर्वेहि भूतेहि निधाय दण्डं
सो ब्राह्मणो सो श्रमणो स भिक्षुः ॥

4. BM °âvibhâvam ti(M °vam ti)robhâvam tiroku° M °kudyam tiroçai° B °kudyam tiroçailyam tiropa°. — 5. B °dati ça° M °dati çeyyâm a° B °lpayati | palita°.

7. M °khalu anyatîrthikacaraka parivrâjakâ te dandi° B °vrâjakâ tredandi° BM °traka-gauttamadharmaci° B °ddhaçrâkatri° kahildhagini çravanâ° M °gini çravanâ° B °çreshti-pu° M °çreshtiputrakasya imâni evamrûpâni vividhâ° ahtaromajâto abhûsuh | yâvat svâ° BM °gauttamasya° B °rmavinaya vivri° BM °lohitiko ham orthikaramâya(M °kamârya) alam prasâ(B °pramâ)dâya yatra° B °grihitâ a° M °dâtaçca vassno° tro angadi kundala e° BM °dharma sâ°.

14. M °gavân tâya ve° BM °çreshtipu° M °imam udânaye | . — 15. B °pamkâ nânâ-sanâ thandilaçâyinâ vâ ra° M °pamkâ nândasanârthadivaçâyino kâ°.

17. M kâlayâjalam vo utkutukaprahâ° B °lam vo utku° tena bhavati a° M °tena bhava-ti | . — 19. M °dharmakshonto dâ°.

21. B °hmanaçra° M °hmanaçravano sa°.

अथ खलु भगवां यशोदस्य मातापितॄणां तस्य च जनकायस्य प्रसादनीयां कथां कथये । तद्यथा दानकथां शीलकथां स्वर्गकथां पुण्यकथां पुण्यविपाककथां । अभिप्रसादयन्ति यशोदस्य मातापितरो भगवतो अन्तिके चित्तं तं च महाजनकायं अभिप्रसन्नचित्तो ॥ भगवां यशोदस्य मातापितॄणां तस्य च महतो जनकायस्य चत्वार्यार्यसत्यानि प्रकाशयति दुःखं दुःखसमुदयं दुःखनिरोधं दुःखनिरोधमार्गं ॥ 5
अथ खलु यशोदस्य श्रेष्ठि[395*]पुत्रस्य मातापितॄणां तेष्वेवासनेषु निषण्णानां विरजं विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धं बहूनां च प्राणिसहस्राणां अधिगता च धर्मा ॥ ते पुनर्यशोदस्य श्रेष्ठिपुत्रस्य मातापितरो भगवन्तमेतदवोचत् ॥ प्रव्राजेहि भगवं यशोदं श्रेष्ठिपुत्रं उपसंपादेहि सुगत यशोदं श्रेष्ठिपुत्रं ॥ अथ खलु भगवां एहिभिक्षुकाये आभाषे । एहि भिक्षु चर तथागते ब्रह्मचर्यं ॥ 10

अथ खलु यशोदस्य श्रेष्ठिपुत्रस्य भगवता एहिभिक्षुकाये आभाष्टस्य यत्किंचिद्गृहिलिंगं गृहिगुप्तं गृहिध्वजं गृहिकल्पं सर्वमन्तरहाये त्रिचीवरं चास्य प्रादुर्भवेत्सुंभकं च कंसपात्रं प्रकृतिस्वभावसंस्थिता च केशा ईर्यापथो चास्य संस्थिहे तद्यथा नाम वर्षशतोपसंपन्नस्य भिक्षुस्य । एषा आयुष्मतो यशोदस्य श्रेष्ठिपुत्रस्य प्रव्रज्या उपसंपदा भिक्षुभावो ॥ 15

समाप्तं यशोदस्य श्रेष्ठिपुत्रस्य वस्तुं ॥

भिक्षू भगवन्तमाहन्सुः ॥ कस्य भगवन् कर्मस्य विपाकेन यशोदो श्रेष्ठिपुत्रो आढ्यो महाधनो महाभोगो श्रेष्ठिकुले उपपन्नो क्षिप्राधिगमो च गृहस्थभूतेनैव अनवग्रीभावं प्राप्तं ॥ भगवानाह ॥ एतस्यैव भिक्षवो यशोदस्य श्रेष्ठिपुत्रस्य पूर्वप्रणिधानं ॥

1. M *çodasya çreshṭhiputrasya mâ*. — 2[1]. BM tadyathâ ‖ dâ* BM *vipâ(B *pâka)kathâṁ abhi*. — 2[2]. B *sâdayanti | yaço* M *gavato bhagavato santike cittaṁ ca ma* BM *tto bha*. — 5. BM *çayati | duḥkhasamudayaṁ duḥkhanirodhamârgaṁ ‖.

6. BM *çreshṭhipu* B *yâṁ teshvevâ* M *shaṇṇânâṁ* B *shaṇṇânâṁ vigataṁ vigatamalaṁ* BM *hûnâṁ ca prâ* B *srâṇi a* M *srâṇâ a* BM *rmâ ca pu*. — 8[1]. B ca puna* M ca punaḥ yaço* BM *çreshṭhipu* M *pità bha*. — 8[2]. BM pravrajehi bhagavâṁ yaçodaṁ çreshṭhiputraṁ u* B *sugataṁ yaço* BM *çreshṭhipu*. — 9. M *she | ehi bhikshu caratha tathâ*.

11. BM *trasya bhagavato e* B *âbhâshṭhasya yat kiṁ* BM *d gṛihaliṁgaṁ grihi(B *grihaṁ)gu* M *lpaṁ ayam anta* BM *rbhavetsuḥ suṁbhakaṁ* B *ca kaṁ ca pâtraṁ* M *svabhâvaṁ saṁsthitâ ca keçâ iryyâpatho câ* B *çâ iryâ * sthiha | tadyathâ | nâ * kshasya e*. — 14. BM *çreshṭhipu* M *kshurbhâvaḥ ‖.

16. M iti çrîmahâvastunavadâne yaço* BM *çreshṭhipu* M *stuṁ samâptaṁ ‖. — 17[1]. M bhikshu bha * hataṁḥ ‖. — 17[2]. B *bhagava karma* BM *do çreshṭhipu* M *âdyo mahâdha* BM *çreshṭhiku* M *dhigato ca gṛi*. — 19[2]. B *syaiceiva bhi* M *syaisha evaṁ bhi* BM *çreshṭhipu*.

भूतपूर्वं भिक्षवो इहैव वाराणस्यां नगरे वीणाकुलपुत्रो अभूषि कृच्छ्रवृत्तिको दरिद्रो परकर्मेण वृत्तिं कल्पयति बुद्धानां अनुत्पादाय प्रत्येकबुद्धा लोके उत्पद्यन्ति बुद्धानामन्तरा दक्षिणीया तूष्णीकशोभना एकचरा खड्गविषाणकल्पा एकमात्मानं दमेन्ति परिनिर्वापयन्ति दक्षिणीया पुरुषेषु ॥ ततो भद्रिको नाम प्रत्येकबुद्धो
5 ऋषिपतनातो कल्यमेव निवासयित्वा पात्रचीवरमादाय नातिकाले नातिविकाले समये प्रातराशे वर्तमाने वाराणस्यां नगरे पिण्डाय प्रविष्टो सुसंवृतो कायेन सुसंवृतो वाचाय सुसंवृतो मनेन सूपस्थिताय स्मृतिये समाहितो एकाग्रचित्तो सुसंवृतेन्द्रियो ॥

सो दानि वाराणसीनगरे पिण्डाय चरन्तो तेन वीणाकुलपुत्रेण पुरुषेण दृष्टो ।
10 प्रासादिकाभिप्रसन्ना देवमनुष्या तस्य वीणाकुलपुत्रस्य पुरुषस्य । भद्रिकं प्रत्येकबुद्धं दृष्ट्वा अतीव मनं [395a] प्रसन्नं प्रसन्नचित्तेन गृहं प्रवेशेत्वा गृहे आहारेण प्रतिमानितो एवं चानेन प्रणिधानमुत्पादितं यं एदृशे दक्षिणीये अधिकारं कृत्वा कुशलमूलं मा कांचिद्दुर्गतिं वा विनिपातं वा गच्छेयं मा वा कदाचिद्दरिद्रेषु कुलेषूपपद्येयं आढ्येषु महाधनेषु महाभोगेषु कुलेषूपपद्येयं ॥ सो दानि भद्रिको प्र-
15 त्येकबुद्धो इममेवरूपं प्रणिधानं विदित्वा हंसराजा विय वैहायसेन प्रक्रान्तो ॥ सो दानि पुरुषो तं भद्रिकं प्रत्येकबुद्धं वैहायसेन हंसराजा विय विक्रमन्तं दृष्ट्वा च तस्य प्रत्येकबुद्धस्य स्पृहयन्तो भूयो प्रसन्नचित्तो प्रणिधानमुत्पादेति । एतेषां धर्माणां लाभी भवेयं येषामेष प्रव्रजितो धर्माणां लाभी ॥

भगवानाह ॥ एष भिक्षवः यशोदो श्रेष्ठिपुत्रो तेन कालेन तेन समयेन इह वा-

1. M °pûrva bhikshavaḥ i° B °kshînaku° M °shi | kricchravṛiṣhṭiko° na vṛiṣhṭiṁ kalpa° BM °nâṁ ai(M °nâṁ vâ)nupâdâya pratye° dyanti(M °dyati) | buddhânâm antaro dakshiṇeyo tû° B °ekavarâ kha° M °lpâ | ekam âtmânaṁ dameti parini° B °tmânaṁ dayenti paninirvâ° ṇyakshatrâ |. — 4. M tataḥ bhadrikâ nâma pratye° B °buddhâ ṛi° M °ṛishipatanâto kâlyaṁyai° B °danâto kâlasyai° BM °dâya nâṁyâtikâle nâtivikâle samâye(B °samo) prâtarâsaṁ varta° B °shṭo susaṁvṛitâ kâye° M °shṭo susaṁvṛito vâvâya susaṁvṛito manena supasthi° BM °smṛitissamâ° B °tto susaṁvṛittendriyo ||.

9. M °râṇasyâṁ naga° kshînaku° BM °shṭo prâ°. — 10¹. B °diko bhipra° M °samo du° BM °shasya bha°. — 10². B °naṁ prasanne citta° tvâ grihaṁ âhâre° M °tvâ griham âhâre° tpâditaṁ yam edṛi° kshiṇeyaṁ adhi° B °ṇeyaṁ adhikâraṁ kṛi° M °mûla mâ kaçci durga° BM °dreshu kuleshu papadyaṁ âḍye(B °shûpapadyeyaṁ âḍhye)shu mahâdha°.

14. B °jâ visha vai°.

16. M °ddhaṁ vihâyasena haṁsarâjâ viya vaihâyasena viya vikra° spṛihayaṁto bhû°. — 17. BM eteshâṁ dharmâṇâṁ lâbhî(B °bhi) bhaveyaṁ teshâm e(M °shâṁ eshe pra° M °rmâṇâṁ lâbhî ||. — 19¹. M °kshavo yaço° BM °çreshṭhiputro te° M °samaye i°.

राणस्यां नगरे श्रेष्ठिकुलपुत्रो अभूषि । यं सो तत्र प्रत्येकबुद्धे अधिकारं कृत्वा प्रणिधानमुत्पादितं तस्य कर्मस्य विपाकेन तदुपादाय न कदाचिद्दुर्गतिविनिपाते- षूपपन्नो मनुष्येषु च्युतो देवेषु देवमहेशाख्यो उपपन्नो देवेषु च्युतो मनुष्यमहेशाख्यो उपपन्नो इहैव च मे पश्चिमे जन्मे तथागतं आरागेत्वा अग्रयशीभावं प्राप्तो ॥

यशोदजातकं समाप्तं ॥ 5

भगवान्सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थं अभिसंभावयित्वा वाराणस्यां विहरति ऋषिवदने मृगदावे । तत्र खलु भगवां आयुष्मन्तां पंचकां भद्रवर्गीया- नामन्त्रयति ॥ मुक्तो हं भिक्षवः सर्वपाशेहि ये दिव्या ये च मानुषा । चरथ भि- क्षवः चारिकां मा च द्वे एकेन अगमित्थ ॥ सन्ति हि भिक्षवः सत्वाः शुद्धा अल्परजा अपरोक्षजातिका ते च अश्रवणताये धर्माणां परिहायन्ति । अहं पि 10 गमिष्ये येन उरुबिल्वायां सेनापतिग्रामकं जटिलानामनुकंपाय ॥

अथ खलु मारस्य पापीयस्येतदभूषि ॥ अयं खु श्रमणो गौतमो वाराणस्यां विहरति ऋषिवदने मृगदावे सो पंचकां भद्रवर्गिकां भिक्षूनामन्त्रयति मुक्तो हं भिक्षवः सर्वपाशेहि ये दिव्या ये च मानुषा यूयमपि भिक्षवः मुक्ताः सर्वपाशेहि ये दिव्या ये च मानुषाः चरथ भिक्षवः चारिकां मा च एकेन द्वे अगमि[396a]त्थ 15 सन्ति भिक्षवः सत्वा अल्परजा अपरोक्षजातिका अश्रवणताये धर्माणां परिहायन्ति अहं पि गमिष्ये येन उरुबिल्वायां सेनपतिग्रामकं जटिलानामनुकंपाय यं नूनाहं उप-

1. BM yo so° M °buddhe adhi° kena tadupâyena kaçci durgatinipâteshupapannâ ma° heçâkhyeshupapanno deveshu cyuto ma° papannâ iha vasam paçci° B °shyeshu cyu° cyuto manakhyo mahe° kaiva vasam paçcime jatme tathâ° M °ârâdhetvâ ha° B °prâptaṃ ‖. — 5. M iti çrimahâvastuavadâne yaço°.

6. M bhagavân saṃmyu° B °to tadarthaṃ° M °shipatane mṛi° B °dâve ta°. — 7. M °gavân âyushmantânâṃ pañcakâ bhadra° B °shmantaṃ pañ° M °rgîyâm âma°. — 8¹. M °kshavo ma° B °vyâ ye ye ca mânushâ ca° M °shâ yûyaṃ api bhikshavo muktâ sarvapâçehi ye divyâ ye ca mânushâ ye ca°. — 8². M ye cara bhi° B carati bhi° BM °rikâ mâ(M °mo) ca du° B °kena âgamittha saṃ° M °kena agamishya. — 9. B saṃtihi bhi° M °bhikshavo satvâḥ° B °lparajo aparokshajâtika tvâya açra° M °rokshajâtiko açravaṇatvâ dharmâ° BM °hâyati a°. — 10. M ahaṃ gamo ‖ yena uhvi° B °gaṃse | ye° lvâyaṃ senâ° BM °grâmakâ ja° M °ṭilenâ°.

— 12¹. BM °pâpiṭhasyai°. — 12². M °khu çravaṇo çautamo° BM °syâṃ viharati | ṛi° M °shipatane mṛi° ve ‖ so pañcakâ bhadra° BM °bhikshuṇâm âmantrayati ‖ mukto° shâ(M °shâye) | yû° M °vyâ ye mânushâḥ° kâṃ mâ cara ekena dove agamishyaṃ | santi bhi° B °ttha | santi bhi° M °vaḥ satvâ çuddhâ alpa° jâtiko açravaṇatvâ dharmâṇâṃ° BM °hâyati | ahaṃ pi gaṃse yena uru(B °ulu)vilvâ° M °grâmikaṃ jaṭilenâm anukaṃpâye ‖ yaṃ nû° B °nukaṃpâya ‖ yaṃ nû° M °rmâye ‖.

संक्रमेयं विचक्षुकर्माय ॥ अथ खलु मारो पापीमां भगवन्तं गाथाये ध्यभाषे ॥

अमुक्तो मन्यसे मुक्तो किं तु मुक्तो ति मन्यसि ।
गाढबंधनबद्धो सि न मे श्रमण मोक्ष्यसि ॥

अथ खलु भगवां मारं पापीमं गाथाये प्रत्यभाषे ॥

5 मुक्तो हं सर्वपाशेहि ये दिव्या ये च मानुषा ।
एवं जानाहि पापीमं निहतो त्वमसि अन्तक ॥

अथ खलु मारो पापीमां जानाति खलु मे श्रमणो गौतमो त्ति दुःखी दुर्मनो विप्रतिसारी तत्रैव अन्तरहाये । इत्थमेतं श्रूयति ॥

भगवान्सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थं अभिसंभावयित्वा वाराणस्यां वि-
10 हरति ऋषिपतने मृगदावे शास्ता देवानां च मनुष्याणां च । अथ खलु भगवतो एकस्य रहोगतस्य प्रतिसंलीनस्य अयमेवंरूपो चेतसः परिवितर्को उदपासि । कामा अनित्यदुःखविपरिणामधर्मा ॥ अथ खलु मारस्य पापीयस एतदभूषि ॥ अयं श्रमणो गौतमो वाराणस्यां विहरति ऋषिपतने मृगदावे तस्यैकस्य रहोगतस्य प्रतिसंलीनस्य अयमेव चेतसः परिवितर्को उदपासि कामा अनित्यदुःख-
15 विपरिणामधर्मा यं नूनाहं उपसंक्रमेयं विचक्षुकर्माय ॥ अथ खलु मारो पापीमां येन भगवांस्तेनोपसंक्रमित्वा भगवन्तं गाथाये ध्यभाषे ॥

दृढो नाम मया पाशो चरति मानसे तव ।
तेन त्वां बन्धयिष्यामि न मे श्रमण मोक्ष्यसि ॥

1. M °thâye 'dhya°. — 2. BM °so mukto kiṁ tu(M °kim tu) mukto si ma°. — 3. M gâḍhabandha ° çravaṇa° BM °mokshasi ‖. — 4. M °gaván má ° pâpîmaṁ gâ°. — 5. M °vyâ hi ca mânushâḥ e°.

6. M °pîyaṁ ni ° ntako ‖ B °ntakaṁ ‖. — 7. M °çravaṇo gauttamonti duḥkhi durma° B °monti duḥ° M °traivântarhito B °hâye e°. — 8. B ettha° M itthaṁ evaṁ çrû° B °taṁ çruyati ‖. — 9. M bhagavâṁ samya° B bhagavân saṁmya° M °to tam arthaṁm abhi° B °bhisaṁbhâvayi° BM °ti ‖ çishi°. — 10. M °ekasya ° m evaṁ ° udapâsi.

11. M kâmâ parivitarka ani° B °dharmâ a° M °dharmâḥ ‖. — 12. M °pîmâṁ saita°. — 13. M °çravaṇo gauttamo ° çishipattane mri° B °linasya ayam evaṁ cetasaḥ paritarko udapâçi ‖ kâ° M °cetaso parivitarko udapâsi ‖ kâmo ani° B °nityaduḥkhâ vipariṇâma-dharmo yaṁ nû° M °dharmo ‖ atha khalu mâro pâpîmâṁ yaṁ nû ° vicakshuḥka°. — 15. M °thâye 'dhyabhâshaḥ ‖.

17. M driḍho nâma mayo pâço carati mânase B °mânasa tu ‖. — 18. BM na tvaṁ va(M °va)cnayishyâ° M °çravaṇa mokshasi ‖.

अथ खलु भगवां मारं पापीमं गाथाये प्रत्यभाषे ॥

> पंचकामगुणा लोके मनः षष्ठं प्रवेदितं ।
> तत्र मे विगतो छन्दो विध्वस्तो विनलीकृतो ।
> एवं जानाहि पापीमं निहतो त्वमसि अन्तक ॥

अथ खलु मारस्य पापीयस एतदभूषि । जानाति खलु मे श्रमणो गौतमो 5
ति । दुःखी दुर्मनो विप्रतिसारी तत्रैवान्तरहायि । एवं एतं श्रूयति ॥

भगवान्सम्यक्संबुद्धो यदर्थं समुदागतो तमर्थमभिसंभावयित्वा वाराणस्यां वि-
हरति ऋषिवदने मृगदावे ॥ अथ खलु भगवतो एकस्य रहोगतस्य प्रतिसंलीनस्य
अयमेव चेतसो परिवितर्को उदपासि [३९६b] उपधिरमिलो दुःखो विपरिणाम-
धर्मो ति ॥ अथ खलु मारस्य पापीयस एतदभूषि ॥ श्रमणो गौतमो वाराण- 10
स्यां विहरति ऋषिवदने मृगदावे एकस्य रहोगतस्य प्रतिसंलीनस्य अयमेवरूपो
चेतसः परिवितर्को उदपासि उपधिरमिलो दुःखो विपरिणामधर्मो ति यं नूनाहं
उपसंक्रमेयं विचक्षुकर्माय ॥ अथ खलु मारो पापीमां येन भगवांस्तेनोपसंक्रमित्वा
भगवन्तं गाथाये ध्यभाषे ॥

> नन्दति पुत्रेहि पुत्रिमां 15
> गोमिको गोहि तथैव नन्दति ।
> उपधीहि नन्दति जनो
> न हि सो नन्दति यो निरुपधि ॥

1. M °gavān māraṃ pāpi gā°. — 2. M °guṇopeto manaḥ° BM °shashṭhā pravedītā | . — 3. B °ato vinaṭi° M °ato vidalīkṛtāḥ | . — 4. M °jānāmi pā° hata tva° BM °antakaḥ | . — 5¹. M °pīyasyaitā°. — 5². M jānāmi khu° çravaṇo gauttamo 6 B °mo ti duḥ°.

6¹. M duḥkhī du° B °hāyi e°. — 6². BM °taṃ çruya°. — 7. B bhagavān saṃmya° M °kasaṃbodhi ya° BM °harati | ṛi°. — 8. M °ekatya raho° B °cetasa parivitarko udapāsi upadhi° M °rko udapāsi | upadhi° BM °duḥkhā vipari° M °dharmeti | . — 10¹. M °pāsasya etad a°. — 10². M çravaṇa gauttamo° B °harati | ṛi° M °ṛishipattane mṛ° ekasya raho° pratisaṃlāyamasya ayam evarūpaç cetasa parivitarka udapāsi upadhi° B °eko udapāsi | upadhi° BM °rme ti | yaṃ nū°.

13. BM °pīmaṃ (M °pīmā) yena bhagavāṃs te (M °vānate)no° M °gavantā gāthāye adhya° B °sho na°. — 15. B nandati | putre° BM °mān gopiko gopi (M °pike ta° nadati n°.

17. B upadhīti (M °pavīthi) nandati ja° M °rupadhiḥ | .

अथ खलु भगवां मारं पापीमं गाथाये प्रत्यभाषे ॥

शोचति पुत्रेहि पुत्रिमां
गोमिको गोहि तथैव शोचति ।
उपधीहि जनो प्रबाधितो
5 न हि शोचति यो निरुपधिः ॥

अथ खलु मारो पापीमां जानाति मां श्रमणो गौतमो ति दुःखी दुर्मनो विप्रतिसारी तत्रैवान्तरहाये । इत्यमेतं श्रूयति ॥

सुविमलविमलस्य निर्मलस्य शुचिस्य
भगवतो श्रमणवरो कीर्तितो गौतमस्य ।
10 तमरहितं प्रदेशं सर्वसत्त्वान देति
सर्वजगतः क्रियाभिर्निर्वृतिं प्रापुणोति ॥

भिक्षू भगवन्तमाहन्सुः ॥ कथं भगवानुदानं भाषति ॥

यस्मिं न माया वसति न मानं
यो वीतरागो अममो निराशो ।
15 प्रणुन्नक्रोधो अभिनिर्वृतात्मा
सो ब्राह्मणो स श्रमणो स भिक्षुः ॥

अस्माभिरपि भगवन् कथं पिण्डाय चरितव्यं भवति भिक्षां देहीति ॥ भगवानाह ॥ न होति तूष्णीभूतेन उद्देशेन स्थातव्यं । एवमार्याणां याचनं ॥

भूतपूर्वं भिक्षवो अतीतमध्वानि इहैव वाराणस्यां नगरे राजपुत्रस्य आक्षिसेनो 20 नाम पुरोहितपुत्रो वयस्यो । सो कामेषु आदीनवं दृष्ट्वा परिव्राजकप्रव्रज्यां प्रव-

1. M °bhagāṁ mā° BM °māro yaṁ viditvā māraṁ pā° B °bhikṣu so°. — 2. BM socati putre° sahi gopiśhis tathaiva ca socati | (M °ti) n°. — 4. M upadhihi janā prabadhitā na hi° B °janā prapodhito ° rupadhuḥ ||.
6. M °çravaṇo gauttamo ti duḥkhi daumanā tatrairvānta° B °rammo tatrai° BM °hāye i°. — 7. BM °taṁ çruya°. — 8. M suvimalavimalasya çu° BM °gavato mahāvaryo° B °gauttasya | M °gauttamasya. — 10. B tam ahasita pra° M tam ahasitasya pra° BM °dese sarvajagatakṛitamābhir nirvṛitiṁ (M °tiṁ) prā°.
12¹. M bhikṣu bha° m āhaṁsuḥ || B °hetuḥ ||. — 12². B kaṁ bha°. — 13. BM yasmiṁ gayāyāṁ vasati na mānaṁ°. — 15. BM praṇunnkrodho (M °dho) a° M °vṛitātma so° B °hmaṇo çra° M °hmaṇo çravaṇo sa bhikṣuḥ.
17¹. BM °gavān kathaṁ°. — 19. M °tīam adhvānaṁ i° BM °sya so°. — 20. M °jitaḥ kao° pathe samādā° B °dānavarti°.

जितो कौमारब्रह्मचारी दशकुशलपथसमादायवर्ती वेदपारगो परिव्राजकशा-स्त्रेषु गतिंगतो ॥ सो दानि राजपुत्रो राज्यप्राप्तो सो तं अक्षिसेनं पुरोहितपुत्रं गाथाये अध्यभाषे ॥

नैव द्विषन्ति सप्रज्ञा अक्षिसेन वनीपकं ।
ब्रह्मचारि प्रियो मे सि याचे यद्धि यदिच्छसि ॥ 5

अथ खलु भिक्षवो अक्षिसेनो वनीपको गाथाये प्रत्यभाषे ॥

याचेन्तो अप्रियो भवति अदेन्तो भवति अप्रियो ।
तस्मात्त्वन्तं न याचामि मा मे विद्वेषणा भवेत् ॥

अथ खलु भिक्षवः स काशिराजा अक्षिसेनं वनीपकं गाथाये प्रत्यभा[397]षे ॥

यो हि याचनको सन्तो याचितव्यं न याचति । 10
परं च पुण्यं त्याजेति आत्मना च विहन्यति ॥

अथ खलु भिक्षवः अक्षिसेनो वनीपको तं काशिराजं प्रत्यभाषे ॥

याचनां रोदनमाहु अदानं प्रतिरोदनं ।
तस्मात्त्वन्तं न याचामि मा मे आरोदनं भवेत् ॥
न वै याचति सप्रज्ञो आर्यो वेदितुमर्हति । 15
उद्दिश्य आर्या तिष्ठन्ति एषा आर्याण याचना ॥

अथ खलु भिक्षवः स काशिराजा अक्षिसेनं वनीपकं गाथाये प्रत्यभाषे ॥

ददामि ते ब्राह्मण रोहिणीनां
पूर्णं सहस्रं सह पुङ्गवेन ।

4. M naivaṁ vidu °jñā adhisenaṁ va° B °jñā asthisenaṁ va° BM °kaṁ bra°. — 5. BM °cāri(M °ri) priyā me si yāci bruhme° M °yadicchasi ]. —
6. M °seno purohitaputro taṁ kāci(?)jaṁ gā° B °alpakaṁ gā°. — 8. M °d bhavanto yācemi° B °vantaṁ yāca°. — 9. M °bhavo sa°. — 10. M °vyaṁ na cāti ]. —
11. BM °vyaṁ tyaje°. — 12. M °nipakaṁ taṁ°. — 13. M yācanaṁ rodanamāhuḥ adā° B °rodanam āhu ] a°. — 14. BM °d bhava(B °bhaga)vantaṁ° BM °me aro yā°. —
15. M na ca vai ° prajñā āryaṁ° B °prajña āryo°
16. M °ddeça āryā ti° B °asho āryā° M °asho āryāṇa yācanā ]. — 17. M °bhāsha-ti ]. — 18. B °hmane pura° M °hmana purahiṇīnāṁ pūrṇasahasraṁ alapaṁgavena ] B °pūrṇasahasraṁ mahatpuṅga°.

आर्यो हि आर्यस्य कथं न दृष्ट्वा
श्रुत्वान गाथां कथितां सुभाषितां ॥

भगवानाह ॥ अन्यो भिक्षवस्तदा स काशिराज्ञो अखिसेनो नाम पुरोहितपुत्रो परिव्राजको वयस्यो अभूषि । अहं स तदा अखिसेनो परिव्राजको अभूषि ॥

5 अखिसेनस्य जातकं समाप्तं ॥

भगवानाह ॥

न वै याचति सप्रज्ञो नार्यो वेदयितुमर्हति ।
उद्दिश्य आर्यास्तिष्ठन्ते एषा आर्याण याचना ॥

एवं भिक्षवः पिण्डचारं चरितव्यं ॥ ते दानि भिक्षू भगवन्तमाहंसुः ॥ किम-
10 स्माभिर्भगवं भिक्षाये लब्धाये वक्तव्यं स्वस्ति स्वस्तीति ॥ भगवानाह ॥ न भिक्षवो युष्माभिरादिशितव्यं भिक्षायां लब्धायां ।

सर्वपापस्याकरणं कुशलस्योपसंपदा ।
स्वचित्तपर्यवदापनं एतद्बुद्धानुशासनं ॥

ते दानि भिक्षू ऋषिवदने मृगदावे वर्षोषिता दिशोदिशं चारिकां प्रक्रान्ता ॥
15 ऋषिवदने देवता तेषां भिक्षूणां स्थानानि चंक्रमाणि निषद्यानि शय्यानि शून्यानि निरभिरम्याणि दृष्ट्वा रतिं अविन्दन्ती येन भगवांस्तेनोपसंक्रमित्वा भगवन्तं गाथाये प्रत्यभाषे ॥

अरति मे विषये च ख्यायति
शून्यं दृष्ट्व विविक्तमानुषं ।

1. B ârya hi° BM °dṛṣṭvâ unda ° thâṃ bhurimaṃ su°. — 3ᵃ. B nânyo bhi° M °kshavo tadâ ° râjña sadhi° B °râjâ sathi° M °hitabuddho pari°. — 4. M °seno nâma pa ° jaka a°. — 5. M iti çrîmahâvastunavadâne sathi°.

7. BM nâryo(B °ryâ) vedayati nâryo ve° B °yitaṃm arhati | . — 8. M °ça âryyâ tishṭhante | e°. — 9ᵃ. M °kshavo pi°. — 9ᵇ. M °bhikshur bhagavantam âhuṃsuḥ | B °vantaṃm â°. — 9ᶜ. M °smâbhiḥ bhagavan bhikshâ°. — 10ᵇ. M °shmâbhiḥ rodiçitavyâ bhikshâ° B °çitavyâ bhikshâ°.

12. M °çalasyâpasaṃ°. — 13. B °ryâdamanaṃ e° M °ryyâdamanaṃ e°. — 14. B °kshû rishi° M °rishipattane mṛ ° roshopitâni diço diçaṃ carikâṃ° B °prakântâ ṛi° — 15. B rishivadane de° M °devatâs teshâṃ ° sthânâni nishadyâni çayyâçi ri° ndati | yena bhagavân teno° B °ndanti yena bhagavâṃ°.

18. B aratiya vija me yasya khyâyati çûnyâṃ dṛishṭvâ viviktamânusâṃ | M aratiṃ vishayamanyâ âkhyâyati | çûnyâṃ dṛishṭvâ viviktamânusâṃ | .

ते चित्रकथा बहुश्रुता
कहिं ते गौतम श्रावका गता ॥

भगवानाह ॥

मगधां गता कोशलां गता
वज्जिभूमिं च यथापरे गता । 5
मृगका व असंगचारिणो
प्रविविक्ता विहरन्ति भिक्षवः ॥

भगवां प्रस्थितो । नाविकेन भगवन्तं दृष्ट्वा गंगातीरमुपसंक्रमन्तं नावा अक्षो-पिता ॥ भगवां नावमारुह्य नाविकमाह ॥

सिंच भिक्षु इमां नावां मैत्राये सिक्ता ते लघु भेष्यति । 10
छित्त्वा रागं च दोषं च ततो निर्वाणमेष्यसि ॥
सिंच भिक्षु इमां नावां करुणाय सिक्ता ते लघु भे[397a]ष्यति ।
छित्त्वा रागं च दोषं च ततो निर्वाणमेष्यसि ॥
सिंच भिक्षु इमां नावां मुदिताय सिक्ता ते लघु भेष्यति ।
छित्त्वा रागं च दोषं च ततो निर्वाणमेष्यसि ॥ 15
सिंच भिक्षु इमां नावां उपेक्षाये सिक्ता ते लघु भेष्यति ।
छित्त्वा रागं च दोषं च ततो निर्वाणमेष्यसि ॥
मैत्राविहारी यो भिक्षुः प्रसन्नो बुद्धशासने ।
अधिगच्छति पदं शान्तं असेचनं च मोचनं ॥
करुणाविहारी यो भिक्षु प्रसन्नो बुद्धशासने । 20
अधिगच्छति पदं शान्तं अपृथग्जनसेवितं ॥
मुदिताविहारी यो भिक्षु प्रसन्नो बुद्धशासने ।

1. M te cittakathā° B °trakathāṃ ba° M °gautama çrā°. — 4. M magadhāṃ° BM °koçalā gatā vajri( M °vajji)bhūmiṃ ca || a° gatā mṛ°.

6. B °gakāṃ ca asaṃ° M °gakāṃ ca naṃ saṃgacā° B °pravivikta°. — 8a. M bhagavān pratisthito ||. — 8b. M nākitena bha°. — 9. M °gavā nāvam āruhya°. — 10. M °maitrā-ya si° BM °kṣāye la° B °ghu bheṣyati ||.

11. B cchitvā rā° M cchinnā rā° BM °ṣyati ||. — 12. M °kṣu imāṃ° nā siktā la°. — 13. M citvā rā° B cchitvā rā° °ṣyati | M °ṣyati | mai° (l. 18). — 15. B cchitvā rā°.

16. B °kṣāye laghu te bhe°. — 17. B cchitvā rā° °ṣyati ||. — 18. M °hārī yo bhi-kṣu pra°. — 19. BM °cchanti pa° B °secanamo°. — 20. M °hārī yo bhikṣuḥ pra°.

21. B °cchanti pa° M °cchantu pa° °ntaṃ pṛthagjanasevanaṃ ||. — 22. M °hārī yo bhi° çāsano ||.

अध्यात्मरतो समाहितो
एको संतुषितो तमाहु भिक्षु ॥
चक्षुषा संवरो साधु साधु श्रोत्रेण संवरः ।
घ्राणेन संवरो साधु साधु जिह्वाय संवरो ॥
कायेन संवरो साधु मनसा साधु संवरः । 5
सर्वत्र संवृतो भिक्षुः सर्वदुःखा प्रमुच्यते ॥

सो दानि भगवता एहीभावेन विनीतो । एहि भिक्षु चरां मायां ति आभाषितस्य यत्किंचिद्गृहिलिंगं गृहिगुप्तं गृहिध्वजं गृहिकल्पं सर्वं समन्तर्हितं त्रिचीवरं चास्य प्रादुर्भवेत् सुमुण्डं च पात्रं प्रकृतिस्वभावसंस्थिता च केशा ईर्यापथं चास्य संस्थिहे तद्यथापि नाम वर्षशतोपसंपन्नस्य भिक्षुस्य ॥ एवं आयुष्मतो गमियकस्य मानविकस्य 10 प्रव्रज्या उपसंपदा भिक्षुभावो ॥

तं तर्हि भ[३९८']गवां विसर्जयति ॥ सो दानि भगवन्तं आह ॥ यदि भगवं केनचित्पृच्छियेयं को त्वं ति किं मया भगवं वक्तव्यं ॥ भगवानाह ॥ श्रमणो पि त्वं ब्राह्मणो पि त्वं वेदको पि त्वं तारको पि त्वं पारगो पि त्वं ॥

शक्रो देवानामिन्द्रो माणवकवर्णमात्मानं चादीयि अभिनिर्मिणित्वा प्रासादिको 15 दर्शनीयो शोभनेहि जटेहि नीलेहि नीलमयूरग्रीवसंनिकाशेहि सौवर्णेन दण्डकमण्डलुना भगवतो पात्रचीवरमुण्डिकमादाय पृष्ठतो गच्छति ॥ जनो आह ॥ को स्वायं माणवको प्रासादिको दर्शनीयो ॥ सो दानि आह ॥

यो वीरो धृतिसंपन्नो ध्यायी अप्रतिपुद्गलो ॥
अर्हन्तो सुगतो लोके तस्याहं परिचारको ॥ 20

1. M adhyācara ° ekā so° BM °bhikshuḥ ‖. — 3. BM cakshuṣā saṃvaro° M °çrotena saṃvaraḥ | B °ṇa saṃvaraḥ |. — 4. B prāṇe° BM °ṇa saṃvaro sādhu sādhu jihvāya saṃvaro |. — 5. B °yena saṃvaru sādhu ma° BM °dhu saṃvaraḥ (M °ro) sa°.

6. M °tra saṃvaru bhi° duḥkhāṃ pra°. — 7¹. BM °nāsa bhi°. — 7². B °bhikshuḥ | 7³ M °nāsā ti ābhāṣasya yat kiṃci° B °ābhāṣitasya yat kiṃcilliṅgaṃ° M °dgṛhiliṅga gṛhiguptiṃ gṛhidhvajaṃ gṛhikalpaṃ° B °jaṃ gṛhikalpaṃ° BM °rhitavataḥ | (M °vetaḥ) saṃ° M °svabhāvaṃ saṃsthitā ca keçā iryyā° B °keçā iryā° BM °he ‖ tadya° M °topasampanna° BM °kshusya e°. — 10. M °bhikshuḥ |.

12¹. BM tahiṃ°. — 12². M °vantaṃ āha ‖. — 12³. B °bhagavāṃ ko° M °bhagavāṃ kena cin pṛcchīyeyaṃ ko tvaṃ ti kiṃ° gavaṃ vakta°. — 13². M çramaṇo pi tvaṃ bra°. — 15. B °rūpaṃ ātmānaṃ ??° M °tmānaṃ çikhā° çobhanehi jaṭe° B °jaṭehi nile° M °yūlagrīvehi saṃ° B °saṃvarṇena yaṣṭi° B °janā | āha°.

18². BM kasyāyaṃ°. — 19. M °dhṛtisampanno ° pudgalaḥ | B °pratipudgalo |. — 20. B arhan suga° M | arhaṃ suga°.

यो वुह्यमानं तारेति धर्मनावाय गौतमो ।
उत्तीर्णो पारगो बुद्धो तस्याहं परिचारको ॥

भगवां पि शक्रं देवानामिन्द्रं विसर्जयति ॥

अथ खलु भगवतो एतदभूषि ॥ किमधिमुक्ता जटिला जटिला खलु जटिला-धिमुक्ता ति भगवां जटिलसहस्रं अभिनिर्मिणित्वा प्रासादिकां प्रसादनीयां महेशाख्यां तेहि संपरिवारितो वैहायसेन ऋद्धीये उरुविल्वाकाश्यपस्य जटिलस्य उपसंक्रान्तो ॥ उरुविल्वाकाश्यपः सपरिवारो सार्धं पंचहि जटिलशतेहि जटिलसहस्रं दृष्ट्वा प्रासादिकां च दर्शनीयां च संकोचमापन्नो । इमं शाक्यकुमारस्य सर्वो उपस्थितो महाजनकायो आगमिष्यति ते चास्माकं अभिप्रसन्ना उरुविल्वाकाश्यपस्य ऋषिस्य सपरिवारस्य लोके समसमो नास्ति अयं च ऋषि जटिलसहस्रपरिवारो महर्द्धिको महानुभावो अद्येममिहाश्रमं प्राप्तो सर्वजनकायो एतस्य ऋषिस्य सहस्रपरिवारस्य महर्द्धिकस्य महानुभावस्याभिप्रसीदिष्यति । अभिप्रसन्ना च प्रसन्नाधिकारं करिष्यन्ति सत्करिष्यन्ति गुरुकरिष्यन्ति मानयिष्यन्ति पूजयिष्यन्ति अपचायिष्यन्ति मम सपरिवारस्य न तथा समन्वाहरिष्यन्ति ॥ अथ खलु भगवां उरुविल्वाकाश्यपस्य ऋषिस्य इममेवरूपं चेतसो परिवितर्कमाज्ञाय स्वयं जटिलवेशमन्तरहायितं च निर्मितं च जटिलसहस्रं ॥ अथ खलु उरुविल्वाकाश्यपो जटिलो तस्मिं जटिलसहस्रे अन्तर्हिते स्वकेन रूपेण च भगवन्तं दृष्ट्वा तथागतमर्हन्तं सम्यक्संबुद्धं विद्याचर[398b]णसंपन्नं सुगतं लोकविदं अनुत्तरं पुरुषदम्यसारथिं

1. M yo pūjyamānaṃ tāre dha° gautamo | . — 2. M tīrṇo° BM °haṃ paricārako |. — 4. B kiṃ adhimukti jaṭilā jaṭilā khalu jaṭilā ti muktā ti bha° M kiṃ adhimukti jaṭilo khalu jaṭilo ti muktā ti bhagavān jaṭi° °dikaṃ pradarçanīyaṃ maheçākhyaṃ | te° B °kāṃ pradanīyāṃ maheçākhye tehi saṃparicārikaṃto vai° M °vārikaṃto vai° B °ddhiye uruvilvākāçya jaṭi° BM °nto uru°.

7. M °çyapo sapari° pañcahi jaṭilasahasraṃ hi dṛ° °ca āpannaṃ B °rasa I°. — 8. BM imaṃ çākyakuma āgame sa° M °sarve upasthi° BM °miṣyati | tenāsmākaṃ° B °prasanno u° lokaṃ samasa° BM °nāsti | ayaṃ° M °pto sarvejanakā°.

12. M abhiprasannānāṃ ca °pūjayiṣyanti mama sa° °nvahariṣyanti || . — 14. M °çyapāu uru° B °ulvilvā° M °idam e° se parikitarkam ājñāpaya svayaṃ jaṭilo ve° ntarhāyitaṃ | B °rmitaṃ jaṭi°.

16. BM °çyapo jaṭilo(M °lā) tena jaṭilasahasreṇāntarhi° M °rhantā saṃmyakaṃ° B °nnaṃ sugata lokavid anutta° BM °ṣyaçrathiṃ° thāgatabalehi balavāṃ caturhi vai° M °tiamadamathaprāptaṃ nāgo viya kāritakāraṇo avahirgatena mānase° B °indriyeṇa avarhirga° M °jitendriye hradam accho anāvilo viṃprasanne ratnayūthaṃ vā abhyu° B °yūthaṃ vā abhyu° tejarāçiṃ° kaṃ apratikūlaṃ° M °kaṃ apratikulaṃ darçanāye B °rçanāya dṛ°.

शास्तारं देवानां च मनुष्याणां च द्वात्रिंशतीहि महापुरुषलक्षणेहि समन्वागतं अशीतिहि अनुव्यंजनेहि उपशोभितशरीरं अष्टादशेहि आवेणिकेहि बुद्धधर्मेहि समन्वागतं दशहि तथागतबलेहि बलवन्तं चतुर्हि वैशारद्येहि विशारदं प्रासादिकं प्रसादनीयं च शान्तेन्द्रियं शान्तमानसं उत्तमदमशमथप्राप्तं परमदमशमथप्राप्तं नागो विय कारितकारणो अन्तर्गतेहि इन्द्रियेहि अबहिर्गतेन मानसेन स्थितेन धर्मताप्राप्तेन गुप्तो नागो जितेन्द्रियो ह्रदमिवाच्छो अनाविलो विप्रसन्नो रत्नयूपं व अभ्युद्गतं सुवर्णबिम्बमिव प्रभासयन्तं तेजोराशिं श्रियेये दीप्यमानं द्वितीयमिव आदित्यं उदयन्तं असेचनकं अप्रतिकूलं दर्शनाय । दृष्ट्वा च पुनरुरुविल्वाकाश्यपो सपरिवारो विस्मितो अभूषि । महर्द्धिको श्रमणो गौतमो महानुभावो यं चाहं पुनर्महर्द्धिकतरो ॥

अथ खलु ते जटिला आगतागतो भगवन्तमुपसंक्रमेन्सु: भगवत: पादौ शिरसा वन्दित्वा भगवन्तमेव पुरस्करेन्सु: भगवतो दर्शनेन न तृप्येन्सु: ॥ अथ उरुविल्वाकाश्यपस्य ऋषिस्य एतदभूषि ॥ अहो पुनर्मे आश्रमातो श्रमणो गौतमो अन्येन प्रक्रमेया ॥ अथ भगवानुरुविल्वाकाश्यपस्य ऋषिस्य इममेवरूपं चेतसो परिवितर्कमाज्ञाय तद्यथापि नाम बलवां पुरुषो संमिंजितां वा बाहां प्रसारये प्रसारितां वा बाहां संमिंजये एत्तकेन क्षणवीतिहारेण उरुविल्वाकाश्यपस्य ऋषिस्याश्रमातो वैहायसमभ्युद्गम्य उरुविल्वायां सेनापतिग्रामके प्रत्यस्थासि नद्या नैरंजनायास्तीरे अजपालस्य न्यग्रोधमूले ॥ अथ खलु उरुविल्वाकाश्यपस्य जटिलवृत्ते: अपगतेन अन्नाद्येन एतदभूषि ॥ अहो पुन: श्रमणो गौतमो इहागतो इहागतो खादनीयं भोजनीयं परिभुंजेया ॥ अथ खलु भगवां उरुविल्वाकाश्यपस्य जटिलस्य इमं एवरूपं चेतस: परिवितर्कमाज्ञाय तद्यथापि नाम बलवां पुरुषो सम्मिंजितां वा बाहां प्रसारये प्रसारितां वा बाहां संमिञ्जये एत्तकेन क्षणवीतिहारेण अजपालस्य न्यग्रोधमूलातो वैहायसमभ्युद्ग[399a]म्य उरुविल्वाकाश्यपस्य

8. B *hi ma*. — 9. M *çravaṇo gauta mahānubhāvo yaṁ a* B *r mardāhi* M *rddhiko yaṁ ‖.

11. B *āgatāgatā bha* BM *metuḥ bhagavataḥ(M *to) pā* M *tvā bhagavantamavantam n* BM *retuḥ bha * pyetuḥ ‖. — 12. M atha khalu u * ṣhiyaita*. — 13. M *çravaṇo gautamo mama pra* B *kramayā ‖. — 14. M atha khalu bhagavāṁ uru* B *çyapaçya ṛi* M *çyapasya çiṣya i* BM *jñāya ta * balavāṁ pu(M *vāṁ pu)ruṣo samiñjitaṁ vā bāhāṁ prasārayet prasāritāṁ bāhāṁ sami(M sammiñ)jayet(M *ye | ) etta* M *vītihāre* B *çyapapaçya ṛi* BM *vaihāyasam abhudga * sthāsi(M *sī | ) nadyāṁ nai*.
18. B *ṭilasya vṛtteḥ | pathaga* M *ṭilasya vṛtte pathāga *yeṇa ita*. — 19. M *çravaṇo gautamo * ehe ihāgataḥ khā*. — 20. M *gavāṁ uru * çyapajaṭ * m evaṁrū * vitarka* puruṣaḥ saṁ* BM *ritāṁ(M *taṁ) bāhāṁ* M *saṁmiñja * vītihāre*.

जटिलस्याश्रमे प्रक्रमामि ॥ अथ खलु उरुविल्वाकाश्यपस्य जटिलस्य सपरिवा-
रस्य एतदभूषि ॥ महर्द्धिको श्रमणो गौतमो महानुभावो परसत्वानां परपुद्गलानां
चित्तेन चित्तं आजानाति महर्द्धिकतरा च वयं ॥ अथ खलु उरुविल्वाकाश्यपो
जटिलो भगवन्तं स्वहस्तेन प्रणीतेन खादनीयभोजनीयेन सन्तर्पयति ॥ अथ खलु
5 भगवां भुक्तावी धौतपात्र अपनीतपाणिरुरुविल्वाकाश्यपस्य ऋषिस्य जटिलस्य तं
देयधर्मं इमायानुमोदनायानुमोदये ॥

अग्निहोत्रमुखा यज्ञा सावित्री छन्दसां मुखं ।
राजा मुखं मनुष्याणां नदीनां सागरो मुखं ॥
नक्षत्राणां चन्द्रो मुखं . . . . . . . . . . ।
10 आदित्यो तपतां ऊर्ध्वं तिर्यगधस्तपस्वतां ।
सदेवकस्य लोकस्य संबुद्धो वदतां वरो ॥

अथ खलु उरुविल्वाकाश्यपो सपरिवारो वैहायसमन्तरीक्षे स्थितो अग्निं जुह्वति
तेषां तमग्निं न ज्वलति तेषामेतदभूषि ॥ कस्यायमनुभावो येनाग्निं न ज्वलति ।
नूनं श्रमणस्य गौतमस्यानुभावेन ॥ सो दानि अग्निः प्रज्वलितो तेषामेतदभूषि ॥
15 महर्द्धिको श्रमणो गौतमो महानुभावो वयं पुनः महर्द्धिकतरा ॥ तर्हि अग्निस्मिं
आहुतिं प्रक्षिपन्ति न च पतति तेषामेतदभूषि ॥ कस्यायमनुभावो येनाग्निस्मिं आहु-
तीं न पतति । नूनं श्रमणस्य गौतमस्यानुभावेन । यतो सानं एवं भवति श्रमणस्य
गौतमस्यानुभावो ति ततः सा आहुतिरग्निहोत्रस्मिं पतति ॥ अग्निं जुह्वन्तानो-

1. B °hi ma°. — 2. M °çravaṇo gauttamo° BM °tvānāṃ parapudgalā(M °gavā)nāṃ cittena cittaṃ(B °na citte) jā° riddhikataro ca va(B °ca va)yaṃ ||. — 3. M °gavanta sva-hastena khādani° B °khādanīyabho° M °saṃtarppayati paricārayati ||. — 4. M °pāṇir uru° imāṃyānumodanā° B °mayānumodāyānumodaye ||.

7. B °khā yajño sā° M °khā prajñā sā° BM °sāṃ mukhā ||. — 8. M rājā mukhaṃ cchandasāṃ nadī °ro mukhā ||. — 9. BM °khaṃ āditi°. — 10. B °sāṃ ūrddhaṃ ti° M °sāṃ urddhaṃtiryagdhastayovatāṃ B °stapovatāṃ ||.

11. BM jagatāṃ gato sa° M °devasya lo° saṃmukho vadatāṃ varaḥ ||. — 12. M °lu ulaviltvā° B °juhati teshāṃ° M °hunti | teshāṃ tāṃ agniṃ na jvaleti teshā°. — 13. B °bhāvenāgni° M °bhāvo nā °gnir na°. — 14¹. M °çravaṇasya gauttama°. — 14². M °agnir prajva°. — 15¹ B maharddhi çra° M °çravaṇo gauttamo ° punar maha° BM °tarā taṃ°. — 15². B taṃ agniṃsmiṃ° M tam agnismiṃ° BM °kshipanta na° B °ca patanti te° M °teshāṃ eta°.

16. BM °bhāvenā° M °nāgniṃ āhuti na°. — 17¹. M °çravaṇasya gauttama° BM °vena yato°. — 17². BM °bhavati | çrama(M °çravaṇa° M °gauttama° BM °va ti | tataḥ (M °tato) sā° M °āhuti agnihotrasmiṃ° BM °ti a°. — 18. M °tā asta °hvyānti na° ettare BM °taṃ to°.

यातो ओतरिष्यामो ति न शक्नोन्ति ओतरितुं ॥ तेषामेतदभूषि ॥ कस्याय-
मनुभावो येनान्तरीयातो न शक्नोम आश्रमं ओतरितुं । नूनं श्रमणस्य गौतमस्या-
नुभावेन ॥ यतः सानं एतदभूषि श्रमणस्यायं गौतमस्यानुभावो ति अथ ततो
अन्तरीयातो आश्रमे प्रतिष्ठिता शिविकेषु स्वकस्वकेषु निषीदिष्यामो ति न च तानि
शिविकानि चड्डेन्सुः ॥ तेषामेतदभूषि ॥ कस्यायमनुभावो येन वयं शिविकां 5
न दृशेम । नूनं श्रमणस्य गौतमस्यानुभावेन ॥ यतो सानं एवं भवति श्रमणस्य
गौतमस्यानुभावो ति अथ तानि शिविकानि चड्डेन्सुः ॥ तेषामेतदभू[399b]षि ॥
महर्द्धिको श्रमणो गौतमो महानुभावो वयं पुनर्महर्द्धिकतरा ॥ पानीयकरकानि
आदाय उदकहारा गमिष्यामो ति न च तानि करकानि चड्डेन्सुः ॥ तेषामेत-
दभूषि ॥ कस्यायमनुभावो नूनं श्रमणस्य गौतमस्य । यतो सानं एवं भवति 10
श्रमणस्य गौतमस्यानुभावो ति अथ तानि स्वकस्वकानि करकानि चड्डेन्सुः ॥
तेषामेतदभूषि ॥ महर्द्धिको श्रमणो गौतमो महानुभावो वयं पुनर्महर्द्धिकतरा ॥
करकानि आदाय नैरंजनां नदीं उदकहारिं गता न च शक्नोन्ति तानि करकानि
भरयितुं ॥ तेषां एतदभूषि ॥ कस्यायमनुभावो नूनं श्रमणस्य गौतमस्य ॥ यतो
सानं एवं भवति श्रमणस्यायं गौतमस्यानुभावो ति अथ तानि करकानि उदकेन 15
भरेन्सुः ॥ तेषामेतदभूषि ॥ महर्द्धिको यं श्रमणो गौतमो महानुभावो वयं
पुनर्महर्द्धिकतरा ॥ आहारं करिष्यन्ति न च शक्नोन्ति आहारं कर्तुं ॥ तेषामेतद-

1[1]. B °ahi ka°. — 1[2]. B °bhāvenānta° M °bhāvenānta° kasmar āçramaṁ otaritaṁ. — 2. M °gauttama° BM °vena ya°. — 3. M °sānaṁ e° B °ahi | çramaṇa° M °ahi | çravaṇasyā gauttamasyānu° BM °vo ti || | atha° M °tato antar° BM °āçramaṁ pratiṣṭhitāni çivi(B °çi-vikeṣu svakasvakeṣu niṣīdi niṣīdiṣyāmo M °maṁti | na ca° B °tāni çivikāni adda-tsuḥ || M °çivikān adda°. — 5[1]. M teṣāṁ eta° BM °ahi ka°. — 5[2]. B °yaṁ çivikāṁ° M °driçāmo |.

6[1]. M °çravaṇasya gauttama° BM °vena ya°. — 6[2]. M °sānaṁ evaṁ ° çravaṇasya gauttamasyānubhāveti | a° B °çasyā gautamasyānubhāvoneti | atha tāni çivikāni addaçetsuḥ | M °çetsuḥ te°. — 7. B °ahi ma° M °ahi kasyā° (l. 10). — 8[1]. B °katarā pā°. — 8[2]. B pāniya karakāni ā °çetsuḥ te°. — 10[1]. M °bhāvaṁ nūnaṁ çravaṇasya gauttamasya. — 10[2]. M °yataḥ sā ° bhavati | çravaṇasya gauttamasyānubhāvoneti || atha° B °vo ti || atha ° çetsuḥ | M °çetsuḥ.

12[1]. M teṣāṁ eta° BM °ahi ma°. — 12[2]. M °çravaṇo gauttamo ° puna maha°. — 13. M karaṁkāni ā° B °dāya | nai ° hāragatā na° M °hāriṁ gato na° BM °knoti tā ° kā-ni bhara°. — 14[1]. M teṣāṁ eta° B °ahi ka°. — 15[1]. M kasyānu° B °syāyanu° M °çrava-ṇasya gauttama°. — 15[2]. M yato sānaṁ evaṁ ° çravaṇa ° gauttamasyānubhāveti || atha° B °vo ti | atha ° kena bhareṭsuḥ te° M °kena bhareṣyetsuh.

16[1]. B °ahi ma°. — 16[2]. M °çravaṇo gauttamasyāyaṁ anubhāvo ti || vayaṁ° BM °tarā ā°. — 17[1]. M āharaṁ kari° B °ṣyati | na çaknoti ā° M °knoti ā° B °kartuṁ te°. — 17[2]. B °ahi ka°.

मूषि ॥ कस्यायमनुभावो नूनं श्रमणस्य गौतमस्य ॥ यतो सानं एवं भवति
श्रमणस्यायं गौतमस्यानुभावो त्ति ततः शक्नोन्ति आहारं कर्तुं ॥ तेषामेतदभूषि ॥
महर्द्धिको श्रमणो गौतमः महानुभावो वयं पुनर्महर्द्धिकतरा ॥ कृताहारा काष्ठा-
नि पातयिष्यामो ति उत्क्षिपितानि कुठाराणि न शक्नोन्ति निक्षिपितुं ॥ तेषामे-
5 तदभूषि ॥ कस्यायमनुभावो नूनं श्रमणस्य गौतमस्य ॥ यतो सानं एवं भवति
श्रमणस्य गौतमस्यायमनुभावो ति अथ तानि कुठाराणि उत्क्षिप्तानि निक्षिपेन्सुः
तानि च काष्ठानि पातयेन्सुः ॥ तेषां एतदभूषि ॥ महर्द्धिको यं श्रमणो गौतमो
महानुभावो वयं पुनर्महर्द्धिकतराः ॥

एवं भगवां उरुबिल्वाकाश्यपस्य संमुखा त्रयो भ्रातरां सपरिवारां पंचहि प्रा-
10 तिहार्यशतेहि विनयेसि । पश्चिमं प्रातिहार्यं ॥ भगवां प्रतिसंलीयितुकामो
उरुबिल्वाकाश्यपमाह ॥ काश्यप अत्र अग्निशरणस्मिं ते संलयिष्यामीति ॥ उरु-
बिल्वाकाश्यपो आह ॥ सो गौतम अग्निशरणो अप्रवेश्यो केनचित् मनुष्येण वा
अमनुष्येण वा अत्र सरणे दुष्टनागो प्रतिवसति । वयं पि तावदेतं अग्निशरणं
दूरे परिवर्जेम तस्य दुष्टनागस्य भयेन ॥ भगवानाह ॥ अनुजानाहि त्वं काश्यप
15 प्रतिसंलयिष्यामि अहमत्रा[400a]ग्निशरणे ॥ उरुबिल्वाकाश्यपो आह ॥ न ते
भो गौतम अग्निशरणं अनुजानामि । अत्र दोष एव आख्यायति एतं अग्निशरणं
इमानि च बहूनि तृणकुटिकापर्णकुटिकाशतानि यत्र भवां गौतमो नन्दति तत्र
प्रतिलीयतु ॥ अथ खलु भगवां उत्थायासनातो उरुबिल्वाकाश्यपस्याग्निशरणं

1¹. BM °yâmubhâvo(M °vam) nû° M °çravaṇasya gauttamasya B °masya ta°. — 1². B ta-yo sâ° M °bhavati | mahardhiko yam çravaṇo gauttamasyânubhâvonti | tato çaknoti â° B °bhâvanti | tataḥ çaknuti â ° rttum te°. — 2. B °shi ma°. — 3¹. M °çravaṇo gauttamo mahâ° B °bhâvam vayam° M °punaḥ maha° BM °tarâ kṛi°. — 3². B °hâro | kâshṭhâni pâtamishyâmo ti ukshipitâ° M °shyâmeti ukshipitâ° BM °kuthâraṇi(M °ni) na° B °çaknoti nikshipitum te°. — 5¹. M °çravaṇasya gauttama°. — 5². M °çravaṇasya gauttamasyâyam anubhâveti || a° B °vo ti || atha tâni kuṭhâ° M °kuthârâ° BM °kshu(M °kshu)ptenuḥ (B °tauḥ | ) tâni ca kâ° B °pâtayentuḥ | M °pâtayetuḥ.

7¹. M teshâm eta° BM °shi ma°. — 7². M °çravaṇo gauttamo ° punaḥ maha°. — 9. M °gavân uru ° mukhât trayo ° hâryyaçata° B °vinamesi pa°. — 10². BM °gavâm pra-(M °vân pra)tilîiyatu°.

11¹. M kâçyapo ato agni° B °pa ato agni° BM °çaraṇam hi te sanîçayi°. — 11². M °çyapam âha ||. — 12. M °gauttamo eko agni° B °gauttamo agni° BM °veshya te(M °te |)na keç M °kena)cit mamushyeṇa vâ atra sa(M °tra çaraṇe° M °dushṭhanâ°. — 13. M °pari-tarjjema | ta° B °rjema | ta ° bhayena ||. — 14². M °mi atrâham agniçaraṇe ||. — 15¹. M °çyapa â°. — 15². M °gauttamo agni° B °gautamo agni° BM °mi a°.

16. M °dosho evam âkhyâyasi etam° B °sha evam âkhyâyasi | etam° M °bahuni tṛiṇakuṭṭikâparṇakuṭṭikâḥ ca ° gauttamo abhinandati tatra me pra°. — 18. M °gavân uttâ° B °tthâyasanâto ° ṇam prativiçi°.

प्रविशित्वा निषीदे प्रतिसंलयनाय ॥ भगवान्दानि अग्निशरणे तेजोधातुं समापन्नो । सो दानि भगवतः तेजं असहन्तो यतो भगवतो पार्श्वं चतुर्हि महाराजेहि दिन्नं तत्र ओकस्तो । भगवता च मैत्र्या स्फुटो दमितो च निर्विषो संवृत्तो न च भूयो क्रोधं व्यावहति ॥ अग्निशरणो भगवतो तेजेन एकज्वालीभूतो दृश्यति ॥ तेषां जटिलानामेतदभूषि ॥ दुष्टनागेन गौतमो श्रमणो दग्धो अग्निशरणो च 5 सर्वं आदीप्तं ॥ ते दानि उदकमादाय प्रधाविता अग्निशरणं निर्वापयिष्यामो त्ति श्रमणं च गौतमं परिमोचयिष्यामो त्ति ॥ भगवां तं नागं दमेत्वा निर्विषं कृत्वा पात्रेणादाय उरुविल्वाकाश्यपस्योपनामयति ॥ उरुविल्वाकाश्यपो भगवतो पात्रगतं तन्नागं दृष्ट्वा सपरिवारो विस्मितो । महर्द्धिको श्रमणो गौतमो महानुभावो यत्र हि नाम यस्य भगवन्ननुयोगेन वा अननुयोगेन वा न शक्यं प्रवेष्टुं ति सो श्रमणस्य 10 गौतमस्य तेजेन पर्यादिन्नो ॥ अथ खलु उरुविल्वाकाश्यपस्य संमुखा ते त्रयो भ्रातरो सपरिवारा भगवता इमेन पश्चिमेन प्रातिहार्येण सर्वे अभिप्रसादिता ॥

दमयित्वा उरगराजं उरुविल्वकाश्यपअग्निशरणस्मिं ।
पात्रेण नीहरित्वा काश्यपजटिलियो उपनयासि ॥
एषो स्य पश्य काश्यप पर्यादिन्नो स्वतेजसा तेजो । 15
यस्य भवनं न शक्यं प्रवेष्टुमिह केनचिल्लोके ॥
संहृष्टरोमकूपो उरुविल्वाकाश्यपो सपरिवारो ।
नरनागेन हि नागो दान्तो उपशमयितो दृष्टो ॥
सो नागो यस्यार्थं महर्षिभवनं आसीद्दुःप्रवेशो ।
सो दान्तो निर्विषश्च कृतो यं पुण्यानुभावेन ॥ 20

2. B °tejāṃ asa° M °tejāṃ asa° °yataḥ bha° °turhi mahā° B °nnaṃ | ta°. — 3. B bhagavāṃ ca mai° M bhagavāṃ ca mai° B °sphuṭe da° M °sphuṭaṃ damitaṃ ca nirvishaṃ saṃvṛttaṃ na vā ca bhū° B °hati ca agni°. — 4. B °ekājvā°. — 5. M °gauttamo çravaṇa dagdha agniçaraṇe ca sa°.

6. B °rvāpayishyāmonti çra° M °rvāpayishyāmonti | çravaṇaṃ ca gauttamo pa°shyāmonti | B °shyāmonti ||. — 7. M °treṇādā° çyapasya upanā°. — 8. BM °çyapa bhagavato (M °vanto) pā° M °tragataṃ taṃ nāgaṃ °smitaḥ B °smito maha°. — 9. M °rddhiko çravaṇo gauttamo °hi nāma sya bha° B °hi nāma yasya bha° °shṭuṃ | so° M °shṭuṃ so çravaṇasya gauttama°.

11. BM °sya pramukhā ta tra° °rivāro bha° B °çcimena pratihā° M °bhiprasādikā B °ditā da°. — 13. BM °jaṃ | u° B °vilvākāçyape a° M °vilvakā agniçaraṇesmiṃ B °smiṃ pā°. — 14. M °treṇa niha° çirino u° BM °nayasi |. — 15. BM °esho sya kā° M °dinnā sya tejasātejo B °nno sya tejasā tejo ya°.

16. M jasya°. — 17. BM °vāro na°. — 18. BM °dānto paçyamāno dṛshṭvā | (M °shṭo). — 19. BM esho so nāgo etam arthaṃ °naṃ yadya duḥpraveço. — 20. BM nara-(M nava)nāgena so° M °rvishakṛ°.

तेषां दानि उपसेनो नाम भागिनेयो तथैव नद्या नैरंजनायास्तीरे आश्रमं मापयित्वा पत्रोपेतं पुष्पोपेतं फलोपेतं तत्रासौ प्रतिवसति त्रिशतपरिवारो चतुर्ध्यानलाभी पंचाभिज्ञो महर्द्धिको महानुभावो ॥ तेहि दानि उरुविल्वाकाश्यपप्रमुखेहि भिक्षूहि सर्वं ऋषिभाण्डं अजिनोपानहचीवरा च कठीनका च कमण्डलु च नद्यां नैरंजनायां प्रवाहिता । सो अस्माकं भागिनेयो उपसेनो एतेन ऋषिभाण्डेन सपरिवारो कार्यं करिष्यति ॥ तेहि तं भाण्डं नैरंजनायां वुह्यन्तं दृष्ट्वा तेहि तं भाण्डं सर्वं उत्कड्डितं ॥ तस्य दानि उपसेनस्य ऋषिस्य एतदभूषि । मा हैव मे मातुलका केनचिद्विहेठिता भविष्यन्ति ॥ सो दानि शीघ्रशीघ्रं त्वरमाणरूपो सपरिवारो उरुविल्वाकाश्यपनदीकाश्यपगयाकाश्यपानां आश्रमं आगतो भगवां च सपरिवारो कृतभक्तकृत्यो । भिक्षुसंघो नद्यां नैरंजनायां पात्राणि निमज्जेत्वा शोधे[401a]न्ति परिमार्जन्ति ॥

अथ खलु उपसेनो ऋषिर्येन उरुविल्वाकाश्यपो तेनोपसंक्रमित्वा आयुष्मन्तं उरुविल्वाकाश्यपं गाथाये अध्यभाषे ॥

मोहं ते जुहितो अग्नि मोहन्ते सो तपो कृतो ।
यं जहे पश्चिमे काले जीर्णां व उरगो त्वचं ॥

अथ खल्वायुष्मां उरुविल्वाकाश्यपो उपसेनं ऋषिं गाथाये प्रत्यभाषे ॥

मोहं मे जुहितो अग्नि मोहं मे सो तपो कृतो ।
यं जहे पश्चिमे काले जीर्णां व उरगो त्वचं ॥

सो पि च भगवता सपरिवारो बलवशीभावे विनीतो एहिभिक्षुकाये प्रव्राजि-

1. BM °syaiva nadyāṁ nai° çrama māpayi° M °tropetaṁ phalopetaṁ pushpopetaṁ tatrā° ti | triçata°. — 3. M °bhikshuhi sa° BM °jinopadarbhacīvarā ca kaṭhinakā° M °oḍaru ca nadyāṁ° B °hitā so°. — 5. BM °upaseno | e° B °nāpati te°.

6. M tehi taṁ nai° svaṁ ukkaṭṭitaṁ | B °ukkattitaṁ |. — 7¹. M °shiyaṁti°. — 7². M °haivaṁ me mātarukā kena vihethikā bhi°. — 8. BM rūmarū° B °vilvākāçyapo nadīkāçyapo ga° M °nāṁ ga sa° B °vāṁ ca pari° M °ktakṛtvā B °ktakṛtyo bhi°. — 10. BM °ni nirmāpetvā çocimti (M °socinti) pari° M °mārjati ||:

12. M °sena ṛshiḥ yena uruvilvākāçyapas teno° °thāye pratyabhā°. — 14. M mohan te juhuto agniḥ mohan te° B °kṛito yo°. — 15. BM yo ja° jīrṇṇo ca uragatvacaṁ ||.

16. M so pi ca bhagavatā āyushmān seu° °çyapo upaseno ṛ°. — 17. M so haṁ mohaṁ juhuto agniḥ so haṁ me° B °gni moha me°. — 18. BM °jīrṇṇo ca uragatvacaṁ |. — 19. B °nīto | ehi° M °pravraji° BM °dito s°.

हितो उपसंपादितो । चरथ भिक्षवो चरथ तथागते ब्रह्मचर्यं ॥ तेषां भगवता एहि-
भिक्षुकाये आभाष्टानां यत्किंचित्तीर्थिकलिंगं तीर्थिकगुप्ति तीर्थिकध्वजं तीर्थिककल्पं सर्वं
समन्तरहितं त्रिचीवरं नामं च प्रादुर्भूतं मुण्डकं च पात्रं प्रकृतिस्वभावसंस्थिता च
केशा ईर्या च सार्धं संस्थिहे तद्यथापि नाम वर्षशतोपसंपन्नानां भिक्षूणां । एषो
5 आयुष्मतो उपसेनस्य अर्धत्रिशतपरिवारस्य प्रव्रज्या उपसंपदा भिक्षुभावो ॥ इदं
भगवतो प्रथमं श्रावकसंनिपातं अर्धत्रयोदश भिक्षुशतानि ॥

भिक्षू भगवन्तमाहन्सुः ॥ कस्य भगवं कर्मस्य विपाकेन आयुष्मन्ता उरुबिल्वा-
काश्यपनदीकाश्यपगयाकाश्यपा त्रयो भ्रातरो महर्द्धिका महानुभावा क्षिप्राधिगमा
च ॥ भगवानाह ॥ एतेषामेव भिक्षवः पूर्वप्रणिधानं बुद्धे चौक्षस्य कुशलमूलस्य
10 विपाको यत्ते महर्द्धिका च महानुभावाश्च क्षिप्राधिगमाश्च ॥ भूतपूर्वं भिक्षवो अती-
तमध्वाने हस्तिनापुरे राजा महेन्द्रो नामाभूषि कृतपुण्यो महेशाख्यो धार्मिको
धर्मराजा सुसंगृहीतपरिवारो दानसंविभागशीलो । तस्य दानि राज्ञो पुष्यो
नाम तथागतो सम्यक्संबुद्धो सश्रावकसंघो हस्तिनापुरे याचितको वसति ॥
कलिंगेषु सिंहपुरं नाम नगरं तत्र त्रयो भ्रातरो एकमातृका राज्यं कारयंति ।
15 तेषां दानि तत्र राज्ये रत्नं उत्पन्नं ते तं रत्नमादाय ततः सिंहपुरातो हस्तिना-
पुरमागता । तेहि तं रत्नं राज्ञो महेन्द्रकस्य उपनामितं ॥ सो दानि राजा
महेन्द्रको तेन प्राभृतेन तेषां भ्रातृणां प्रीतो संजातो ॥ सो आह ॥ किं वो करि-
ष्यामि ॥ ते दानि आहन्सुः [401ᵇ] ॥ इच्छामो भगवां पुष्यो अस्माकं नगरे
वर्षावासं वसेय अस्माकमनुकम्पाय । अत्रैव तेन प्राप्तेन महत्तमापूर्तं कर्तुकामा ॥
20 सो दानि राजा महेन्द्रको आह ॥ पुनो पि भगवां पुष्यो अस्माकं नगरे वसिष्य-

1¹. M °kaharaç cara°. — 1². M °bhagavatâ bhikshu ° d ṭishiliṅga ṭishiguptiṁ ṭishigu- ptiṁ ṭishidhva° B °d ṭishiliṅgaṁ ṭishiguptiṁ ṭishidhva° BM °rvaṁ samananta° B °tenâ ca prakṛ ° çâ îryâ ca sadha saṁ° M °çâ îryâpathâ ca sârdhaṁ saṁ° BM °he ‖ tadya ° kshâ- pûk s°. — 5. M °rdhatriṁçatparivârasya pra ° bhâvaḥ | B °bhâva i°. — 5. B °taṁ sarva trayodaçabhi bhi° M °taṁ sarvaṁ trayodaçabhir bhikshu°.
7¹. M bhikshur bhaga° B °hataḥ ‖ . — 7². M °kendyushmân uru° B °yushmatâ u° M °pânâṁ tra° BM °rddhiko mahâ°. — 9¹. B °vaḥ purva° M °ko yan te maha ° bhâvâ ca kshi° — 10. M °ra °ti ° re râjâ mahendrako nâ° BM °shi | kṛ ° çilo ta°.
12. M °to rhaṁ samya° BM °ddho çrâvakasaṁghaṁ ha° B °ra yâcati ko° M °re yâcanako° B °ti ca ka°. — 13. B kaliṁdeshu ° ekamâtṛikâ râ° M °triko râjyaṁ kârayati ‖ . — 15. M °jye ratnaṁ u ° taṁ ratnaṁ âdâ °sîranâ° BM ° gatvâ te°.
16¹. M tehi taṁ ratnaṁ râ°. — 16². M °prâvṛitam°. — 17². M kiṁ ka°. — 18¹. M de dâni âhaṁsuḥ ‖ B °nsuḥ i°. — 18². M icchâme bha ° aṁ vaseyaṁ a° B °saṁ vaseyaṁ a° M °nukaṁpâya ‖ . — 19. BM so dâni âha ‖ adyaiva(B °alpenaitavena prâpte- (M °prâptavateṇa ma° M °ntaṁ praputaṁ ka° B °ntaṁ prapâdhaṁ ka° M °kâmaḥ ‖ . — 20¹. M °bhagavân pushpa° B °re vaçishyati ‖ .

ति ॥ यूयमपीमेन पुष्पेण संगृहीता भवथ ॥ तेहि दानि भ्रातृहि भगवां पुष्पो सश्रावकसंघो तहिं स्वके नगरे याचितो । भगवां तत्रैव वसं पुष्पो परिनिर्वृतो । तेहि भगवतो पुष्पस्य निर्वृतस्य शरीरपूजा च स्तूपो च कारितो ॥

राज्ञो महेन्द्रस्य महिं प्रशासतो
धर्मेण ज्ञानं च समादायवर्तिनो ।   5
त्रयो भ्रातरो आसि समानचारिणो
पुत्रा च दारा च तदानुवर्तका ॥
ते एकदा सुसमानचारिणो
धर्मेण वै ऐश्वरियं अकासि ।
प्रभूतभोगा रतनानुबद्धा   10
ताव बहूनि वर्षाणि तोषयि ॥
ते एकराज्यसमानभोजना
बुद्धं अद्दशिंसु द्विपदानमुत्तमं ।
नक्षत्रनामो. . .पारमीं गतो
स्वयंजितो देवमनुष्यपूजितो ॥   15
परिनिर्वृते कारुणिकस्मिं शास्तुनि
स्तूपं अकरिंसु वयं समग्रा ।
सपुत्रदारा सह ज्ञातिबान्धवैः
आर्या च श्रेष्ठा नगरस्मिं आत्मनो ॥
हस्तीहि अश्वेहि रथेहि पत्तिहि   20
नृत्येन गीतेन च वादितेन च ।

1¹. B yûyaṁm apimâni pu° M °pimâni pu°. — 1². M °bhagavân pushpo çrâ° B °shpo çrâva ° tahi sva° BM °to bha°. — 2. M °gavâ tatraiva vâsaṁ° B °traivâsaṁ° BM °vṛito te°. — 3. M °bhagato pare vaçiahyati yûyam apimâni pushpasya parinirvṛi° B °po ca karito rà°. — 4. BM °hendrakasya ° dharmeṇa jñâye ca upâdâya varti(M °vatti)mo tra°.

6. M °putro ca dâ ° ritaṁ B °rtakâ te°. — 8. BM °samânakâriṇo dharmeṇa te aiçvaryaṁ(M °ryyaṁ) âkâriyo(M °yo) pra°. — 10. M °bhoge ratnâni bandhanâni tâṁ bahunâ varshâpi toshaya B °nâni bandhanâni | tâ bahunâ varshâṁ pi toshaye te°.

12. B °bhojakânubandhaṁ addetaṁ dvi° M °jmânobandhaṁ addaçetaṁ dvi°. — 14. BM °kshatranâ(B °trâṇâ)mo paramâṁ gato svaçaktato de°.

16. M °nivṛite° B °rvṛito kâ° BM °stuno stû° B °paṁ apareha vayaṁ suprajño supu° M °paṁ apare bhaveyaṁ | saputro suprajño pu°. — 18. M putradâro mahajñâtibândhavo âyâ ca çreshṭho nagare â° B °dâro mahajñâtibândhavâ âyâva çre ° gare â°. — 20. B aṣṭi° M hastihi a° B °açvahi ra° BM °tyena ca gî°.

गन्धेन माल्येन विलेपनेन च
पूजां अकरिम्ह वयं महर्षिणो ॥
ते स्तूपपूजाय फलेन संप्रति
कल्पां न एम ह्यानयति दुर्गां ।
5 तेनैव कर्मेण महामुने . . . .
सर्वे स्म दान्ता तव धीर शासने ॥

समाप्तं आयुष्मन्तानां उरुविल्वाकाश्यपनदीकाश्यपगयाकाश्यपानां जातकं ॥

भगवां उरुविल्वाकाश्यपस्य आश्रमातो महता भिक्षुसंघेन सार्धं अर्धत्रयोदश-
भिर्भिक्षुशतैर्महर्षिणामाश्रमपदं धर्मारण्यं गतो ॥ तहिं दानि सप्त जटिलशतानि
10 प्रतिवसन्ति सर्वाणि चतुर्ध्यानलाभीनि पंचाभिज्ञानि सविंशशतवर्षिकाणि जातीये
सर्वाणि च परिपक्वकुशलमूलानि चरमभविकानि ॥ भगवांस्तेषां अनुग्रहार्थं तहिं
आश्रमपदं गतो । तेषां भगवां जटिलानां धर्मपदेषु सहस्रवर्गं भाषति ॥

सहस्रमपि वाचानां अनर्थपदसंहिता ।
एका अर्थवती श्रेया यां श्रुत्वा उपशाम्यति ॥
15 सहस्रमपि गाथानामनर्थपदसंहिता ।
एका अर्थवती श्रेया यां श्रुत्वा उप[402ᵇ]शाम्यति ॥
यो शतानि सहस्राणां संग्रामे मनुजा जये ।
यो चैकं जये आत्मानं स वै संग्रामजित् परः ॥
यो जयेत सहस्राणां मासे मासे शतं शते ।
20 न सो बुद्धे प्रसादस्य कलामर्घति षोडशीं ॥

1. M mályena ca vi° B °pújá a° M °pújá akári bhareyam̃° B °ṇo te°. — 3. M te tú-papujá° B °sam̃parikalpánamena dvá° M °sam̃parikaṇamena dvá° BM °durga ti°. — 5. B te-nai° M tinaivam̃ ka° mune | sarve samadá° B °mune sarve sam̃smadám̃tá ta° BM °sare ||.

7. M iti çrímahávastusvadáne áyu° takam̃ samáptam̃ ||. — 8. M atha bhagaván uru° ghena sá° ṇyam̃ gatam̃ | B °ṇyam̃ gato ta°. — 9. BM °santi | sarváṇi° M °vim̃çaça-tavarshakáni já° B °rváni ca paripakkaku°.

11. M bhagavám̃ teshám anu° çramapato | B °pade gato te°. — 12. M °garáṇ jaṭi° B °sa-havargam̃° M °sravarsham̃ bhá°. — 13. M °rthaparisam̃° BM °hitánám̃ ||. — 14. B e-kam artham̃ vargí çre° M ekam arthapadavargí çre° B °trám upá°. — 15. M °sram api sahasram api gáthyánám̃ artha° BM °hitá e°.

16. B ekártham̃vani çre° M °kárthavatí çre°. — 17. B °ṇám̃ sam̃ṭháme° M °ṇám̃ saṭháme°. — 18. BM °jaye cátmánam̃ sarve sam̃° M °grámajid sarah | B °rah yo°. — 19. B °jayet saha°.

यो जयेत सहस्राणां मासे मासे शतं शतं ।
न सो धर्मे प्रसादस्य कलामर्घति षोडशीं ॥
यो जयेत सहस्राणां मासे मासे शतं शतं ।
न सो संघे प्रसादस्य कलामर्घति षोडशीं ॥
यो जयेत सहस्राणां मासे मासे शतं शतं ।
सो च संपन्नशीलानां कलां नार्घति षोडशीं ॥
यो जयेत सहस्राणां मासे मासे शतं शतं ।
न सो स्वाख्यातधर्माणां कलामर्घति षोडशीं ॥
मासे मासे कुशाग्रेण बालो भुंजेय भोजनं ।
न सो बुद्धे प्रसादस्य कलामर्घति षोडशीं ॥
मासे मासे कुशाग्रेण बालो भुंजेय भोजनं ।
न सो धर्मे प्रसादस्य कलामर्घति षोडशीं ॥
मासे मासे कुशाग्रेण बालो भुंजेय भोजनं ।
न सो संघे प्रसादस्य कलामर्घति षोडशीं ॥
मासे मासे कुशाग्रेण बालो भुंजेय भोजनं ।
न सो ध्यानप्रसादानां कलामर्घति षोडशीं ॥
मासे मासे कुशाग्रेण बालो भुंजेय भोजनं ।
न सो सम्पन्नशीलानां कलामर्घति षोडशीं ॥
मासे मासे कुशाग्रेण बालो भुंजेय भोजनं ।
न सो स्वाख्यातधर्माणां कलामर्घति षोडशीं ॥
यो च वर्षशतं जीवे अग्निपरिचरं चरेत् ।
पत्राहारो छवावासी करोन्तो विविधं तपं ॥
यो चैकं भावितात्मानं मुहूर्तमपि पूजयेत् ।
सा एकपूजना श्रेयो न च वर्षशतं हुतं ॥
यत्किंचिदिष्टं च हुतं च लोके

1. B °jayet saha°. — 2. B °dharmaṁ pra° M °dharmapra°. — 3. B °jayeeta sa°. — 4. M *passe les lignes* 4-7. — 5. B °jayetta sa°.

6. B so ca saṁ° çîlânâ ka°. — 7. B °jayet saha°.

12. B °dharmaprasâ kalâ°.

16. B *passe les lignes* 16-17. M °prasâdena ka° çîlâ mâ°. — 17. M °bhuñjati bho°. — 18. B °çilâyâṁ ka°. — 20. M na so svâ° dânaprasâdena ka°.

21. M yo ca varsha° ve agniṁ pari°. — 22. M padhâhâro cchavavâsi ka° BM °ronti vividhaṁ°. — 23. M °bhâvitânâmaṁ°. — 24. BM so eka°. — 25. BM yat kiñcit teshâṁ bahukâṁ ca loke sarvaṁ jayati puṇyaprekshi (M °puṇyaḥ prekshi) |.

संवत्सरं यजति पुण्यप्रेक्षी ।
सर्वं पि तं न चतुर्भागमेति
अभिवादनं उज्जुगतेषु श्रेयं ॥
यो च वर्षशतं जीवे दुःशीलो असमाहितः ।
एकाहं जीवितं श्रेयं शीलवन्तस्य ध्यायतो ॥
यो च वर्षशतं जीवे कुसीदो हीनवीर्यवान् ।
एकाहं जीवितं श्रेयो वीर्यमारंभतो दृढं ॥
यो च वर्षशतं जीवे अपश्यं बुद्धशासनं ।
एकाहं जीवितं श्रेयो पश्यतो बुद्धशासनं ॥
यो च वर्षशतं जीवे अपश्यं धर्ममुत्तमं ।
एकाहं जीवितं श्रेयो पश्यतो धर्ममुत्तमं ॥
यो च वर्षशतं जीवे अपश्यं उदयव्ययं ।
एकाहं जीवितं श्रेयो पश्यतो उदयव्ययं ॥
यो च वर्षशतं जीवे अपश्यं अच्युतं पदं ।
एकाहं जीवितं श्रेयो पश्यतो अच्युतं पदं ॥
यो च वर्षशतं जीवे अपश्यं अमृतं पदं ।
एकाहं जीवितं श्रेयं पश्यतो अमृतं पदं ॥

ते च दानि भगवता वचवशी[402b]भावे विनीता सर्वे च ते परिनिर्वृता । तेषां भगवां शरीरपूजां च कृत्वा स्तूपां च धर्मारण्यातो अजपालस्य न्यग्रोधमागतो ॥

भगवां सम्यक्संबुद्धो यदर्थं समुदागतो तदर्थं अभिसंभावयित्वा उरुविल्वायां विहरति नद्या नैरंजनायास्तीरे अजपालस्य न्यग्रोधमूले अचिराभिसंबुद्धो ॥ तेन

2. B sarvavitaṁ° M sarve ci taṁ na catubhārgam e°. — 5. M °jivita çreyo çi° B °sya vāyato | M °sya vāyataḥ ‖.
6. M °ryyavān ekā°. — 7. M °jivita çre°. — 8. M °çāsane | *et passe la ligne* 9.
11. B °çreshṭaṁ pa°. — 12. M °udakavyayaṁ ‖. — 13. BM °vita çre° M °udakavya°. — 14. B °cyutapadaṁ | M °cyutavyayaṁ | . — 15. BM °jivita çre° cyutapadaṁ | .
16. M °ve apaçyam amṛitapadaṁ e°. — 17. M °jivita çreyo paçya° mṛitapadaṁ ‖. — 18. M te dā° B tena dā° M °gavatā vaçibhāsavinitāḥ sarve ca tāṁ pa° B °nitā | sarve° rvṛitā te° M °rvṛitās teshāṁ°. — 19. M °bhagavatā çari°.
21. BM bhagavān(B °vā) saṁmya ° haranti | (M °ti) nadyaṁ nai°. — 22. M °punas samayena rājño çreshṭhiyasya himbiçārasya bra° B °jāneyasya u ° gutasya rātryā pratyushakā° BM °kshaṇāni vācā(B °cāvi)vista°.

खलु पुन: समयेन राज्ञो श्रेणियस्य बिम्बिसारस्य ब्राह्मणो पुरोहितो राजाचार्यो उपरिप्रासादवरगतो रात्र्या प्रत्यूषकालसमये द्वात्रिंशमहापुरुषलक्षणानां वाचाविस्तरेण स्वाध्यायं करोति ॥ अश्रोषीत्खलु राजा श्रेणियो बिंबिसारो ब्राह्मणस्य पुरोहितस्य राजाचार्यस्य उपरिप्रासादवरगतस्य रात्र्या प्रत्यूषकालसमये द्वात्रिंशमहापुरुषलक्षणानां वाचाविस्तरेण स्वाध्यायं करोन्तस्य श्रुत्वा च पुनरस्य भगवतो स्मृति उदपासि ॥ अहो पुनर्मे विजिते बुद्धो भगवां उत्पद्ये तं चाहं भगवन्तं पश्येयं दृष्ट्वा च पुनर्मे प्रवृत्ते प्रसीदेय प्रसन्नचित्तो च नं पर्युपासेय सो च मां भगवां धर्मं देशेय तस्य चाहं धर्मं श्रुत्वा आजानेयं ॥

अथ खलु राजा श्रेण्यो बिंबिसारो तस्यैव रात्र्यात्ययेन अन्यतरं पुरुषमामंत्रयति ॥ एहि त्वं पुरुष क्षिप्रमेव भद्राणि यानानि योजापेहि युक्तानि च मे प्रतिवेदेहि ॥ साधु महाराज त्ति स पुरुषो राज्ञो श्रेणियस्य बिंबिसारस्य प्रतिश्रुत्वा क्षिप्रमेव भद्राणि यानानि योजयति युक्तानि च तं प्रतिवेदयति । युक्तानि ते महाराज भद्राणि यानानि यस्येदानिं कालं मन्यसे ॥ अथ खलु राजा श्रेण्यो बिम्बिसारो अन्यतरं भद्रं यानमभिरुहित्वा महता राजर्द्धीये महता राजानुभावेन महतो जनकायस्य हक्कारपिक्कारभेरीमृदंगपणवशंखसन्निनादेन राजगृहातो नगरातो निर्यात्वा येनान्यतरा उद्यानभूमी प्रायासि ॥ अथ खलु राजा श्रेण्यो बिम्बिसारो यावतिका यानस्य भूमि तावतकं यानेन यात्वा यानातो प्रत्योरुह्य पद्भ्या येव तां उद्यानभूमिं अनुचंक्रमन्तो अनुविचरन्तो निषीदे सुवर्णमये पर्यंके प्राचीनाभिमुखो स्त्र्यागारपरिवृतो अमात्यपारिषद्यपुरस्कृतो ॥ अथ खलु [४०३*] रा-

3. M °ṇiyo bimbiçârasya brâ° adâsavaraçatasya râtryâ° B °tryâ pratyushakâ° M °triṁça mahâ° BM °kshaṇâni vâcâ° M °rotasya çru° BM °gavantaṁ smṛi°.

6. M °jiteshu boddho bhagavân utpadya taṁ° B °tpadya taṁ° B °vrittaṁ prasî° M °vṛittaṁ prasîdeyaṁ prasannacittoçcemaṁ paryyûpâ° B °tto va naṁ paryu° BM °seyaṁ | so° M °mâṁ bhagavan dharmaṁ° BM °çeyaṁ tasya°. — 9. M °çreṇyâ bimbiçâro° rudhasyam â°. — 10. M °rushaṁ kshipram evaṁ bhadrâṇi yojâyehi yânâni yu° B °drâṇi yânâni yojâyehi muktâ° BM °dehi sâ°.

11. BM °hârâjenti(M °nti | ) sa pu° B °rushâ râjño° M °jño bimbiçârasya° — 12. M yuktâni ca mahâ° drâṇi yâ° BM °nâni | yasye(M °sye)dâ° M °kâla ma°. — 13. M °bimbiçâro° draṁ pâram abhi° B °bhâvena mahatâ janakâ° BM °sya hikkârapikkâra(B °pikkâraṁ) bhe° M °khasaṁninâde° bhûmiṁ prâyâsi | B °prâyasi |.

16. BM °mbisâ(M °mbiçâ)ro yâvati(M °vatti)kaṁ yânasya bhûmiṁ tâvatti(M °tta)kaṁ yâne° M °tvâ yâtâto pratyârûhya° B °dasâ ye ca tâṁ° M °dasâ yeva tâṁ udyâ° BM °nishide | su° tyapa(M °pâ)rishadyâpu°. — 19. M °jño bimbiçâla° nagaraṁ abhivilokayaṁ tasya tasya râjagṛihe° BM °vatâni ca pushkiriṇîṁ(M °shkariṇîṁ) ca pau° B °paurâṇâ câ° M °câryaṁ ca smṛitâ yetâṁ kâlagatâṁ samanu° B °tpadya yonimanasikâro udyâ°.

ञ्ञो बिम्बिसारस्य राजगृहं नगरमभिविलोकयन्तस्य राजगृहेयकानि च पर्वतानि पुष्करिणीं च पौराणां चार्यकां मृतां प्रेतां समनुस्मरन्तस्य कामेषु जुगुप्सुनो उत्पद्ये योनिसो मनसिकारो ॥

उद्यानभूमितो निर्यात्वा अङ्गानां राष्ट्रवर्धनो ।
5 पर्यंकस्मिं निषीदेसि अवदातसुवर्णमण्डले ॥
तैविघोषाभिनादिता सम्यक्कान्तप्रबोधना ।
पुष्पिता साला तस्मिं काले संपन्नकुसुमिता वरा ॥
व्यालमृगानुविचीर्णा गोलांगुलनिषेविता ।
पर्वतां स संवीक्षन्तो पृथुसिंहनिषेवितां ॥
10 निषीदित्वा प्राङ्मुखो राजा पौराणानि अनुस्मरन् ।
अश्रुपूर्णेहि नेत्रेहि इमां गाथामभाषिष ॥
तिष्ठं यं पाण्डरो गिरि कैलासवत्तथेव विपुलो ।
अथ मे पितरो पितामहा प्रेता कालगता अवीततृष्णा ॥
वरा रम्या वना विचित्रा पुष्करिण्यो शिलोच्चयो ।
15 यानीमानि गमायिंसुः कां नु ते दिशतां गता ॥
तथैवेमानि राष्ट्राणि इमा पृथुस्वकियो ।
यानीमानि गमायिंसुः कां नु ते दिशतां गता ॥
तथैवेमानि वस्त्राणि इमा निष्का सकुण्डला ।
यानीमानि गमायिंसुः कां नु ते दिशतां गताः ॥
20 इमा पुष्करिणी रम्या नानाद्विजनिकूजिता ।

4. M °bhūmito° BM °ryātvā magadhānāṁ rāshṭra° B °rddhana paryaṁ°. — 5. BM °shiditvā ava° °ṇḍalaṁ tri°.

6. B trighoshe bhinadi° M trishyāme abhinandite saṁmya° BM °bodhana pu°. — 7. M pushpitā çālo tasmiṁ° B sālā tasmiṁ ° varā vyā° M °sumitā valā vyā°. — 8. M vyāramṛi° BM °nuvicaribhāgo naṁgula( M °bhāgonaṁgu)nishevitā parva°. — 9. B °samaṁ vi° M °samavi°. — 10. BM nishīdet | prāṁmukho rājā pau° M °rāṇāni anu° B °rāṇāṁni anu° BM °smaranto a°.

11. M °bhāshatha || . — 12. B °ṇḍarā giri kailāça parvata | tathai° M °kailāçavat ta° BM °pulo a°. — 13. M atha ma pitāmahā° B °me pitarā pitāma° BM °tṛishṇā va°. — 14. M varo ramyā ° pushkariṇyaçilo° B °shkāriṇyaçilo° BM °ccayo yā°. — 15. B yānimāni gamāyetsuḥ || kāni te di° M yānimāni nigametsuḥ || kāni te di° BM °gatā ta°.

16. M tathaiva imāni° BM °ṇi imāṁ pṛi° M °nti | ya yā°. — 17. BM yāni(B °ni)māni gamāyensuḥ(B °tsuḥ | ) kā nu te di° M °gatāḥ B °gatā ta°. — 18. M tathaivam imāni vastrāṇi imā tikāṁ çakuṇḍalāṁ B °nishkāṁ sakuṇḍalāṁ | . — 19. BM yānimāni gatāyetsuḥ kāṁ(M °kā) nu°. — 20. BM imāṁ pu° M °shkariṇiṁ ramyā nānaṁ dvi°.

पुण्डरीकेहि संछन्ना कुमुदसौगन्धिकेहि च ।
ये च ते अत्र स्नायेन्सुः कां नु ते दिशतां गताः ॥
तथैवमासना रम्या दिव्या हरितशाद्वला ।
आसन्नोदकसंछन्ना शीतच्छाया मनोरमाः ।
यानि ते अत्र गमायेन्सुः कां नु ते दिशतां गताः ॥ 5
तान्येव प्राणिभूतानां निवेशनानि पर्वता ।
इमे च मे प्रचारिता अद्य जनमपश्यतो ॥
शून्यता च मे आख्यायन्ति दिशा पि मे नुचारिता ।
एवं मर्त्यजीवितं किंस्य परीत्तं च दुःखसंयुतं ॥
अनन्तरं जीवितस्य मरणं मरणं ध्रुवं । 10
जातस्यामरणं नास्ति एतद्धर्मो हि प्राणिनो ॥
गच्छति खेदेन प्राणी प्रतिपन्नो क्वचिज्जनो ।
रात्रिंदिवं च यान्तीह यमदूता शासनाहरा ॥

अथ खलु अन्यतरस्य राजामात्यस्य एतदभूषि ॥ राज्ञो किल श्रेण्यस्य बिंबि-
सारस्य दौर्मनस्यमुत्पन्नं को नु खल्वस्यात्पर्यायो येनाहं राज्ञो श्रेण्यस्य बिम्बिसा- 15
रस्य दौर्मनस्यं प्रतिविनोदयेयं ॥ अथ खलु तस्य राजामात्यस्यैतदभूषि ॥
राज्ञो [403b] किल श्रेण्यस्य बिंबिसारस्य राजगृहं नगरं प्रियं च मनापं च ।

1. M °ndhikedhikehi ca |. — 2. BM yena te atra(M °trā) snāyetsuḥ kā nu°. — 3. BM °haritaśādvaye |. — 4. BM °nnodakasaṁ° M °ramā |. — 5. M yāni cātra gatāyetsuḥ kiṁ nu° B °māyetsuḥ kiṁ nu°.

6. B nānya varaprāṇiniveçanāni te parvatā | M nānyevaṁ prāṇiniveçatāni varaṇāni te ca parvataḥ |. — 7. B ime te ca pracāritām eva adya janatām apaçyato M °pracāro tāṁ adya jatanam apaçyataḥ |. — 8. B çunyatā ca me brāhmaṇākhyāyati deçāpi naṁ te mcaritaṁ | M çunyatā ca me brāhmaṇābhihāryyati diçāpitaṁ tena caritāṁ |. — 9. B °martyāna jīvitaṁ | kiṁ saraṁ parittaṁ° M °martyā janajīvanaṁ kiṁ saraṁ paritta ca° BM °duḥkhena saṁ° B °taṁ s°. — 10. BM °ntaratassya jīvitaṁ ma(B °maraṇa°)raṇaṁ dhru°.

11. M °rmābhi prāṇinaṁ | B °ṇinaṁ |. — 12. B gacchati khalena° BM °prāṇino pratipanno ca ko vijāne rā°. — 13. BM °triṁ ca di° yānti(B °ntīha rājadūtā viya çāsa-(B °çāha)nā°. — 14[1]. M °tyasyaita°. — 14[2]. M °kila manyasya bimbiçālasya daurmanasya° B °tvasyātyaparyāyo yenahaṁ° M °tvasyāparyāyenāhaṁ ° mbiçālasya daurmanasyaṁ° danayaṁ |.

16. M °syaitad abhavat rājño°. — 17. M °bimbiçālasya rājagṛhe nagaraṁ ca pri° BM °manopaṁ ca |.

यन्नूनं अस्याहं पुरतो राजगृहस्य नगरस्य वर्णं भाषेयं ॥ अथ खलु सो राजा-
मात्यो राजं श्रेण्यं बिंबिसारं गाथाये अध्यभाषे ॥

पर्वता इमे सभीला इमे रम्या शिलोच्चया ।
ये इमे राजगृहस्मिं सिक्ता दिविजेन वारिणा ॥
5 भिन्नकटका च स्रवन्ति . . . . . . . . . . . . .
. . . . . . . . . . . . . . . . . . . . . . . . . .

अथ खलु राजा श्रेण्यो बिम्बिसारो तं राजामात्यं अपसादये ॥ अस्ति नाम त्वं
मोहपुरुषो यं यदेव वयं विगर्हाम तदेव त्वं प्रशंसितव्यं मन्यसि ॥ अथ खलु राज्ञो
श्रेण्यस्य बिम्बिसारस्य भूयस्या मात्रया कामेषु आकुलना उत्पद्ये चित्तस्य दुःखदौर्म-
10 नस्यं योनिसो मनसिकारो ॥ अथ खलु ब्राह्मणस्य पुरोहितस्य राजाचार्यस्यैतद-
भूषि ॥ राज्ञो किल श्रेण्यस्य बिंबिसारस्य दुःखदौर्मनस्यमुत्पन्नं को नु खल्वस्यात्य-
यायो येनाहं राज्ञो श्रेण्यस्य बिम्बिसारस्य दुःखदौर्मनस्यं प्रतिविनोदयेयं ॥ अथ
खलु ब्राह्मणस्य पुरोहितस्य राजाचार्यस्य एतदभूषि ॥ राज्ञो खलु श्रेण्यस्य बिम्बि-
सारस्य बुद्धो भगवान्प्रियो मनापो च यं नूनाहं तस्य पुरतो बुद्धस्य वर्णं भाषेयं ॥
15 अथ खलु ब्राह्मणो पुरोहितो राजाचार्यो राजानं श्रेणियं बिम्बिसारं गाथाये
अध्यभाषे ॥

लाभो सि राष्ट्राधिपते शिरीमतो
आंगस्य राज्ञो मगधाधिपस्य ।
यस्योदपासि विजिते तथागतो
20 विघुष्टशब्दो हिमवां व पर्वतो ।

1[1]. B nūnaṁ* M yan nūnam asyā* B *garasya bhā* — 1[2]. M *ṇyaṁ bimbiçālaṁ gā*. — 3. BM sīramūlino ime ramyā* M *ccaye |. — 4. B ye i rājagṛihesmi parvatā si* M *gṛihesmiṁ parvatā siktā divivije*. — 5. M *unakākā ca çra* BM *nti kuñja(M *ja-rajrā jātā(M *to) girināgā ca bhe(M *ca parvatā nabhā) çobhati uttamaṁ giri(M *ttama çrī)bhyayaṁ(M *yaṁ ||) abhāsamayidharmadhāriṇo ||.

7[1]. M *mbiçālo taṁ* B *apamādaye ||. — 7[2]. M *ruhaṁ yad eva vayaṁ vigrahāma-taṁ | tad eva tvaṁ* B *vigarhāma taṁ tade* vyaṁ anyasi ||. — 8. M *mbiçālasya bhū* mātrāye kā* B *dyeccitta* M *daunamasyaṁ*. — 10. M *nasya rājasya etad a*.

11. BM *kila çreṇyasya biṁbisāra(M *bimbiçāla)sya duḥkhadaurmanasya u(M *syam u)tpannaṁ(M *nnaṁ ||) ko nu khalvasyātya ya* M *ṇyasya biṁbiçālasya duḥkhadaurma-nasyaṁ*. — 13. M *mbiçālasya buddho* B *gavā priyo *nūnāṁ ta*. — 15. M *cāryyaḥ rājānaṁ *mbiçālaṁ gā* BM *yo pratyabhā*.

17. BM lābho sta rāshṭrā *çirimato aṁga(M *aṅga)sya rājño* M *pasyā ya*. — 19. M yasya udupā* B *syodupāni* M *vidyushṭa* B *himavāṁ ca parvato M *vāṁ ca parvato ||.

क्षान्तीय चाप्या तपसा उपेतो
लोकार्थको उषितब्रह्मचर्यो ॥
समागम्य सहस्राणि शतानि नयुतानि च ।
संप्राप्नोति अमृतं शान्तं योगक्षेममनुत्तरं ॥

अथ खलु राजा श्रेणियो बिम्बिसारो ब्राह्मणं पुरोहितं राजाचार्यं गाथाये 5
प्रत्यभाषे ॥

प्रियं मे कीर्तये राज्ये प्रियं मे कीर्तये प्रिय ।
प्रियस्य बुद्धस्य लोकार्थचरस्य ब्राह्मण ॥
ददामि ते ग्रामवराणि षोडश
युक्तानि आजान्यरथानि च दश । 10
दासीशतं च गवां शतं च
प्रियस्य बुद्धस्य यशो प्रकीर्तये ॥

अथ खलु भगवां मगधेषु चारिकां चरमाणो महता भिक्षुसंघेन सार्धमर्धत्रयोदशभिर्भिक्षुशतैः येन मगधानां राजगृहं नगरं तदनुसारि त[404ᵃ]दनुप्राप्तो तत्रैव विहरति अन्तगिरिस्मिं यष्टीवने उद्याने ॥ अश्रोषीद्राजा श्रेणियो बिम्बिसारो 15 ब्राह्मणस्य पुरोहितस्य राजाचार्यस्य । भगवां किल मगधेषु चारिकां चरमाणो महता भिक्षुसंघेन सार्धं त्रयोदशभिक्षुशतैर्येन मगधानां राजगृहं नगरं तदनुसारि तदनुप्राप्तस्तत्रैव विहरति अन्तगिरिस्मिं उद्याने यष्टीवने । श्रुत्वा पुनः अन्यतरं राजामात्यमामन्त्रयसि । भो भणे अमात्य भगवतो बुद्धस्य प्रत्युद्गमनं गमिष्यामि राजगृहं अलंकारापेहि भद्राणि च यानानि योजापेहि सर्वेहि च राजगृहकेहि 20 ब्राह्मणगृहपतिकेहि सर्वेहि च शिल्पायतनेहि सर्वेहि च श्रेणीहि मया सह भगवतो

1. BM °kshāntiya ta ° shitavāṁ brahmacaryaṁ (M °ryyaṁ) |. — 3. M °yutāni nayutāni ca | B °ca saṁ°. — 4. M °prāpto ti a ° yogacchemaṁ anuttamaṁ ||. — 5. M °mhācāro°.

7. M °jye priyaṁ me priyasya° B kīrttayo rājye priyaṁ me kīrttayo priyasya°. — 8. BM °lokārthaṁ ca ° hmaṇa da°. — 9. B °dāti te | grā° M °dāti me grā° B °ni yo upayuktā° M °ājanyorathā°.

11. BM dāsīçataṁ gavāṁ° B °ddhasya pra° M °ddhasya na se pra°. — 13. B °ārddhaṁm arddhatra° M °magadhāṁ rā ° prāptas tatrai ° ti | antargiriamiṁ° B °yashṭivane°. — 15. M çrutvā punar açro°.

16. M bhagavān kila ° rddhaṁ arddhatra ° r yena magadhāṁ rā ° nagaraṁ ° prāptaḥ tatraivaṁ vi° BM °ti | a ° shṭīvane çru°. — 18. M °punar anya ° ntrayesi |. — 19. M °ṇe amātyo bhaga° B °laṁkārepehi° M °bhadrāṇi ca yānāti yojāyehi sarvehi ca rājagṛhakehi ca brā ° tikehi ca sarvehi ca çi ° çreshṭhihi mayā saha°.

बुद्धस्य प्रत्युद्गमनं गच्छन्ति ॥ साधु महाराज त्ति स राजामात्यो श्रेण्यस्य बिंबि-
सारस्य प्रतिश्रुत्वा क्षिप्रमेव भद्राणि यानानि योजापेसि राजगृहे घोषणां
कारापेसि चत्वरशृंगाटकरथ्यान्तरापणमुखेषु ॥ बुद्धो भगवां राजगृहे अन्तगिरिस्मिं
यष्टीवनं उद्यानं समनुप्राप्तो तत्र सर्वेहि भवन्तेहि राज्ञा श्रेण्येन बिम्बिसारेण सार्धं
5 भगवतो प्रत्युद्गमनं गन्तव्यं ॥

ते दानि घोषणां श्रुत्वा क्षिप्रमेव राजकुलद्वारे सन्निपतिता कुमारामात्यपारि-
षद्याः पुरोहितप्रमुखा ब्राह्मणाः श्रेष्ठिप्रमुखो निगमो सार्थवाहप्रमुखो वणिजग्रामो
सर्वा च राजगृहका अष्टादश श्रेणीयो । तद्यथा चक्रिकतालिकगन्धर्विका नटनर्त-
कल्लमल्लपाणिस्वरिका शोभिका लंघका कुंभतूणिका वेलंबका द्विस्वलभाणका
10 पंचवटुका गायनका नृत्यवर्ता ताण्डविका चेतयिका गणिका हास्यकारका भेरिशं-
खमृदंगपाटहिका तूणपणववीणावल्लकीएकादशायेल्लवायका अन्ये च बहुवा-
द्यकरा राजकुलद्वारे सन्निपतेन्सुः सर्वायो च श्रेण्यो । तद्यथा सौवर्णिकहैरण्यि-
कप्रावारिका मणिप्रस्तारका गन्धिका कोशाविका तैलिका घृतकुण्डिका गौलिका
दधिका कार्पासिका खण्डकारका मोदककारका कंडुका समितकारका शक्तुका-
15 रका फलवाणिजा मूलवाणिजा चूर्णकुट्टा गन्धतैलका अट्टवाणिजा आ[404b]वि-
द्धका गुडपाचका मधुकारका शर्करवाणिजा ये च अन्ये पि व्यवहारिका सर्वा च
शिल्पायतना । तद्यथा लोहकारका ताम्रकुट्टा सुवर्णकारा त्रपुकारा प्रचोपका

1. B °mahârâjanti sa° M °hârâjânti sarâjâmâtyâ çreṇyasya bimbiçârasya prati° B °pram evam eva bha° M °bhadrâṇi yâ° BM °çriṅgâṭa(B °ta)ke çrama(M °çrava)ṇabrâhmaṇanu°. — 3. M °ddho bhagavân râja° B °ntaçirismiṃ° M °shṭivane u° BM °dyâne sama° M °prâptaḥ tatra °ntehi râjño çre °mbiçâlena sâ°.

6. M °dvâre saṃnipa° B °kumârâmâtyâ pâ° °hitapramukhânâṃ çreshṭipramukhâ ni° M °shṭhipramukhâ ni °hapramukhâ vaṇijagrâ° B °hapramukhâ vaṇijapramukhâ grâ° M °sarvâṃ ca°. — 8. BM °krikaṃvetaddika(M °tarddikaṃ) gandha° çobhikâ kelukaṃ-kaṭṭoṇikâ va(M °kâ ca)larakâ elkha(M °otkha)lâ bhâ° B °rtâ taṇḍa° M °rtâ tâṇḍavikâ vetayi° BM °ṇikâ rantapâyakaṃ bhe° M °mṛdaṅgapâṭahhikâ tûṇapaṇavavî° B °vîvallakî-ekâḍçyellavâyakâ anye° M °ekâḍçyelâvâyanto | anye ° huvâdyekara râ° B °dyakaro râ° M °re saṃnipa° BM °tetaṃ sa ° çreṇyâ | .

12. BM °ṇṇiko hai° M °ṇyikaprâgâvâri° BM °golikâ dhânyikâ kârpâ(B °rpâ | )si ° kaṃdukâ samitakâ(M °takâ çaktukâ)rakâ phala(M °lakârakâ) vâṇi(B °vârijâ mûlapârâ-(M °laparâ) cûrṇṇakuttâ gandha° B °tailakâ aṭṭiyânikâ(?) âcaṃbikaguḍapâcakâ mâdhu° M °tailakâ aṭṭivânikâ âvaṃbikâ guḍapâcakâ khaṇḍapâcakâ madhupâcakâ çarka ° sarvâṃ ca çi°.

17. M °ntakârakâ suvarṇṇakârakâ tadrakârâ pracoḍakâ ro° B °rṇṇakârâ tadrakârâ pracco° M °trapushakârakâ çiçapiṭṭakâ yantra° B °trapukârakâ çiçapiṭṭakâ jatukârakâ mâlâ° M °lâkârâ parimakârâ kumbhakârakâ carmakârakâ kaṇḍukâro caruṭâ tandravâyaro-ravocakâ rakta° B °ndukârakâ caruṭâ tantravâyarocakâ rakta° M °sipakâ stanevâyâ citrakâro

रोचका इषुकारका सीसपिण्डकारा यन्त्रकारका मालाकारा पुरिमकारका कुंभकारका चर्मकारा कन्दुकारका वस्त्रतन्त्रवायका रजका सूचका तुन्नवाया चित्रकारा वर्धकिरूपकारका कांसपात्रिका चेलका पुस्तककारका नापिता कल्पिका छेदका लेपका स्थपतिसूत्रधारका उत्तरकोष्ठकारका कूपखानका मृत्तिकावाहका काष्ठवाहका वस्त्रवाणिजा शंखवाणिजा वंशवाणिजा नाविका डोडुम्बिका सुवर्णधोवका मोड्डिका एते चान्ये च उच्चावचा जनता हीनोत्कृष्टमध्यमा सर्वे राजकुले संनिपतेन्सुः ॥ 5

अथ खलु स राजामात्यो संनिपतितं जनकायं विदित्वा भद्राणि यानानि योजापयित्वा येन राजा श्रेण्यो बिम्बिसारस्तेनोपसंक्रमित्वा राजानं श्रेणियं बिम्बिसारमेतदवोचत् ॥ युक्तानि महाराज भद्राणि यानानि महाजनकायं च 10 संनिपतितं । यस्येदानि देव कालं मन्यसि ॥ अथ खलु राजा श्रेण्यो बिम्बिसारः भद्रं यानमभिरुहित्वा मागधकेहि ब्राह्मणगृहपतिकेहि सार्धं द्वादशेहि नयुतेहि संपरिवृतो महता राजर्धीये महतो जनकायस्य हक्कारहिक्कारभेरीमृदंगपणवपट-हशंखसंनिनादेन राजगृहातो नगरातो निर्यात्वा येन अन्तगिरिस्मिं यष्टीवनमुद्यानं तेन प्रयासि ॥ 15

अथ खलु राजा श्रेण्यो बिम्बिसारो यावदेव यानभूमिस्तावदेव यानेन यात्वा यानातो प्रत्योरुह्य पद्भ्यां येव येन भगवांस्तेनोपसंक्रमित्वा भगवतः पादौ शिरसा वन्दित्वा एकान्ते निषीदेत् ॥ अप्येकत्या भगवता सार्धं संमोदनीयां कथां संमोदयित्वा सारायणीयां कथां व्यतिसारयित्वा एकान्ते निषीदेन्सुः । अप्येकत्या भगवतो स्वकस्वकानि मातापितृकानि नामगोत्राणि अनुश्रावयित्वा 20 एकान्ते निषीदेन्सुः । अप्येकत्या येन भगवांस्तेनांजलिं प्रणा[405a]मयित्वा

ca vakîrûpakârakâ kâlapattikâ çelâlakâ paustavakârakâ nâvikâ kalpakâ cchâdakâ le° B °sûcakâ tunavâyâ citrakârâ cacakirû° kârapatrikâ çelâlakâ paustavakârakâ nâpikalpakâ cchâdakâ le° BM °sthapatigoḍakârakâ utta° tikâvâhakâ âshavâhakâ valvajakâ(M °shavâhakâ vatkara)-vâṇijâ çaṃbhavâṇijâ vaṃ° B °vikâ âḍavikâ suvarṇadhocakâ moṭṭikâ e° M °vikâ âduṃbikâ suvarṇadhauvikâ mottikâ ‖ e° B °tâ hino° sarva ca° BM °tetsuh ‖.

8. B °yupayi° mbiçâlas te° M °mbiçâlo tena° yaṃ biṃbisâ°. — 10. M °bhadrayânâni° B °ṇi jânâni mahâṃ ca jana° M °yaṃ ca saṃnipa°.

11¹. M °devaṃ kâ° B °kâla ma° M °nyase ‖. — 11². M °ṇyo biṃbiçâro bhadraṃ° BM °mâgadhakehi brâ° B °grihapehi sâ° M °riddhiye mahato° BM °sya hikkârapikkâra-bhe° rupaṭahasaṃ(B °pavaṇaçaṃ)kasaṃ° M °trâ yenânta°.

16. B °mbisâras yâvad eva yânabhû° M °sâro yâvad evaṃ yânabhûmis tâvad evaṃ yâne° pratyârûhya° B °pratyâruhya° M °yena bhagavânstena° gavato pâ° BM °detsuh a°. — 18. B apakatyâ° M apyekatyâṃ bha° BM °modayitvâ sârâpaniyâṃ(M °yâṃ kathâṃ) vya° BM °detsuh ‖. — 20. BM apyekavatyâ° M °bhagavatâ svaka° ekamantaṃ ni° BM °detsuh ‖. — 21. M °ṇâmetvâ° detsuh ‖ B °detsuh a°.

एकान्ते निषीदेन्सुः । अप्येकत्या मागधका ब्राह्मणगृहपतिका तूष्णीभूता एकान्ते निषीदेन्सुः ॥ तेन खलु पुनः समयेन उरुविल्वाकाश्यपो भगवतो अविदूरे संनिषण्णो अभूषि ॥ अथ खलु तेषां मागधकानां ब्राह्मणगृहपतिकानामेतदभूषि । किं नु खलूरुविल्वाकाश्यपो श्रमणे गौतमे ब्रह्मचर्यं चरति उताहो महाश्रमणो
5 गौतमो उरुविल्वाकाश्यपे ब्रह्मचर्यं चरति ॥ अथ खलु भगवानेषां ब्राह्मणगृहपतिकानामिदमेवरूपं चेतसः परिवितर्कमाज्ञाय आयुष्मन्तं उरुविल्वाकाश्यपं गाथाये अध्यभाषे ॥

किमेव दृष्ट्वा उरुविल्ववासि
प्रहाय अग्निं कृशको वदानो ।
10 पृच्छामि ते काश्यप एतमर्थं
कथं प्रहीनं तव अग्निहोत्रं ॥

एवमुक्ते आयुष्मानुरुविल्वाकाश्यपो भगवन्तं गाथाये प्रत्यभाषे ॥

अन्नानि पानानि अथो रसानि
कामां स्त्रियो चाभिवदन्ति यज्ञे ।
15 एतं मलन्ति उपधीषु ज्ञात्वा
तस्मान्न यज्ञे न हुते रमामि ॥

अथ खलु भगवानायुष्मन्तमुरुविल्वाकाश्यपं गाथाये प्रत्यभाषे ॥

एतेषु त्वं न मनो अकासि
अन्नेषु पानेषु तथा रसेषु ।
20 अपरं नु तं देवमनुष्यश्रेष्ठं
यहिं रतं काश्यप तुभ्य चित्तं ॥

1. B apyekavatyâ° M apyekaiçâñ mâ° BM °detsuh ‖. — 2. M °puna samu° to abhidûre° B °dûra sañ° dhi a°. — 3. M °khalu bhagavâu teshâñ brâ° B °tikânâñm e° M °tikânâñ eta°. — 4. M °khalu uru° po çravaṇo gauttame° B °po çramaṇo gautamo brahmacaryañ carati utâ° M °hâçravaṇo gauttamo uru° BM °çyapo bra°. — 5. B °n teteshâñ° M °hmaṇakânâm i° cetaso pa° B °ntañ uluvilvâ° BM °thâye pratyabhâshe ‖.
8. BM °ruvilvâvâ° B °hâyam agni kṛi° M °agni kṛi° dânâ ‖. — 10. B pṛicchami° M °çyapo e°.
13. B annapânâni artho sâni kâ° M annapânâni artho so nishkâmâñ striyo câbhivadanti yajñe B °bhivandañti yajñe e°. — 15. M °maranti upadhishu° BM °tvâ tasyâç ca yajñâ na hute abhâsi ‖.
18. B eteshu tena mano° M eteshu tena mano akosi anyeshu yâne°. — 20. B apare nu tañ de° M apare ṇu tañ de° B °çreshṭañ ṣahitarâ kâ° M °shṭhañ yañhi turo kâ° BM °tulyacittañ ‖.

अथ खल्वायुष्मानुरुविल्वाकाश्यपो भगवन्तं गाथाये प्रत्यभाषे ॥

दृष्ट्वा मुनिं शान्तमनुपधीकं
अकिंचनं सर्वभवेष्वसक्तं ।
अनन्यथाभावमनन्यनेयं
तस्मान्न यष्टे न हुते रमामि ॥ 5

अथ खलु भगवानायुष्मन्तमुरुविल्वाकाश्यपं गाथाये प्रत्यभाषे ॥

मोहन्ते जुहितो अपि मोहन्ते सो तपो कृतो ।
यं जहे पश्चिमे काले जीर्णां व उरगो त्वचं ॥

अथ खल्वायुष्मानुरुविल्वाकाश्यपो भगवन्तं गाथाये प्रत्यभाषे ।

मोहं नो जुहितो अपि मोहं मे सो तपो कृतो । 10
यं जहे पश्चिमे काले जीर्णां व उरगो त्वचं ॥
अपीहि यज्ञेषु च विप्रमुच्यति
रतिं च मे आसि पुरे अजानतो ।
अन्धस्य जातीमरणानुसारिणो
अपश्यतो उत्तममच्युतं पदं ॥ 15
सो दानि पश्यामि अनाविलं पदं
सुदेशितं नागवरेण तायिना ।
अत्यन्तनिष्ठापदमास्पृशे अहं
संसारजातीमरणं प्रहाय ॥
बहू सत्वा विहन्यन्ति करोन्ता विविधां तपां । 20
निष्ठां अनधिगच्छन्ता अवितीर्णकथंकथा [405b] ॥

2. M etahu tena dṛ° BM °nuprâyakaṁ a ° shvaçaktaṁ | . — 4. BM °bhâvam anva(M °m anya)etheyaṁ ta° B °hute na ra°.

6. B °bhagavâṁn âyu°. — 7. M °juhute agni mohaṁ sastapo°. — 8. BM °jîrṇṇo ca u° M °ragatva°. — 9. M °khalu âyu°. — 10. B mohu no ju° M mohan te juhute agni mohan te so°.

11. BM °jîrṇṇo ca u° M °ragatva°. — 12. B °ccati | 1°. — 14. B °jâtimaraṇâ°.

16. BM °ni paçyati a° B °suvisitaṁ° M °suviçitaṁ nâgabalena tâyinâṁ | . — 18. BM °padam âdṛiçe dvaya saṁsâ° B °timaraṇadvayâya | M °timaraṇâdvayâya | . — 20. BM bahu sa° M °tvâ vihaṁnyati karonti pûjâṁ vividhâ tapâsâṁ | B °rontâṁ vividhâ tapâṁ | .

21. M nishṭhâ anâdigacchaṁtâ avicirṇṇaṁ kathaṁ° B °cchantâṁ avicirṇṇa° B °thâ (fol. 405b) di°.

दीर्घरात्रं क्लिशितो स्मि दृष्टिसंदामसंदितो ।
सर्वग्रन्थेषु मे भगवां परिमोचेसि चक्षुमां ॥

शास्ता मे भगवां श्रावको हं अस्मि सुगते ॥

अथ खल्वायुष्मानुरुबिल्वाकाश्यपो उत्थायासनातो एकांसमुत्तरासंगं कृत्वा
5 दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तं
त्रिष्कृत्तं प्रदक्षिणीकृत्वा भगवतो पृष्ठतो अस्थासि भगवन्तं मोरहस्तेन वीजयमा-
नो ॥ अथ खलु तेषां मागधकानां ब्राह्मणगृहपतिकानां एतदभूषि । उरुबिल्वा-
काश्यपो श्रमणे गौतमे ब्रह्मचर्यं चरति ॥

अथ खलु भगवां तेषां मागधकानां ब्राह्मणगृहपतिकानां धार्म्यां कथां कथामये ॥
10 रूपं ब्राह्मणगृहपतयो उत्पद्यति पि निरुध्यति पि वेदना उत्पद्यति पि निरुध्यति
पि संज्ञा उत्पद्यति पि निरुध्यति पि संस्कारा उत्पद्यन्ति पि निरुध्यन्ति पि विज्ञानं
उत्पद्यति पि निरुध्यति पि ॥ आर्यश्रावको च ब्राह्मणगृहपतयो रूपं उत्पादव्य-
यधर्मो ति समनुपश्यन्तो वेदना संज्ञा संस्कारा विज्ञानमनित्यन्ति समनुपश्यति ।
रूपमनित्यन्ति समनुपश्यन्तो वेदना संज्ञा संस्कारा विज्ञानमनित्यन्ति समनुपश्यन्तो
15 रूपं दुःखं ति समनुपश्यन्तो वेदना संज्ञा संस्कारा विज्ञानं दुःखं ति समनुपश्यन्तो रूप-
मनात्मेति समनुपश्यति वेदना संज्ञा संस्कारा विज्ञानं अनात्मेति समनुपश्यति ॥
सो रूपं अनात्मेति समनुपश्यन्तो वेदना संज्ञा संस्कारा विज्ञानं अनात्मेति समनु-

1. M °kiliśasya dṛiṣhṭiṁ saṁdā° B °liśhṭasya dṛi° BM °ditā | . — 3. M °smin sugate | . — 4. M °pya bhagavato pādau° B °ditvā bhagavantaṁ trikshuttaṁ° M °trishkṛityaṁ pra° BM °sthāsi || bha° M °haste vi° B °vijiyamāno || .

7[1]. B °shāṁ mādha°. — 7[2]. M °çravaṇo gautama bra° B °çramaṇe gau°. — 9. M °shāṁ māgaudhakānāṁ brā ° dhāmyān kathāṁ°.

10. M °yo utpadyati pi niruddhyati pi saṁjñā utpādyati pi saṁskā utpādyati pi niruddhyati pi vijñānam utpadyati pi niruddhyati pi | B °vijñānaṁ utpadyanti pi nirudhyanti pi ā°. — 12. M āryyo çrāvako ca brā° BM °dharmo(M °rme)ti samanupaçyati || ve° M °vijñāna ani° BM °paçyanti rū°. — 14. BM rūpam anityanti samanupaçyanto | vedanā saṁjñā saṁskarā vijñānam anityanti samanupaçyanto | rūpaṁ duḥkhaṁ ti(M °khan ti) samanupaçyanto(M °nti | ) ve ° duḥkhaṁ(B °khaṁ ti) samanupaçyanto(M °nti) rūpam anātmeti(M °paṁ duḥkhaṁ) samanupaçyanti(M °nto) | vedanā saṁjñā saṁskārā vijñānaṁ anātmeti(M °naṁ duḥkhaṁ ti) samanupaçyanti(M °nto) | .

17. M rūpam anātmeti samanupaçyanti | vedanā saṁjñā saṁskārā vijñānam ātmeti samanupaçyanti so rūpam anātmeti samanupaçyanto | saṁjña saṁskārā vijñānam anātmeti samanupaçyanto | rūpam udaya° B so rūpaṁ anātmeti samanupaçyanti saṁjñā saskārā vijñānaṁ ° çyanto | rūpam u ° yaṁ ti jānāti rū°.

पश्यन्तो रूपसमुदयव्ययं ति प्रजानाति । रूपसमुदयव्ययं प्रजानन्तो वेदना संज्ञा
संस्कारा विज्ञानसमुदयव्ययन्ति प्रजानाति । प्रजानन्तो रूपमनित्यन्ति प्रजानाति ।
प्रजानन्तो वेदना संज्ञा संस्कारा विज्ञानमनित्यन्ति प्रजानाति । प्रजानन्तो रूपं
दुःखन्ति प्रजानाति । प्रजानन्तो वेदना संज्ञा संस्कारा विज्ञानं दुःखं ति प्रजा-
नाति । प्रजानन्तो रूपमनात्मेति प्रजानाति । प्रजानन्तो वेदना संज्ञा संस्कारा 5
विज्ञानं चनात्मेति प्रजानाति । प्रजानन्तो किंचिल्लोके न उपादीयति । अनुपा-
दीयन्तो प्रत्यात्ममेव परिनिर्वायति । क्षीणा मे जातिरुषितं ब्र[406*]ह्मचर्यं कृतं
करणीयं नापरमित्थत्वमिति प्रजानाति ॥

अथ खलु तेषां मागधकानां ब्राह्मणगृहपतिकानां एतदभूषि ॥ यतो किल भो
रूपमनात्मा वेदना संज्ञा संस्कारा विज्ञानमनात्मा अथ को तर्हिं कारको वा 10
कारापको वा उत्थापको वा समुत्थापको वा निक्षेपको वा यो इमां संस्कारां
आदीयति वा निक्षिपति वा यस्मिं संस्कारा शून्या अनात्मनीया आत्मेन वा
आत्मनीयेन वा ॥ अथ खलु भगवां तेषां मागधकानां ब्राह्मणगृहपतिकानां इम-
मेवरूपं चेतसो परिवितर्कमाज्ञाय भिक्षूनामन्त्रयति ॥ प्रज्ञपेति भिक्षवो बालो
अभ्युपगतो अनात्मा वेदना संज्ञा संस्कारा विज्ञानो मे आत्मा न च पुनरहं एवं 15
वदेमि । अहं सो अत्र कारको वा कारापको वा उत्थापको वा आदीयको वा
निक्षेपको वा यो इमां च संस्कारान्निक्षिपति अन्यां च उपादीयति अन्यत्र ॥ अथ
खलु संस्कारा एव उत्पद्यन्ति संस्कारा एव निरुध्यन्ति ते च सहेतुका उत्पद्यन्ति
सहेतुका एव निरुध्यन्ति ॥ सहेतुका संस्कारप्रतिसंधिर्भिक्षवस्तथागतो आत्मा ति

1. B rūpam udavya* BM *jñānam udavyayanti prajānanto(M *jānāto) | . — 2. BM rū-
pam a*. — 3[1]. M *saṁjñā saskāro vi* BM *jānāti pra*. — 4. BM *nto | rū *.nāti pra*
— 5[1]. M *nto | rūpanātme* BM *nāti pra*. — 5[2]. BM *nto | ve * jānāti prajānantā
(M *nto || ) rūpam anityatā(M *manityate)ti prajānāti prajānanto vedanā saṁjñā saṁ-
(B *jñāsa)skārā vijñāna(B *naṁ) anityatā(M *nityate)ti prajānāti(M *nāni) pra*.

6[1]. BM *nto | kaṁci*. — 7. M *kṛitakaraṇi* B *ṇiyaṁ nāpari*. — 9[1]. B *bhūṣhit | .
— 9[2]. M anupādīyante yataḥ ki * rūpam ātmā ve * tmā artha kā ta* B *tha tā tarhi*
M *rhi kārako vā karopako vā utthāyako vā samu* B *utthāyako va samutthāyako vā ni-
kshepako vā yo | i* M *imāṁ saṁskārā ādī* BM *yasya me * nyā anātmanīyo ātme*.

13. B *gṛihapatikānāṁ | i* M *idam e * cetasapari * bhikshuṇāmantra*. — 14. BM pra-
jñapti bhi* M *kāro abhyu* B *to anātma vedanā saṁjnā saskā* M *saṁskāro vi*.

16. BM ayaṁ so atra kārako vā kāra(M *va kālā)pako(B *pakā) vā utthāyako vā ādīya-
(M *dīpa)ko vā ni* M *kshipati || anyāṁ upā* BM *dīyati || atha*. — 17. BM atha khalu
nānyatra saṁskārā eva u(M *vevaṁ u)tpadyanti saṁskārā evaṁ(B *eva) nirudhyu(M *ru-
ddhya)nti te* M *ruddhyaṁti sa*. — 19. BM *akārā pratisaṁdhi(M *sandhi)r bhi*
M *kshavaḥ tathā* BM *gato ātmā(M *tmo)ti ādityakāni(M *kāmi) satvā*.

आदीयको ति ॥ सत्वानां च्युतोपपादं प्रज्ञपयामि ॥ पश्याम्यहं भिक्षवः दिव्येन
चक्षुषा विशुद्धेनातिक्रान्तमानुष्यकेन सत्वां च्यवन्तां उपपद्यन्तां सुवर्णां दुर्वर्णां सुग-
तां दुर्गतां हीनां प्रणीतां यथाकर्मोपगां सत्वां प्रजानामि न च पुनः अहं एवं वदा-
मि । अहं सो अत्र कारको वा कारापको वा उत्थापको वा समुत्थापको वा
5 आदीयको वा निक्षेपको वा यो इमां च संस्कारां निक्षिपति अन्यां च उपादीय-
ति अन्यत्र । अथ खलु संस्कारा एव उत्पद्यन्ति संस्कारा एव निरुध्यन्ति ॥
ते च सहेतुप्रत्यया उत्पद्यन्ति सहेतुप्रत्यया निरुध्यन्ति ॥ सहेतुदृष्टी भवाभवदृष्टी ॥
सहेतुसंस्कारसमुदयं भिक्षवो यथाभूतं सम्यक्प्रज्ञया पश्यतो या भवदृष्टि शाश्वत-
दृष्टि सा न भवति । सहेतुसंस्कारनिरोधं च भिक्षवः यथाभूतं सम्यक्प्रज्ञया
10 पश्यतो या विभवदृष्टि उच्छेददृष्टि सापि न भवति । तेन भिक्षवो उभौ अन्तौ
अनुगम्य मध्येन तथागतो [406b] धर्मं देशयति ॥

अविद्याप्रत्यया संस्कारा संस्कारप्रत्ययं विज्ञानं विज्ञानप्रत्ययं नामरूपं नाम-
रूपप्रत्ययं षडायतनं षडायतनप्रत्ययं स्पर्शः स्पर्शप्रत्यया वेदना वेदनाप्रत्यया
तृष्णा तृष्णाप्रत्ययमुपादानं उपादानप्रत्ययो भवो भवप्रत्यया जातिर्जातिप्रत्यया
15 जरामरणशोकपरिदेवदुःखदौर्मनस्योपायासा । एवमस्य महतो दुःखस्कंधस्य समु-
दयो भवति ॥ इति पि अविद्यानिरोधात्संस्कारनिरोधः संस्कारनिरोधाद्विज्ञा-
ननिरोधो विज्ञाननिरोधान्नामरूपनिरोधो नामरूपनिरोधात् षडायतननिरोधः
षडायतननिरोधात्स्पर्शनिरोधः स्पर्शनिरोधाद्वेदनानिरोधो वेदनानिरोधात्तृ-

1[1]. BM °pâdiṁ pra° B °yâmi paçyâ°. — 1[2]. B °bhikshaḥ di° M °kshusho viçu° B °ddhenâpikrâ° M °shyakena satvânâṁ çya° B °çyavantâm upapadya° BM °ntâṁ suvarṇṇâṁ duvarṇṇâṁ su° M °hinâṁ prahiṇâṁ praṇi° jânanti | na ca pu° B °jânâti na ca punaḥ ahaṁ punar evaṁ°. — 4. BM °ko vâ kârapako vâ u° skârâ bhikshipa(B °kshiya)ti anyâ ca u° M °yati || B °yati anyatra atha°.

6. M °khalvatra saṁskârâ evam utpa° B °skârâ evam vadâmi utpa° skârâ evaṁ ni° M °rudyanti | . — 7[1]. M te ca sahetukapratyayâ u° tukapra° B °rudhyanti sa°. — 7[2]. M sahetukadṛishṭi bhavâbhavadṛishṭi sa°. — 8. BM sahetu(M °tuka)saṁskârâḥ samu° M °kshavaḥ yathâbhûtaṁ saṁmya° BM °çyati | yâvad dṛishṭi(B °shṭi çâçvatadṛishṭi) sâ na(M °naṁ) bhavati sa°. — 9. B °bhûtaṁ saṁmya° sâpi na bhavati te°. — 10. BM °nugamyaṁ madhye° B °thâgatâ (*fol.* 406b)dha°.

12. M saṁskârapratyayaṁ vijñânâ vijñânapratyayaṁ nâmarûpa nâmarûpaṁpratyayaṁ shaḍâyatane shaḍâyataṇaṁpratyayaṁ sparça spa° BM °rçapratyayâ vedanâ(B °dano) vedanâ(M °na)pratyayâ tṛishṇâ tṛishṇâ(M °tṛishṇa)pratyayâm u(M °yâ u)pâdânam upâdânapratyayâ bhavo° M °bhavapratyayâ jâti jâtipratyayâ ja° daumana° BM °sâ e°. — 15. M °khaskandhasya sa°.

16. M ityapi avidyâ° t saṁskâro nirodha saṁskâ° B °d vijñânaṁnirodho vijñâ° M °d vijñânanirodhaḥ vijñânanirodhât nâmarûpanirodhaḥ nâmarû° d vedanânirodhaḥ ve° jjâtinirodhaḥ jâ° j jarâmaraṇanirodha ço° BM °sâ nirudhya°.

ष्णानिरोधः तृष्णानिरोधादुपादाननिरोधः उपादाननिरोधाद्भवनिरोधः भव-
निरोधाज्जातिनिरोधो जातिनिरोधाज्जरामरणनिरोधो जरामरणनिरोधा
शोकपरिदेवदुःखदौर्मनस्योपयासा निरुध्यन्ति । एवमस्य केवलस्य महतो दुःख-
स्कन्धस्य निरोधो भवति ॥

इदमवोचद्भगवान् राजगृहे विहरन्तो यष्टिगिरिस्मिं यष्टीवने उद्याने इमस्मिंश्च 5
पुनर्व्याकरणे भाष्यमाणे राज्ञो श्रेण्यस्य बिम्बिसारस्य तत्रैवासने निषण्णस्य विरजं
विगतमलं धर्मेषु धर्मचक्षुर्विशुद्धं एकादशानां च नयुतानां विरजं विगतमलं धर्मेषु
धर्मचक्षु विशुद्धं ॥ ये पि ते द्वादशनयुता गृहपाला यानपाला ते पि ततो
पश्चाद्बुद्धं शरणं गता धर्मं शरणं गताः संघं शरणं गता ॥ आत्तमना ते भिक्षू रा-
जा श्रेण्यो बिम्बिसारो मागधका च ब्राह्मणगृहपतिका भगवतो भाषितमभिनन्दे ॥ 10

भिक्षू भगवन्तमाहन्सुः । किस्य भगवं कथं इमेन राज्ञा श्रेणियेन बिम्बिसारेण
इमस्य पुरोहितस्य सकाशातो भगवतो श्रवणगतेन विपुलो आच्छादो दिन्नो ॥
भगवानाह ॥ न भिक्षवो एतरहिमेव एतेन राज्ञा श्रेण्येन बिम्बिसारेण पुरोहितस्य
सकाशातो मम श्रवणगतेन विपुलो आच्छादो दिन्नो अन्यदापि दिन्नो ॥ भिक्षू
आहन्सुः ॥ अन्यदापि भगवन् ॥ भगवानाह ॥ अन्यदापि भिक्षवो ॥ 15

भूतपूर्वं भिक्षवः अ[407a]तीतमध्वानं नगरे मिथिलायां विदेहजनपदे महारा-
जधान्यां राजा अरिन्दमो राज्यं कारेसि धार्मिको धर्मराजा सुसंगृहीतपरिजनो
दानसंविभागशीलो महाबलो महावाहनो । तस्य षष्टि नागसहस्राणि सर्वालंका-
रविभूषितानि षष्टि अश्वसहस्राणि सर्वालंकारविभूषितानि षष्टिं रथसहस्राणि
द्वीपिचर्मपरिवाराणि सिंहचर्मपरिवाराणि सर्ववैजयन्तिकानि समन्दिघोषाणि 20

5. BM °he viharati(B °ti | ) a° B °ntaraçirismiṁ ° BM °dyâne | i° M °smiṁ ca pu° mbi-
çâlasya ° BM °çânâṁ ca nayutâ° B °rmacakshuṁshi vi° BM °çuddhâni ||.

8. BM °grapâla yânapâlo te pi ° M °d buddhaçaraṇaṁ gataḥ dharmaçaraṇaṁ gataḥ
saṁghaçaraṇaṁ gataḥ B °ddhaṁ çaraṇaṁ gato dha ° ghaṁ çaraṇaṁ gatâ â°. — 9. M âtta-
mavâ tu bhikshu rà° B °manâ to bhi° M °mbiçâlasya mâ° tam abhyanande ||.

11[a]. BM bhikshu bha° M °ru âhaṁsuḥ || B °nsuḥ ka°. — 11[b]. BM kasya bhagavaṁ ka-
(M °van ka)thaṁ° M °yena bimbiçâlena i° B °çramana° BM °pulena â°. — 13[b]. M na bhi-
kshavaḥ ati° (l. 16) B° vo etarahiṁm evaṁ ete° tasya mama çramaṇa ° âcchâ dinna anya°.

15[b]. B °vo bhû°. — 16. BM °lâyâṁ videha(B °haṁ)janapade mahâjanapadâyâṁ râjâ
minda° M °jyaṁ kârayesi dhâ° B °si | dhâ° BM °rijana dâ°. — 18. BM ta(M tasya)
shashṭhiṁ(M °shṭhiṁ) nâ ° sarvâlaṁ(B °rvâraṁ)kâra(B °kâlera)bhûshitâni shashṭhi-
(M °ni | shashṭhi)m açva° B °laṁkâlavibhû° M °laṁkârabhû° BM °shitâni | shashṭhiṁ
rathasahasrâṇi(B °ni | ) dvî° B °ghoshâni me° M °hâpravâlâni a° B °shashṭhiṁ dhe°
BM °hini ta°.

महाप्रवाराणि उच्छ्रितध्वजपताकानि षष्टिं धेनुसहस्राणि वत्सदोहिनी । तथा
षष्टिं कन्यासहस्राणि षष्टिं पर्यंकसहस्राणि सौवर्णमयानि रूप्यमयाणि रत्नमया-
णि ॥ अरिन्दमस्य खलु पुनर्भिक्षवो राज्ञो षष्टिं सुवर्णपारिसहस्राणि षष्टिं रूप्य-
पारिसहस्राणि अभूंसुः ॥ अरिंदमस्य खलु पुनर्भिक्षवो राज्ञो पितृपितामहानि
5 षष्टिं निधिसहस्राणि षष्टिं नगरसहस्राणि ऋद्धिस्फीतानि अकण्टकानि ॥ अरिं-
दमस्य राज्ञो श्रोणो नाम पुरोहितपुत्रो अभूषि त्रयाणां वेदानां पारगो अक्षरप्र-
भेदानां इतिहासपंचमानां सनिघण्टुकैटभानां अनुपदकव्याकरणकुशलो ब्राह्मणवे-
देषु दश कुशलां कर्मपथां समादायवर्ती कामेषु आदीनवं दृष्ट्वा अनुहिमवन्तं गत्वा
ऋषिप्रव्रज्यां प्रव्रजितो ॥ तेन दानि बाहिरकेण मार्गेण युज्यन्तेन घटन्तेन व्याय-
10 मन्तेन चत्वारि ध्यानान्युत्पादितानि पञ्चाभिज्ञा च साक्षीकृता महर्द्धिको महानु-
भावो ऋषी संवृत्तो ॥

अथ खलु भिक्षवो श्रोणस्य ऋषिस्य दीर्घस्याध्वनो अत्ययेन एतदभूषि ॥ राजा
अरिन्दमो मम दारकवयस्यो सहपांशुक्रीडितो तस्य चापि चतुराशीति वर्षसहस्रा-
णि महाराज्यं कारयन्तस्य समयो खलु राज्ञो अरिन्दमस्य प्रव्रज्याये यं नूनमस्याहं
15 संचोदयेयं ॥ अथ खलु भिक्षवो श्रोणको ऋषिस्तद्यथापि नाम बलवां पुरुषो
संमिञ्जितां वा बाहां प्रसारये प्रसारितां वा बाहां संमिंजये एत्तकेन अनावीतिहारे-
णानुहिमवंतातो आश्रमातो वैहायसमभ्युद्गम्य महादेवाम्रवने प्रत्यस्थासि ॥ अ-
द्राक्षीद्भिक्षवो अरिन्दमस्य ब्राह्मणपुरोहितो राजाचार्यः श्रोणकं ऋषिं महादेवा-
म्रवने अन्यतमस्मिं आम्रमूले निषण्णं दृष्ट्वा च पुनर्येन श्रोणको ऋषी तेनोपसंकमित्वा
20 श्रोणकमृषिं साधु च सुष्ठु च प्रतिसंमोदित्वा श्रोणकं ऋषिं अभिवादेत्वा येन

1. B ta sha° M tāḥ shashṭhiṃ kaññyā ° shashṭhim paryaṅka° B °shashṭhiṃ paryeka° ntamayāni a°. — 3. B ariṃda° M °jño shashṭhiṃ su° B °rūpamayāni sahasrāṇi shashṭhi rū° M °shashṭhiṃ rū°. — 4. M ariṃdamasya ° hānidhiṃ shashṭhiṃ sahasrāṇi shashṭhiṃ na° B °shashṭhiṃ nidhi ° garasahasrāṇi riddhisphitāni akaṃṭhakāni || M °riddhasphitāni akaṇṭhakāni || . — 5. M arinda° B °sya rājño çreṇo° M °jño çreṇya nāma° BM °shi trayāṇāṃ ca ve° M °ge saksha° BM °pañcamānāṃ sanirghaṃṭha(M °rghaṇ tha)kaiṭabhānāṃ anupada(B °pado)ke vyā ° çaleshu brāhmaṇadeveshu° M °lāṃ kakarma°.

9. M °rakena mārgeṇa pūjyatena gha° B °ñcābhijñā ya sā° M °ṛishiṇāṃ saṃ°.

12[1]. BM °vo çreṇyasya ṛi°. — 12[2]. M rājā arinda° B °krīḍito° M °to tasya codya caturaçī ° ntasya samaye kha ° jño arinda° B °ndasya pra° M °nūnaṃ tasyā°. — 15. M °kshavaḥ çroṇa ṛishiḥ tadya° B °vo çreṇako ṛi° M °sho saṃmiñji vā° BM °sāritāṃ bāhāṃ saṃmiñjaye(M °ye | ) e° M °vītihāre ° himavantāto A ° devāpravane°.

17. M °vo rājño arindamasya brāhmaṇo pu° BM °cāryaḥ çre(M °ryyo çro)ṇakaṃ ṛishiṃ mahādevamravane° B °smiṃ āmrava(*fol.* 407ᵇ)ne anyatamasmiṃ āmramūle nishaṇṇo dṛi° M °sharṇṇo dṛi° B °r yena çreṇako° BM °nopasaṃkramitvā çreṇaka° B °m ṛishiṃ sā° M °sushṭhu ca pra ° thilāyaṃ te ° jño arinda ° dandye B °dandya ta°.

मिथिला तेन मक्रमे राज्ञो अरिन्दमस्य वेदनाय ॥ तद्दहो एव च विचवः राज्ञो अरिन्दमस्य कामेषु व्याकुलना उत्पद्ये योनिशो मनसिकारो श्रोणकस्य ऋषिस्य दर्शनकामता उद्पासि ॥ अथ खलु विचवो राजा अरिन्दमस्ताये वेलाये इमां गाथामध्यभाषित् ॥

तस्य ग्रामवरं देमि नारियो च अलंकृता । 5
यो मे श्रोणकमाख्यासि सहायं पांसुक्रीडकं ॥
तस्य च ब्राह्मणो आसि कुलीनो अध्यापको ।
सुदुःखिदुर्मनं दृष्ट्वा इदं वचनमब्रवीत् ॥
मह्यं ग्रामवरं देहि नारीयो च स्वलंकृता ।
अहं श्रोणकमाख्यास्यं सहायं पांसुक्रीडकं ॥ 10
तुह्यं हि ताव विजिते तुह्यं उद्यानभूमिये ।
पुष्पिता फलिता आम्रा तत्र सो आसते ऋषी ॥

ततो स राजा त्वरमाणो अमात्यमध्यभाषति ॥

चित्रमश्वाकं योजय कृत्वा नागां अलंकृता ।
भेरीपटहा वाद्यन्तु एको शंखो च भध्यमः ॥ 15
ऋषयस्य द्रष्टुमिच्छामि श्रोणकं पर्युपासितुं ।
नानावृक्षफलोपेतं प्रयासि . . . वनं ॥
राजा . . . . . . . . . . . . . . . ।
. . . . . . . . श्रोणको यत्र ध्यायते ॥
तं च सो ऋषिं अद्दर्शि सहायं पांसुक्रीडकं । 20
दृष्ट्वा च श्रोणकं तस्मिं इदं वचनमब्रवीत् ॥

1. M °jño anindu° BM °shisya vāçucakāmatā uda(M °du)pāsi ‖ . — 3. M °kahavaḥ rājā anindamo tāye ve° gāthāṁ adhyabhāshe ‖ . — 5. BM kasya grāmavalāṁ de° B °mi nori°. 6. BM ko me° M °yaṁ pāṁçukri° BM °ḍanaṁ ‖ . — 7. B °ṇo açi ko° BM °ko mantradharo su°. — 8. BM °duḥkhi durma° M °ida va°. — 9. BM °grāmavalaṁ de° M °svaraṁkṛitā ‖ . — 10. M °khyāsi sahāyaṁ pāṁçukri° B °yaṁ prāmsu° BM °ḍanaṁ ‖ . — 11. B tuhya etā ca vijite tuhya udyā° M tuhyaṁ etāṁ ca vijite tuhyaṁ udyā°. — 12. BM °so āsyate° M °ṛishiḥ ‖ . — 13. M tataç ca rā° B tato ca rā° M °amātyam adhyebhā°. — 14. BM °pram asmāṁ yo° M °jaye yaṁ kṛitanā nāgā alaṁkṛitāḥ ‖ . — 15. B °ṭaha vā° M °ṭaha vādyāntu e° B °ekaçaṁkho ca dharmā tu ca va°.
16. M bhruvasya dra° B °yasya dra°. — 17. BM °prayāsi buddhaçānanaṁ ‖ . — 18. BM rājā çro°. — 19. BM °yate taṁ°. — 20. B taṁ so ṛishiṁ ‖ dṛishṭvā sahā° M taṁ sa ṛishiṁ ‖ dṛishṭvā sahāyaṁ ṛishiṁ dṛishṭvā sahāyaṁ pāṁçukri° B °ḍanaṁ dṛi°.
21. B °smiṁn idaṁ°.

कृपणो व कथं भिक्षो मुण्डसंघाटिको धनी ।
समातापितृको ध्यायं वृक्षमूले पि तिष्ठसि ॥

अथ खलु भिक्षवो श्रोणको ऋषि राजानमरिन्दमं गाथाये प्रत्यभाषे ॥

न राज कृपणो भवति धर्मकायस्य श्रियापि च ।
5 यो च धर्मं समुपक्रम्य तद्धर्मे न रतो नरो ।
स राज कृपणो भवति ज्योतिष्टोमपरायणो ॥

अथ खलु भिक्षवो राजा अरिन्दमो श्रोणकं ऋषिं गाथाये प्रत्यभाषे ॥

कथं भवां सुखं शयति वनमान्तस्मिं श्रोणक ।
कथं अरण्ये विहरन्तो एकाकी रमसे कथं ॥
10 कथं भगवं कायस्य परितापो न विद्यते ।
रक्षां व ते संविधेमि अथ नगरं नयामि ते ॥

अथ खलु भिक्षवः श्रोणको ऋषि राजानमरिन्दमं गाथाये प्रत्यभाषे ॥

एकस्य चरतो राज किं मे राष्ट्रं करिष्यति ।
प्रथमं खु भद्रमधनस्य अनागारस्य भिक्षुणो ॥
15 यो हं ग्रामातो प्र[408a]क्रमामि राष्ट्राणि निगमा तथा ।
अनपेक्षो व प्रक्रमामि न कोचिदुपलक्ष्यति ।
द्वितीयं खु भद्रमधनस्य अनागारस्य भिक्षुणो ॥
पथेन गच्छमानस्य ये भोन्ति परिपन्थका ।
पात्रचीवरमादाय सुखं गच्छति सर्वतो ।
20 तृतीयं खु भद्रमधनस्य अनागारस्य भिक्षुणो ॥

1. B kṛipaço va tatvaṁ bhi° M °ṇo va taho tatvaṁ bhi° dhanaṁ | B °dhana | . — 2. M °le ca ti° BM °shṭhati || . — 3. M °ṛishi rājānaṁ anindamaṁ gā°. — 4. BM na rājā kṛi° B °kṛipano bha° dharmo kâyemasya° M °rmakâmasya çreṇyā || . — 5. M °ca dharmaṁ upasaṁkramya taṁ dharmeṇa ra° B °mya tân dharmeṇa ra° M °naraḥ | .
6. B sa rājaṁ kṛi° M sa rājā kṛi° BM °jyotistama° M °yaṇaḥ || . — 7. M °anindamo°. — 8. BM kahiṁ bhagavaṁ° M °ntarasmiṁ°. — 9. B °aranyo vi°. — 10. M °gavan kâmesho pari° B °kâmeshu paritâyo na vidyate ra°.
11. BM rakshâ ca tena saṁbibhemi(B °mi || ) a°. — 12. M °ṛishiḥ rājânam aninda°. — 13. M °carate rājaṁ kim me rāshṭraṁ° B °to rājā kiṁ° M °shyati | . — 15. BM °kramesi râ° mâ tava | .
16. B °pekshâ ca prakramesi na ko° M °pekshâmi prakrame ca kvacid upaṁ ra°. — 18. M *passe les trois dernières lignes de cette page et les deux premières de la suivante.*

मिथिलायां दह्यमानायां नास्य दह्यति किंचन ।
चतुर्थं खु भद्रमधनस्य अनागारस्य भिक्षुणो ॥
नते कोष्ठस्मिं ओसरन्ति न कुंभेन कुलोपकं ।
परितिष्ठति एषाणो तेन यापयन्ति सुव्रता ।
पंचमं भद्रमधनस्य अनागारस्य भिक्षुणो ॥ 5
नानाकुले प्रव्रजिता नानाजनपदाश्रिता ।
अन्यमन्यं प्रियायन्ति पश्य धर्मस्य धर्मतां ॥

अथ खलु भिक्षवः राजा अरिन्दमो श्रोणकं ऋषिं गाथाये प्रत्यभाषे ॥

नित्यं खलु तेषां भद्रं येषां कीर्तेसि श्रोणक ।
वयन्तु गृद्धा कामेषु किं करिष्यामि श्रोणक ॥ 10

अथ खलु भिक्षवः श्रोणको ऋषी राजानं अरिन्दमं गाथाये प्रत्यभाषे ॥

उपमान्ते महाराज करिष्यन्तं शृणोहि मे ।
उपमाये इहैकत्या अर्थं जानन्ति पण्डिता ॥
भूतपूर्वं महाराज कुंजरो पष्टिहायनो ।
पतितो गिरिदुर्गेषु गंगावेगेन वुह्यते ॥ 15
तत्र काको विचिन्तेति अल्पप्रज्ञो अचेतसो ।
यानं इमं लब्धं भद्रं भद्रो यायाम अल्पको ॥
तस्य रात्रिं दिवं चापि तत्रासि नियतो मनो ।
खादन्तो नागमांसानि पिबन्तो भागीरथीजलं ।
पश्यन्तो वरचित्राणि उपयाति विहंगमो ॥ 20

2. B caturthasya bha°. — 3. BM nato koshṭi(M nate koshṭhe)smiṁ osa(M °sara)nti na kumbhu na kule pi yaṁ | . — 4. B °ti mushâṇâ tena° M °ti teshâṇâṁ tena°.

6. B °vrajito nânâja° BM °dâ çatâ(B °tâ | ). — 7. B anyamanya pri° °sya dharmatâ || . — 8. M °kshavo râjâ aninda° bhâsha. — 9. BM nityaṁ khu teshâṁ bhadra(M °dran te) ye° B °kîrttasi çroṇako M °ette | çroṇakâ | . — 10. M vayaṁ shu vṛiddhakâ° B °griddhakâ° M °shyâma çroṇakâ || .

11. M °ṇakâ ṛi° aninda°. — 12. BM uttamâ° B °n taṁ çruṇohi me | . — 15. BM °hyato | .

16. BM °prajñâ sacetaso | . — 17. M yânam idaṁ la° BM °dro vâyam analpako | . — 18. BM tatra râtriṁ° M °divaṁ tatra asya ni° B °trâsya nirato° M °mana. — 19. M khâdyanto || nâgamâni pi° B °banto ca bhâ° BM °girathaṁ | (M °thaṁ) jalaṁ. — 20. BM °upayânâ vi°.

